[अनेक[1] जातिशतसहस्रैः]ततः पश्चाद् भव्यो [7]-[भवत्याशुप्रत्ययलाभाय । परिनिर्व्वाणाय । तत्र । प्रयोगदूरतया पु][1]द्‌गलो गोत्र एव केवले स्थितो भवति । नावतीर्ण्णः । स भव्यो भवत्याशुप्रत्ययलाभाय । परिनिर्वाणाय[।]स निर्व्वाणायानारब्धप्रयोगदूरतया [दूरत्वात् प्रयोग[1]] कालदूरतया अयमुच्यते दूरे पुद्‌गलः ॥ आसन्ने[2] पुद्‌गलः । ..........................

---

1. Added by a separate hand in a footnote.
2. Sanskrit text containing this portion of Gotrabhūmi ending here is incomplete, for remaining portions of the text, see Appendix I.

*Chapter Two*

# अवतारभूमिः[1]

2B—2// //[7 b] यैः षड्भिर्भव्यो मृदुकुशल-
मूलसमन्वागतो मध्यकुशलमूलसमन्वागतः । अधि-
मात्रकुशलमूलसमन्वागतः । निष्ठाप्रायोगिको,
निष्ठागतश्च ।

**तत्र कतमो भव्य एव पुद्गलः** । यो गोत्रस्थान-
2A—3// (नं) चा(भि[2])//[1]ध्यायि(यी) तत्प्रथमतस्त-
थागतप्रवेदिते धर्मविनये श्रद्धां प्रतिलभते । या च
दृष्टिमृजूकरोति ।

**तत्र कतमो मृदुकुशलमूलसमन्वागतः** । यो गोत्र-स्थस्तेन वा तथागतप्रवेदिते धर्मविनये तत्प्रथमतः श्रद्धा प्रतिलब्धा भवति । यावद् दृष्टि ऋजूकृता [।] अयमुच्यते मृदुकुशलमूलसमन्वागतः [।]

---

1. The beginning portion of the text of the अवतारभूमि (अवतारस्वभावः and अवतारव्यवस्थानम्) is missing in the MS., for which, see Appendix I; Asaṅga defines अवतार as श्रद्धाप्रतिलम्भमधिपतिं कृत्वा आगारिकस्य दुश्चरितविवेकशिक्षापदसमादानम् । अनागारिकां वा प्रव्रजतः कामविवेकशिक्षापदसमादानम् । Bodhi., p. 57.
2. Ink rubbed off, letter indistinct.

**मध्यकुशलमू[2]लसमन्वागतो गोत्रस्थः**[1] पुद्गलस्तत्प्रथमतस्तथागतप्रवेदिते धर्मविनये श्रद्धां प्रतिलभ्य, यावद्दृष्टिमृजुं कृत्वा एकम्वा(कं वा), द्वे वा, सम्बहुलानि वा जन्मान्यभिनिर्व्वर्त्तयति । विशेषाये-(यैं)ति ।

[2]य[:]परैति । नो चरममात्मभावं प्रतिलभते । यत्र स्थितः परिनिर्व्वात्ययमुच्यते । **अधिमात्रकुशलमू[3]लसमन्वागतः पुद्गलः ।**

तत्र **कतमो निष्ठाप्रायोगिकः पुद्गलः ।** यः पुद्गलश्चरममात्मभावं प्रतिलभ्यास्रवक्षयाय सम्यगववादानुशासनीं, सद्धर्मश्रवणं वा प्रतिलभ्य सम्यगेव प्रयुज्यते । न चाध्मायि(यी ?)सर्व्वेण सर्व्वं सर्व्वथा प्रतिपद्यते । आस्रवक्षयमनुप्राप्नोति । न निष्ठां गच्छत्ययमुच्यते निष्ठाप्रा[4]योगिकः पुद्गलः ।

तत्र **निष्ठागतः पुद्गलः** कतमः [।] यः सम्यगावेदितः सम्यगनुशिष्टः । यदुतास्रवक्षयाय तथा तथा प्रतिपद्यते । यत् सर्व्वेण सर्व्वं सर्व्वथा आस्रवक्षयमनुप्राप्नोति । कृतकृत्यो भवति परमशीतीभावप्राप्तः [।] अयमुच्यते निष्ठागतः पुद्गलः ।।

तत्र **भव्यजातीयः पुद्गलो** गोत्रं निश्रित्य, गोत्रं प्रतिष्ठाय मृदूनि कुशलमूलानि प्रतिलभते । अवतीर्णश्च

1. It seems that यः has been omitted in the MS.
2. MS. omits here तत्राधिमात्रकुशलमूलसमन्वागतः पुद्गलः कतमः ।

भवति। सो[अ[1]]वतीर्ण्णो मृदूनि कुशलमूलानि निश्रित्य, प्रतिष्ठाय, मध्यानि कुशलमूलानि प्रतिलभते- तैश्चात्मानम्परिपाचयति। स तथा परिपच्यमानो मध्यानि कुशलमूलानि[6] निश्रित्य प्रतिष्ठायाधि- मात्राणि कुशलमूलानि प्रतिलभते। परिपक्वश्च भवति। सो[अ]धिमात्रकुशलमूलहेतुसमुदागतेना[ऽऽ]त्मभावप्र- तिलम्भेन यदा सम्भारञ्च समुदानयति। चित्तै- काग्रताञ्च स्पृशति। सम्यक्त्वञ्च न्याममवक्रामति। स्रोत आपत्तिफलम्वा, सकृदागामिफलं वा[अ]नागामि- फलम्वा साक्षा[7]त्करोति। नो त्वग्रफलमर्हत्वं- (त्वं)साक्षात्करोति। तदा निष्ठाप्रायोगिक[2] इत्युच्यते।

यदा तु सर्व्वक्लेशप्रहाणमर्हत्वं(त्वं) साक्षात्करोति। तदा **निष्ठागतो भवति।**

सैषा सादिमध्यपर्यवसाना[3] सर्व्वश्रावकचर्या षड्भिः पुद्गलव्यवस्थानैः सन्दर्शिता भवति। तत्र गोत्रेणादि[:] श्रावकचर्यायाः सन्दर्शितः। निष्ठाया[4](निष्ठया) [8] पर्यवसानं। तदन्येन मध्यं संदर्शितं॥

तत्रावतीर्ण्णानां पुद्गलानां किं परिमाणनियत- स्तुल्यश्च सर्व्वेषां कालो भवति। परिनिर्व्वाणाया-

1. Wayman reads यो, ibid, p. 65.
2. Wayman reads निष्ठ०, ibid, loc. cit.
3. Wayman suggests तैर्याचादि, ibid, op. cit.
4. Wayman reads निष्ठया, this reading seems to be more correct, but the MS. reads निष्ठाया.

होस्विदपरिमाणनियतः । अतुल्यनिश्चयः सर्व्वेषां कालो
2B—3// भवति । //[1] न परिनिर्व्वाणाय आहो नैषां परिमाण-
नियतः कालो नापि तुल्यः सर्व्वेषाम्परिनिर्व्वाणाय [।] अपि तु यथायोगमेषां यथाप्रत्ययलाभं परिनिर्व्वाणं वेदितव्यं । केषांचिच्चिरेण, केषांचिच्चातिचिरेण, केषांचित्पुनः क्षिप्रमेव परिनिर्व्वाणं भवत्यपि तु यो गोत्रस्थः पुद्गलः [स[1]] सर्व्वक्षिप्रं परिनिर्व्वाति । सो[अ]वश्यं त्रीणि जन्मान्यभि[2]निर्वर्त्तयति । एकस्मिन्नवतरत्येकस्मिं(स्मिन्)परिमुच्यते । एकस्मिं-(स्मिन्)जन्मनि परिपक्वो भवति । तत्रैव च परिनिर्व्वाति[2] । नो चेत् परिनिर्व्वाति । सो[अ]वश्यं शैक्षकालं करोति । परञ्च सप्तभवानभिनिर्व्वर्त्तयतीद-मुच्यते **अवतारव्यवस्थानं ।**

**अवतीर्ण्णस्य पुद्गलस्य कतमानि लिंगानि ।** इह गोत्रस्थः पुद्गलः अवतीर्ण्णमात्र एव यदा **जन्मान्तर-[3]परिवर्त्तेनापि स्मृतिसंप्रमोषं प्रतिलभते ।** आशास्तरि धर्म्मविनये वा सति सम्विद्यमाने[अ]पि दुराख्याते धर्म्मविनये स्वाख्याते[अ]प्यनेकपर्यायेण दुराख्यातस्य धर्म्मविनयस्य वर्ण्णं स्तुतिमानुशन्सं(शंसं) श्रुत्वा नावतरति । न प्रव्रजति । प्रव्रजितो[अ]प्यवतीर्ण्णो

1. Added by us.
2. cp. Śatapatha Br., XI.2.1.1 : त्रिर्हं वै पुरुषो जायते, एतन्न्वेव मातुश्चाधि पितुश्चाग्रे जायते, अथ यं यज्ञ उपनमति स यद्यजते तद्द्वितीयं जायते, अथ यत्र म्रियते यत्रैनमग्नावभ्यादधाति, स यत्ततः सम्भवति तत्तृतीयं जायते ॥

लघु लघ्वेव प्रत्युदावर्त्तते । प्रकृत्यैव चास्य तत्रारोचक: संति[4]ष्ठते । मधुनि जातस्येव च प्राणकस्य[1] शुक्तिप्रक्षिप्तस्य कामोपभोगिनो वा कर्द(न्दे ?)ण, स्यन्दनिकायाम्वा प्रक्षिप्तस्य यथापि तत्पूर्व्वकेणैव हेतुबलाधानेन स्वाख्यातस्य वा पुनर्धर्म्मविनयस्य नैव वर्ण्ण[ · ]स्तुतिमानुशन्सं(शंसं) शृणोति वा कण्डति वा । अल्पमात्रमवरमात्रम्वा श्रुत्वा, अश्रुत्वा वा लघु लघ्वेवावतरति प्रव्रज[5]ति वा [।] तथा प्रव्रजितश्चावतीर्ण्णो न प्रत्युदावर्त्तते । प्रकृत्यैव चास्य तत्र रुचि: संतिष्ठते । मधुप्राणकस्य वा मधुनि[2], कामोपभोगिनो वा प्रणीतायां कामचर्यायां । यथापि तत्पूर्व्वकेणापि हेतुबलाधानेन । इदं प्रथममवतीर्ण्णस्य पुद्गलस्य लिङ्गम् ॥

पुनरपरमवतीर्ण्ण: पुद्गल:(लो)न तावद्विसंयुक्तो भवत्यपा[6]यक्षणगमनीयै: क्लेशै: । न च पुनरक्षणेपूपपद्यते । **अवतीर्ण्णं च पुद्गलं सन्धायोक्तं भगवता ।**

*सम्यग्दृष्टिरधिमात्रा लौकिकी यस्य विद्यते ।*
*अपि जातिसहस्राणि नासौ गच्छति दुर्गतिम् ॥*

स यदा अधिमात्रेषु कुशलमूलेषु प्रतिष्ठो भवत्यनुपूर्व्वेण परिपाकगमनीयेषु तथा **नाक्षणेषूपपद्यते** [।]

---

1. cp. मधुविद्या in Br. Up., II. 5; Śatapatha Br., XIV.I.4. 13 Sq. (Madhu-brāhmaṇa); see also XIV.5.5; *vide*, Uttaratantra, I.93, 102-4, II.9.
2. MS. slightly damaged, letters illegible.

[7]न त्वन्येषु । इदं द्वितीयमवतीर्ण्णस्य पुद्गलस्य लिङ्गम् ।

पुनरपरमवतीर्ण्ण[:]पुद्गल: बुद्धस्य वा, धर्म्मस्य वा, संघस्य वा गुणांच्छ्रुत्वा, अनुस्मृत्य वा, लभते चेतस: प्रसादमुदारं, कुशलं, नैष्क्रम्योपसंहितं, भूयो भूयस्तेनालम्बनेन, प्रसादद्रवचित्ततया अस्त्रप्रपाता-द्रोमांचा[8][दीनि[1]] प्रतिलभते इदं तृतीयम-वतीर्ण्णस्य पुद्गलस्य(पुद्गलस्य) लिङ्गम् ।

पुनरपरमवतीर्ण्ण: पुद्गल: प्रकृत्यैव तीव्रेण **ह्रीव्यपत्राप्येण समन्वागतो भवति**। यदुत सर्व्व-सावद्यस्थानसत्ता[2](मु)दाचारेष्विदं चतुर्थमवतीर्ण्णस्य

2A—4// पुद्ग//[1]लस्य लिङ्गम् ॥

पुनरपरमवतीर्ण्ण: पुद्गल: **छन्दिको भवति**। तीव्रछ(च्छ)न्द: उद्देशे, स्वाध्याये, परिपृच्छायां, योगे, मनसिकारे, किंकुशलगवेषी भवति । इदं पञ्चम-मवतीर्ण्णस्य पुद्गलस्य लिङ्गम् ॥

पुनरपरमवतीर्ण्ण: पुद्गल: सर्व्वकर्मान्तेष्वनवद्येषु स[2][र्व्व स[3]]मादानेषु कुशलपक्षप्रयोगेषु दृढारम्भश्च भवति[2]स्थिरारम्भश्च निश्चितारम्भश्च यदुत समागमाय [।] इदं षष्ठमवतीर्ण्णस्य पुद्गलस्य लिङ्गम् ॥

1. See page 29, f.n. 1.
2. Letter illegible.
3. Letters lost by pin-hold.

पुनरपरमवतीर्ण्णः पुद्गलः मन्दरज[स्क[1]] जातीयो भवति । मन्दमन्दं क्लेशपर्यवस्थानमुत्पादयति । न च पुनः प्रबन्धं स्थापयत्यशठश्च भवत्यमायावी निहृतमदमानाहंकारगुणाभिनिविष्टो दोषद्वेष्टा[।]इ[3]दं सप्तममवतीर्ण्णस्य पुद्गलस्य लिङ्गम् ॥

पुनरपरमवतीर्ण्णः पुद्गलोऽसंलीनचित्तो भवत्युदरेष्वधिगम्येषु स्थानेषु नात्मानम्परिभवति । नाप्रतिबलतायामवतरति । अधिमुक्तिबहुलो भवति । इदमष्टममवतीर्ण्णस्य पुद्गलस्य लिङ्गम् ॥

इमान्येवंभागीयानि प्रभूतान्यवतीर्ण्णानां पुद्गला-[4]नां लिङ्गानि वेदितव्यानि ॥ येषामेतत् प्रदेशमात्रमाख्यातं ॥

पुनरेतानि लिङ्गानि मृदुकुशलमूलस्थस्यावतीर्ण्णस्य मृदूनि भवन्ति । सछि(च्छि)द्राण्यनिरन्तराणि अपरिशुद्धानि [।] मध्यकुशलमूलस्थितस्य मध्यानि, अधिमात्रकुशलमूलस्थितस्याधिमित्राणि, निरन्तराणि, परिशुद्धानीमान्युच्यन्ते अवतीर्ण्णस्य पु[5]द्गलस्य लिङ्गानि । यैर्लिंगैः समन्वागत[ः] अवतीर्ण्ण इति संख्यां गच्छति । अपि पुनरेतानि गोत्रस्थानामवतीर्ण्णानाञ्च पुद्गलानां आनुमानिकानि लिङ्गानि वेदितव्यानि । बुद्धा एव तु भगवन्तः परमपारमि[ता]-प्राप्ताश्च श्रावकास्तायिनः । तत्र प्रत्यक्षदर्शिनः ।

1. Added by us.

सुविशुद्धेन ज्ञानदर्शनेन प्रत्यनुभवन्ति । यदु[6]त गोत्रं चावतारञ्च [।।]

**अवतीर्ण्णाः पुद्गलाः कतमे** [।] अस्त्यवतीर्ण्णः पुद्गलः । अवतीर्ण्ण एव, न परिपच्यमानो, न परिपक्वो, न निष्क्रान्तः ।। अस्ति परिपक्वो न निष्क्रान्तः । अस्ति निष्क्रान्तो न परिपक्व एषां च पूर्व्ववद्विभागो वेदितव्यः ।। ये[अ]पि तदन्ये मृद्विन्द्रिया[7] दयः पुद्गलाः । गोत्रभूमौ निर्दिष्टाः । तेषामिहापि यथायोगं विभागो वेदितव्यः [।]

तत्र यश्चायमवतारस्य स्वभावः, यच्च व्यवस्थानं, यानि चेमान्यवतीर्ण्णानां लिङ्गानि । ये चेमे अवतीर्ण्णाः पुद्गलाः तत्सर्व्वमभिसंक्षिप्यावतारभूमिरित्युच्यते ।।

**।। उद्दानम्[1] ।।**

2B—4// *स्वभावस्तद् व्यव//[1]स्थानं लिङ्गं पुद्गल एव च ।*
*अवतारभूमिविज्ञेया सर्व्वमेतत् समासतः ।।*
*।। श्रावकभूमा[व[2]]वतारभूमिः समाप्ता ।।*

1. MS. has उद्दानं.
2. Omitted in the MS., added by us.

*Chapter Three*

# नैष्यक्रम्यभूमिः

**नैष्क्रम्यभूमिः कतमा** । आह [।] यच्च लौकिकेन मार्गेण वैराग्यगमनं । यच्च लोकोत्तरेण मार्गेण वैराग्यगमनं । यच्च (यश्च) तयोस्सम्भारः तदेकत्यमभिसंक्षिप्य नैष्क्रम्यभूमिरित्युच्य[2]ते ।

**लौकिकेन मार्गेण वैराग्यगमनं कतमत्** । यथापीहैकत्यः कामधातावौदारिकदर्शी भवति । प्रथम एव स समापत्त्युपपत्तिके ध्याने विवेकजे प्रीतिसुखे शान्तदर्शी भवति । स तथादर्शी तद्बहुलविहारी सत्कायवैराग्यमनुप्राप्नोति[1] । प्रथमञ्च ध्यानं समापद्यते । एवं सर्व्वध्यानादूर्ध्वं सर्व्वास्वध[3]रिमासु भूमिष्वौदारिकदर्शी भवति । सर्व्वासु चोपरिमायु भूमिषु शान्तदर्शी, स तथादर्शी तद्बहुलविहारी समानो यावदाकिञ्चन्यायतनाद्वैराग्यमनुप्राप्नोति । नैवसंज्ञानासंज्ञायतनं च समापद्यते[2] [।] लौकिकेन मार्गेण

1. Wayman reads सत्काम and emends it as समानो, see ibid, p. 66.
2. Asaṅga defines लौकिकमार्ग as 'लौकिकं प्रथमं ध्यानं द्वितीयं तृतीयं

(contd. on p. 36)

वैराग्यगमनं नास्त्यत उत्तरि नातो भूयः।

**लोकोत्तरेण मार्गेण वैराग्य**[4]**गमनं कतमत्।** यथापीहैकत्यः सत्पुरुषाणां दर्शी आर्यधर्मेषु कोविदः दुःखम्वा दुःखतो यथाभूतं प्रजानाति। समुदयम्वा समुदयतः। निरोधम्वा निरोधतः। मार्गम्वा मार्गतः। शैक्षेण ज्ञानदर्शनेन समन्वागतः। ततश्चोत्तरि मार्गं भावयंस्त्रैधातुकेभ्यो दर्शनभावनाप्रहातव्येभ्यो[5] धर्मेभ्य आत्मानं विसंयोजयति विमोचयत्येवं चासौ त्रैधातुकसमतिक्रान्तो भवति। इदमुच्यते लोकोत्तरेण मार्गेण वैराग्यगमनम्[1] ॥

**तत्र सम्भारः कतमः।** तद्यथा आत्मस्वपरसम्पत्(आत्मसम्पत्)। परसम्पत्, कुशलः(लो)धर्म[च्]छन्दः, शीलसम्वरः[2], भोजने मात्रज्ञता, पूर्व्वरात्रापररात्रं जागरिकानुयुक्त[6]ता, संप्रजानद्विहारिता, कल्याण-

---

*(contd. from p. 35)*

चतुर्थं ध्यानमाकाशानन्त्यायतनं विज्ञानानन्त्यायतनमाकिञ्चन्यायतनं नैव संज्ञानासंज्ञायतनं च ॥ त एते ध्यानारूप्याः संक्लेशव्यवदानव्यवस्थानविशुद्धिभिर्वेदितव्याः, Asm., p. 68; see also p. 69 for details; cp. Ada, p. 86 (X.17) : लौकिकमार्गेणापि हातुं शक्यन्ते ऊर्ध्वं धातुप्रतिसंयुक्तानि संयोजनानि ॥

1. cp. Asm., p. 69 : भावनामार्गे दुःखसमुदयनिरोधमार्गज्ञानानि धर्मज्ञानान्वयपक्ष्याणि तैश्च संप्रयुक्तः समाधिः प्रथमं वा ध्यानं यावदाकिञ्चन्यायतनं नैवसंज्ञानासंज्ञायतनं लौकिकमेव अपरिस्फुटं संज्ञाप्रचारतामुपादाय। ततश्चानिमित्तमित्युच्यते ॥ यथोक्तं भगवता यावदेव संज्ञासमापत्तिः तावदाज्ञाप्रतिवेध इति। निरोधसमापत्तिर्लोकोत्तरा मनुष्येष्वभिनिर्ह्रियते। मनुष्येष्वभिनिर्हृता मनुष्येषु रूपधातौ वा संमुखीक्रियते। आरूप्येष्वस्याः संमुखीभावो नास्ति। शान्तविमोक्षविपाकविहारिणां तद्यत्नानारम्भतामुपादाय ॥; cp. Ada, p. 86 (X.17): लोकोत्तरमार्गेण प्रहीयन्ते कामधातुरूपारूप्यधातुप्रतिसंयुक्तसर्वसंयोजनानि ॥
2. Wayman adds here इन्द्रियसम्वरो.

2A—1// मित्रता, सद्धर्मश्रवणचित्तं (चिन्तना)// [1] अ[न]न्तरायः त्यागः, श्रमणालंकारश्च इतीमे धर्मा लौकिकलोकोत्तरवैराग्य[गम[1]]नाय सम्भार इत्युच्यते ।[2] तत्र या चात्मसम्पत्, परसम्पत् कुश[2]लश्च धर्मछ(च्छ)न्द एषां पूर्व्ववद्विभागो वेदितव्यः । यदुक्तं निहीने बीजसमुदागमप्रत्यये[3] ।

[2] **तत्र शीलसम्वरः कतमः** [।] यथापीहैकत्यः शीलवान् विहरति यावत् समादाय शिक्षते शिक्षापदेषु [।] कथं च शीलवान् विहरति । यावत् समादाय शिक्षते शिक्षापदेषु [।] (कथं शीलवान् विहरति ।)[4] यथा समात्तेषु शि[3]क्षापदेषु अविपन्नकायकर्मान्तश्च, भवत्यविपन्नकायकर्मान्तश्च । अखण्डचारी, अछि(च्छि)द्रचारी एवं शीलवान् भवति ।

**कथं प्रातिमोक्षसम्वरसंवृतो भवति ।** सप्तनैर्याणिकं शीलं प्रातिमोक्षसम्वर इत्युच्यते । त एते निकायभेदेन बहवः सम्वरा भवन्ति । अस्मिंस्त्वर्थे

1. Letters lost by pin-hold.
2. cp. ibid, p. 65 : संभारमार्गः कतमः । पृथग्जनानां शीलम् इन्द्रियद्वाररक्षा भोजने मात्रज्ञता प्रथमरात्रौ तदुत्तररात्रिषु वा नित्यममिद्धं वीर्यभावना शमथविपश्यना संप्रजन्यविहारश्च ॥ यद्वा पुनरन्यदौपनिषदं कुशलं श्रुतमयी प्रज्ञा चिन्तामयी प्रज्ञा भावनामयी प्रज्ञा ॥ तद्भावनया अभिसमयविमोक्षस्थानभाजनतां प्रतिलभते ॥
3. In the beginning of the Gotra-bhūmi, see Appendix I.
4. This is a repetition and may be deleted.

**भिक्षुसम्वरमधिष्ठायाह[4]प्रतिमोक्षसम्वरसंवृतः ।**[1]

**कथमाचारसम्पन्नो भवति** । यथापि तदीर्यापथमितिकरणीय(यं)वा, कुशलपक्षप्रयोगम्वा अधिष्ठाय लोकानुवर्त्तिना, लोकानुत्क्रान्तेन, विनयानुवर्त्तिना, विनयानुत्क्रान्तेन चाचारेण समन्वागतो भवति ।

**तत्र ईर्यापथाधिष्ठान आचारः** । कथं न लोकानु(को)त्क्रान्तो[न]विन[5]योत्क्रान्तः [।] यथापि तद्यत्र चंक्रमितव्यं । यथा चंक्रमितव्यं [।] तत्र यथा चंक्रम्यते (चंक्रमते) येन न लोकगर्हितो भवति, न सतां, सम्यग्रतानां, सत्पुरुषाणां, सहधार्मिकाणां, विनयधराणां, विनयशिक्षितानामबध्यो भवति । [अ]गर्ह्यस्थानीयः । यथा चंक्रम एवं स्थानं, निषद्या, शय्या वेदितव्या ।

**तत्र इतिकरणी[6]य आचारः** । कथं न लोकोत्क्रान्तो भवति । न विनयोत्क्रान्त इति करणीयमुच्यते । चीवराच्छादनं । उच्चारवस्रावं । उदकदन्तकाष्ठं । ग्रामप्रवेशः । पिण्डपातनिर्हारपरिभोगः । पात्रनिर्मार्द(र्ज)नं स्थापनं च । पादप्रक्षालनं च । शयनासनप्रज्ञप्तिः । तस्यैव चाभिसंक्षेपः पात्रक[7]र्म्मं चीवरकर्म्मं इति । यद्वा पुनरेवंभागीयं किंचित्तदितिकरणीयमित्युच्यते । तच्च यथायोगं यत्र कल्पयितव्यं, यथा च कल्पयितव्यं तत्र तथा कल्पयति ।

---

1. See p. 30, f.n. 2.

येन लौकिकानामनभ(भि)योज्यो भवत्यविगर्हि[8]तः। विनयधराणां [विनयशिक्षितानां[1]]मनपवाद्यो भवत्यविगर्हितः। सम्यग्रतानां सहधार्मिकाणामेवमिति-करणीयाधिष्ठान आचारो लोकानुत्क्रान्तो भवति।
2B—1// विनयानुत्क्रान्त//[1]श्च ॥[2]

**तत्र कुशलपक्षप्रयोगधिष्ठान आचारः** [।] कथं लोकानुत्क्रान्तश्च भवति, विनयानुत्क्रान्तश्च [।] **कुशलपक्षउच्यते** [।] तद्यथा स्वाध्यायगुरूणां सामीचीकर्म, उपस्था(प)नं च, तथा ग्लानोपस्थानमन्यो[अ]न्यमनुकम्पाचित्तमुपस्थाप्य च्छन्ददान[स]मु-[ [3]] प्रयोगः, परिपृच्छा, धर्मश्रवणदक्षस्यानलसस्य वि[2]ज्ञानां सब्रह्मचारिणां कायेन चैया-(चेर्या)कृत्यक्रिया, परेषां च कुशलपक्षसमुदापना, धर्मदेशना। प्रतिसंलयनप्रवेशपर्यङ्कनिबन्धानिषद्या इति य एवं भागीया अप्यन्ये धर्मा अयमुच्यते। कुशलपक्षप्रयोगः [।] स एवं कुशलपक्षप्रयोगो(गं)यथायोगं यथापरिकीर्तितं। यत्र कल्प[3]यितव्यं तत्र तथा कल्पयति। येन नानुयोज्यो भवति। गर्हितो लौकिकानां विनयधराणां, विनयशिक्षितानां, सम्यग्रतानां, सत्पुरुषाणां, सहधार्मिकाणामयमुच्यते कुशलपक्ष

1. Added by a separate hand in a footnote.
2. cf. Bodhi., 134.11.
3. Letters lost by pin-hold, might be मुद्दिष्टः.

प्रयोगाधिष्ठान आचार(रो)लोकानुत्क्रान्तो, विनयानुत्क्रान्तश्च [।] य एभिराकारैः सम्पन्न आचार इय-[4]मुच्यते आचारसम्पत्। एवं चाचारसम्पन्नो भवति।

**कथञ्च गोचरसम्पन्नो भवति। पञ्च भिक्षोरगोचराः (।)**[1] कतमे पञ्च [।] तद्यथा घोषो, वेषं (वेश्या-)पानागारः, राजकुलं, चण्डालकठिनमेव पञ्चममिति। य एतांस्तथागतप्रतिक्षिप्तानगोचरान् वर्जयित्वा अन्यत्र गोचरे चरत्यनवद्यं त[5]त्र कालेनैवं गोचरसम्पन्नो भवति ॥

---

1. cp. Vibhaṅga, p. 297 : तत्थ कतमो अगोचरो ? इधेकच्चो वेसिया-गोचरो वा होति, विधवागोचरो थुल्लकुमारिगोचरो वा, पण्डकगोचरो वा भिक्खुनिगोचरो वा पानागारगोचरो वा, संसट्ठो विहरति राजूहि राजमहामत्तेहि तित्थियेहि तित्थियसावकेहि अननुलोमिकेन संसग्गेन, यानि वा पन तानि कुलानि अस्सद्धानि अप्पसन्नानि अनोपानभूतानि अक्कोसकपरिभासकानि अनत्थकामानि अहितकामानि, अफासुककामानि अयोगक्खेमकामानि भिक्खूनं भिक्खुनीनं उपासकानं उपासिकानं तथारूपानि कुलानि सेवति भजति पयिरुपासति-अयं वुच्चति 'अगोचरो'।

   तत्थ कतमो गोचरो ?

   इधेकच्चो न वेसियागोचरो होति न विधवागोचरो न थुल्लकुमारिगोचरो न पानागारगोचरो असंसट्ठो विहरति राजूहि· · ·यानि वा पन तानि कुलानि सद्धानि पसन्नानि ओपानभूतानि· · · · · ·तथारूपानि कुलानि सेवति भजति पयिरुपासति अयं वुच्चति गोचरो।", See Vbh., pp. 297-8; Vm. I.52; SV, p. 342 f., cp. SRS, XXVIII.17-8 :

   नासौ भोति अनाचारो आचारे सुप्रतिष्ठितः।
   गोचरे चरते योगी विवर्जेति अगोचरम् ॥
   निष्परिदाहविहारी गुप्त इन्द्रियसंवृतः ॥; Ś S, p. 68; Buddhaghosa distinguishes between उपनिस्सयगोचर, आरक्खगोचर & उपनिबन्धगोचर; see SDP, XIII.2, 5, 8, 9, 11-3; cp. also S S, pp. 145.22-23.

**कथमणुमात्रेष्ववद्येषु भयदर्शी भवति।** अणुमात्रमवद्यमुच्यते। क्षुद्राणु(नु)क्षुद्राणि शिक्षापदानि येष्वध्यापत्तिर्व्युत्थानं च प्रज्ञायते। तेषां याध्यापत्तिरिदमवद्यमणुमात्रं। पुनस्तथा हि तस्या अध्यापत्तेरल्पकृच्छ्रेण व्युत्तिष्ठते [6] येन तदणुमात्रमित्युच्यते।

**तत्र कथं भयदर्शी भवति।** सा हैवाह(सोऽह) मेषामध्यापत्तिहेतोरभव्यो वा स्यामप्राप्तस्य प्राप्तये, अनधि[गतस्याधि[1]]गमाय, असाक्षात्कृतस्य साक्षात्क्रियायै, अपायगो वा स्यामपायगामी, आत्मा वा मे अपवदेत्, शास्ता वा, देवता वा, विज्ञा वा, सब्रह्मचारिणो[अ]धर्मतया [7] विगर्हयेयु:। दिग्विदिक्षु च मे पापको वर्णकीर्त्तिशब्दश्लोको[अ]भ्युद्गच्छेत्स एभ्यो दृष्टधर्मसांपरायिकेभ्यस्तद्धेतुकेभ्यो वि[शि[2]]ष्टेभ्यो धर्मेभ्यो भयदर्शी भवति। येन तानि क्षुद्राणु(नु)क्षुद्राणि शिक्षापदानि ,जीवितहेतोरपि न संधि[8]भ्यो व्यापद्यते। कदाचित् कर्ह(र्हि)चित् स्मृतिसंप्रमोषादध्यापन्न: लघु लघ्वेव यथाधर्मं प्रतिकरोति व्युत्तिष्ठते[।] एवमणुमात्रेष्ववद्येषु भयदर्शी भवति।

2A—2// **कथं समादाय शि//[1]क्षते शिक्षापदेषु[3]।**

---

1. Added by a separate hand in a footnote.
2. Letter lost by pin-hold.
3. cp. Vm., 1.52 : यं किञ्चि सिक्खापदेसु सिक्खितब्बं, तं सब्बं सम्मा आदाय सिक्खति। एत्थ च पातिमोक्खसंवरसंवुतो ति एत्तावता पुग्गलाधिट्ठानाय देसनाय पातिमोक्ख संवरसीलं दस्सितं।; Vbh., pp. 297-8.

आह[।]पूर्व्वमनेन प्रातिमोक्षसम्वरसमादानज्ञप्तिचतुर्थेन कर्म्मणा उपसम्पद्यमानेन कतिपयानां शिक्षापदानां शरीरं श्रुतं, सातिरेकं च तदन्यं दिवमं शिक्षापदशतं प्रातिमोक्षसूत्रोद्दिष्टं प्रतिज्ञयेवोपगतं सर्व्वत्र ल(ब्धा)-प्यामीति (लप्स्यामीति)। आचार्योपाध्यायानामन्ति-काच्छ्रुत्वा आलप्तकसं[2]लप्तकसंस्तुतकमप्रियकानां-(णाम्) अच्वरमासंगप्रातिमोक्षसूत्रोद्देशतः। ततश्च तेन सर्व्वशिक्षासमादानात् प्रातिमोक्षसम्वरः प्रति-लब्धस्तत उत्तरकालं येषु शिक्षापदेषु कुशलो भवति। तानि तावन्नाध्यापद्यते। अध्यापन्नश्च यथाधर्मं प्रति-करोति। येषु पुनः शिक्षापदेषु कुशलो भवति। अ[3] व्युत्पन्नबुद्धिः। तानि पूर्व्वं प्रतिज्ञासमादानेन समा-दत्तान्येतर्हि व्युत्पत्तिकौशल्यतया समाददाति। तेभ्यः पूर्व्वं यथापरिकीर्त्तितेभ्यः स्थानेभ्य आचार्यस्य वोपा-ध्यायस्य वा पूर्व्ववत्। व्युत्पत्तिकौशल्यतया च पुनः समादाय, यथानुशिष्टः अन्यूनमधिकं शिक्षते। ते [षु गुरु[1]] स्थानीयव्यपदिष्टेषु शिक्षा[4]पदेषु अवि-परीतग्राही च भवत्यर्थस्य व्यंजनस्य च। एवं समादाय शिक्षते **शिक्षापदेष्वयं तावद्विभंगः शीलसम्वरस्य विस्तरकृतः॥**

**तत्र कतमः समासार्थः।** तथायं समासार्थस्त्रि-लक्षण एव। शीलस्कन्धः परिदीपितो भगवता, तद्यथा-

1. Added by a separate hand in a footnote.

**अविप्रणाशलक्षणः, स्वभावलक्षणः, स्वभावगु[5]णल-
क्षणश्च ।** यथा कथमिति यत्तावदाह **शीलवान् विहर-
तीत्यनेन** तावदविप्रणाशलक्षणं शीलसम्वरस्याख्यातं ॥
यत्पुनराह **प्राति मोक्षसम्वरसंवृत** इति । अनेन स्वभाव-
लक्षणमाख्यातं । यत्पुनराह । **आचारगोचरसम्पन्नः ।**
अनेन परमुपनिधाय तथा समादत्तस्य प्रातिमोक्षसम्व-
[6]रस्य गुणलक्षणमाख्यातं । तथापि परे तामाचार-
गोचरसम्पदमुपलभ्याप्रसन्नाश्च प्रसीदन्ति, प्रसन्नानां
च भवति भूयोभावः । प्रसन्नाश्च प्रसन्नाधिकारं
कुर्व्वन्ति । न च मनान्सि (मनांसि) प्रदूषयन्ति ।
नाव्वर्णं निश्चारयन्त्यन्यथा शीलसम्पन्नस्याचारगोचर-
सम्पन्नस्यायं पराधिपतेयो गुण आनुशन्सा (आनुशंसा)
च[7]भवेदेतद्विपर्ययेण वा(चा)स्य दोष एव भवेत् ।
यत्पुनराह । **अणुमात्रेष्ववद्येषु भयदर्शी समादाय शिक्षते
शिक्षापदेषु** [।] अनेना[8]ध्यात्माधिपतेयगुणानुशन्स-
(शंस)लक्षणमाख्यातं । तत्कस्य हेतोर्यदस्येद(म)मा-
चारगोचरसम्पन्नः पराधिपतेयं गुणानुशन्सं(शंसं)
2B—2// प्रतिलभेत । अपि च । शीलं वि //[1]पातयित्वा
(विपात्य) तद्धेतुस्तत्प्रत्ययमपायेषूपपद्यते । अभव्यता-
म्वा(तांवा) अप्राप्तस्य प्राप्तये पूर्व्वत् । **यत्पुन-
रणुमात्रेष्ववद्येषु भयदर्शी** भवति । प्रागेवाधि-
मात्रेष्वसमादाय च शिक्षते शिक्षापदेषु तस्मात्तद्धे-
तुस्तत्प्रत्ययं कायस्य भेदात् सुगतावुपपद्यते । भव्यो

वा भवत्यप्राप्तस्य प्राप्तस्य प्राप्तये पूर्व्व[व]दनेन कारणेना[2]ध्यात्माधिपतेयो(अ)यं शीलसम्वरस्य गुणानुशंस इत्युच्यते ॥[1]

अपरः पुनः पर्यायः [।] समासतो भगवता **समादत्तशीलता** परिदीपिता, **नैर्याणिकशीलता च, शीलभावना च** [।] तत्र यत्तावदाह। **शीलवान्विहरतीत्यनेन समादत्तशीलता**[55]**ख्याता**। यत् पुनराह। **प्रातिमोक्षसम्वरसंवृत इत्यनेन नै**[3]**र्याणिकशीलता आख्याता**[।] तथा हि प्रातिमोक्षसम्वरसंगृहीतं शीलमधिशीलं शिक्षेत्युच्यते। अधिशीलं च शिक्षां निश्रित्य, अधिचित्तं च, अधिप्रज्ञं च शिक्षां भावयत्येवमसौ सर्व्वदुःखक्षयाय। निर्यातो भवति। यदुताधिशीलं प्रतिष्ठाय पूर्व्वंगमं कृत्वा तस्मात् प्रातिमोक्षसंवरो नैर्याणि[4]कं शीलमित्युच्यते। यत्पुनराह। **आचारगोचरसम्पन्नः अणुमात्रेष्ववद्येषु भयदर्शी समादाय शिक्षते शिक्षापदेष्वनेन शीलभावना** आख्याता। एभिराकारैस्तत्प्रातिमोक्षसम्वरशीलम्भावयितव्यं। एवं च भावितं सुभावितं भवतीति स एष एकः शीलसम्वरः षडाकारदेशनाप्रत्यु[5]पस्थानो वेदितव्यः॥

**स चैष शीलसम्वरो दशभिराकारैर्विपन्नो**

---

1. See SR, XXVI-XXVIII; Bodhi., p. 128, cp. also, Vsm., I.153.

**वेदितव्यः ।**[1] **विपर्ययाद्दशभिश्चैव कारणैः सम्पन्नः ।**

**कतमैर्दशभिः कारणैर्विपन्नो भवति ।** आदित एव **दुर्गृहीतो भवत्यतिलीनो भवत्यनिसृतो** भवति, **प्रमाद-कौसीद्यपरिगृहीतो** भवति । **मिथ्या प्रणिहितो** भवति । **आचारविपत्त्या प[6]रिगृहीतो भवत्याजीवविपत्त्या परिगृहीतो भवत्यन्तद्वयपतितो** भवति ॥ **अनैर्याणिको** भवति । **समादानपरिभ्रष्टश्च भवति** ॥

**तत्र कथमादितो दुर्गृहीतं शीलं भवति ।** यथापी हैकत्यो राजाभिनिर्णीतो वा, प्रव्रजितश्चौराभिनिर्णीतो वा, ऋणार्त्तोवा, भयार्त्तो वा, वा, अ(आ)

---

1. cp. Vbh., p. 431 : यो कायिको वीतिक्कमो वाचसिको वीतिक्कमो कायिकवाचसिको वीतिक्कमो अयं वुच्चति 'सीलविपत्ति' । सब्बं पि दुस्सील्यं सीलविपत्ति ।; cf. AS, p. 45: सीलविनासिका असंवरसंखाता सीलस्स विपत्ति सीलविपत्ति; cf. also, AN, I.249 : कतमा च, भिक्खवे, सील-विपत्ति ? इध, भिक्खवे, एकच्चो पाणातिपाती होति, मुसावादी होति, पिसुणवाचो होति, सम्फप्पलापी होति । अयं वुच्चति····सीलविपत्ति, but see Mahāvagga, p. 191. चत्तारि पाराजिकानि, तेरस सङ्घादिसेसा, अयं सीलविपत्ति, also Psm. and GM, III.2, p. 116; but see Mahāvagga, p. 243 which is identical to D. N., I.68; in the nikāyas we meet with the five ādīnavas of śīlavipatti, A. N., II.491, D. N., I.68, etc. पञ्चिमे, भिक्खवे, आदीनवा दुस्सीलस्स सीलविपत्तिया । कतमे पञ्च ? इध, भिक्खवे, दुस्सीलो सीलविपन्नो पमादाधिकरणं महतिं भोजनानिं निगच्छति ।···· दुस्सीलस्स सीलविपन्नस्स पापको कित्तिसद्दो अब्भुग्गच्छति ।····दुस्सीलो सील-विपन्नो यं यदेव परिसं उपसंकमति····अविसारदो उपसंकमति मङ्कुभूतो ।···· दुस्सीलो सीलविपन्नो सम्मुळ्हो । कालं करोति ।····दुस्सीलो सीलविपन्नो कायस्स भेदा परं मरणा अपायं दुग्गतिं विनिपातं निरयं उपपज्जति । अयं भिक्खवे पञ्चमो आदीनवो दुस्सीलस्स सीलविपत्तिया; cp. दुःशीलो भवति पापधर्मा, Adv, Vs. 169; Ś S, pp. 41-2; cf. Vsm., I.143 f; 153-158, especially para 154; cp. A. N., III. 251-6.

जीविकाभयभीतो वा, न श्रामण्याय, [7] न ब्राह्म-ण्याय, नात्मशमाय, नात्मदमाय, नात्मपरिनिर्व्वाणायै-
1B—8// वमादित [:।] //[6] दुःगृहीतो (दुर्गृहीतं) भवति।

**कथमतिलीनो(नं) भवति।** यथापीहैकत्यः अलज्जी भवति मन्दकौकृत्यः। शैथिलिकः शिथिलकारी शिक्षोपदिष्टे[अ]यमतिलीनो(नं) भ[7]वति॥

**कथमतिसृतो(तं) भवति।** यथापीहैकत्यो दुर्गृहीतग्राही भवत्यस्थानकौकृत्यः। सौकृत्यकरणीयेषु स्थानेषु कौकृत्यायमानः [।] अस्थाने परेषामन्तिके परिभवचित्तं वा आख्यातं वोत्पादयति। प्रवेदयत्येव-मतिसृतं [भवति[1]]।

1A—9// //[1]**कथं प्रमादकौसीद्यपरिगृहीतं भवति।** यथा-पीहैकत्यो[अ[2]]तीतमध्वानमुपादायापत्तिमापन्नः [।] सा चानेन स्मृतिसंप्रमोषादेकत्या न यथाधर्मं प्रतिकृता भवति। यथा अतीतमध्वानमुपादाय एवमनागतं वर्त-मानमध्वानमुपादाय यामापत्तिमापन्नो भवति। सा चानेन स्मृतिसंप्रमोषादेकत्या न यथाधर्मं[2]प्रति-कृता भवति। न च पूर्व्वमेवापत्तेरायत्यामनध्यापत्तये तीव्रमौत्सुक्यमापद्यते। यन्वहं तथा तथा चरेयं, यथा यथा चरन् विहरंश्चापत्तिं नाध्यापद्येय, तथा च, तथा चरति, विहरति। यथापत्तिमध्यापद्यते। सो[अ]नेन

1. A separate hand adds this.
2. Letter lost by pin-hold.

पूर्व्वान्तसहगतेनापरान्तसहगतेन, मध्यान्तसहगतेन, पूर्व-कालकरणीयेन सहानुच[3]रेण प्रमादेन समन्वागतो निद्रासुखं, शयनसुखं, पार्श्वसुखं च स्वीकरोति। अदक्षश्च भवत्यलसः, अनुत्थानसंपन्नः, न कर्ता भवति विज्ञानां सब्रह्मचारिणां कायेन वैयापृत्यमेवं (व्यापृत्यैवं) प्रमादकौसीद्यपरिगृहीतं भवति ॥

**कथं मिथ्याप्रणिहितं भवति।** यथापीहैकत्यः प्रणिधाय ब्रह्मचर्यं चरति। अने[4]नाहं शीलेन वा, व्रतेन वा, तपसा वा, ब्रह्मचर्यवासेन वा, देवो वा स्यां, देवान्यतमो वा, लाभ सत्कारकामो भवति। परतः लाभसत्कार प्रार्थयते। लाभसत्कारस्य स्पृहयति। एवं मिथ्याप्रणिहितं भवति।

**कथमाचारविपत्त्या[1] परिगृहीतं भवति।** यथापीहैकत्य ईर्यापथं वाधिष्ठाय इतिकरणीयम्वा कुशलप[5]-क्षप्रयोगं वा लोकोत्क्रान्तश्च भवति। विनयोत्क्रान्तश्च पूर्व्ववदेवमाचारविपत्त्या परिगृहीतं भवति।

**कथमाजीवविपत्त्या[2] परिगृहीतं भवति।** यथा-

1. cp. Vbh. : तत्थ कतमो अनाचारो? कायिको वीतिक्कमो, वाचसिको वीतिक्कमो, कायिकवाचसिको वीतिक्कमो—अयं वुच्चति 'अनाचारो'। सब्बं पि दुस्सील्यं अनाचारो। इधेकच्चो वेलुदानेन वा पत्तदानेन वा पुप्फदानेन वा फल-दानेन वा सिनानदानेन वा दन्तकट्ठदानेन वा चाटुकम्यताय वा मुग्गसूप्यताय वा पारिभट्यताय वा जङ्घपेसनिकेन वा अञ्ञतरञ्ञतरेन वा बुद्धपटिकुट्ठेन मिच्छा आजीवेन जीविकं कप्पेति-अयं वुच्चति 'अनाचारो' (p. 296); see, Vsm., I. 43 f.; cp. MSV, III, pt. 3, p. 116.
2. cp. A. N., I.252 : कतमा च, भिक्खवे, आजीवविपत्ति? इध, भिक्खवे, एकच्चो मिच्छाआजीवो होति, मिच्छाआजीवेन जीविकं कप्पेति। अयं

(contd. on p. 48)

पीहैकत्यो महेच्छो भवत्यसंतुष्टः, दुर्म्मोषो, दुर्भर-जातीयः [।] स चाधर्मेण चीवरं पर्येषते। न धर्मेणा[अऽ]धर्मेण पिण्डपातं, शयनासनं, ग्लान-प्रत्ययभैं[6]षज्यपरिष्कारम्पर्येषते। न धर्मेण [।] स च चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्य-परिष्कारहेतोः आत्मनो गुणसंभावनानिमित्तमप्राकृतं तिठपित[1]मीर्यापथं कल्पयत्यनुद्धतेन्द्रियतामचप-लेन्द्रियतां, शान्तेन्द्रियताञ्च परेषामुपदर्शयति। येनास्य परे गुणसंभावना जाता दा[7]तव्यं कर्तव्यं मन्यन्ते। यदुत चीवरपिण्डपातशयनासनग्लानप्रत्यय-भैषज्यपरिष्कारान्। ध्वाङ्क्षश्च भवति, मुखरः। प्रगल्भः, केलायिता, नामगोत्रोद्गृहीता, बहुश्रुतो
1B—9// भवति। धर्मधरो, ला//[।]भकारणादेव च परेषां धर्मं संलपति, श्रावकभाषितं वा, आत्मनो वा गुणान्, भूतान्वा कि[ञ्चिद्वा[2]] पुनः समारोप्य स्वयमेव वक्ता भवति। लापयति वा परैरनुत्तरेण वा उपदर्शयिता, चीवरार्थी वा, अन्यतमान्यतमेन वा श्रामणकेन परिष्कारेणार्थी, प्रभूतेन वा, अग्रतरेण वा, अविहन्य-मानो[ऽ]पि प्राकृतस्य चीवरस्योपदर्शयि[2]ता

---

*(contd. from p. 47)*

वुच्चति, भिक्खवे, आजीवविपत्ति, for a brief description of आजीव-विपत्ति, cp. Vsm., I. 84; cp. MSV, III, part 3, p. 116.

1. This might be an incorrect form of त्रिस्थापित ?
2. Letters lost by pin-hold.

भवति । अस्येच्छन् श्र[ा]द्धा ब्राह्मणगृहपतयः चीवरेण विघातं संलक्षयित्वा (संलक्ष्य) प्रभूतं प्रणीतं चीवरं दातव्यं कर्तव्यं मंस्यते(न्ते) । यथा चीवरमेवमन्यतमान्यतमं श्रामणकं जीवितपरिष्कारं श्राद्धानाञ्च ब्राह्मणगृहपतीनामन्तिकाद्यथाकामं वा अलभमानः, असत्सु वा[अ]संविद्यमानेषु भोगेष्वलभमान एवं[3]-चोपरोधेन याचते । निष्पिष्य निष्पियामि(पि)चैनां परुषयत्यपि हीनम्वा पुनर्लब्ध्वा तथा संविद्यमानेषु भोगेषु तं लाभं मन्स(मंस)यत्यवसादयति । संमुखं च दातारं दानपतिं एवं चाह [।] हं भोः कुलपुत्र, सन्त्येके कुलपुत्राः कुलदुहितरश्च ये तवान्तिका नीचकुलीनतराश्च[दरिद्रतराश्च[1]] ते पुनरेवं चैवञ्च प्रणीतदायिनो मन आ[4]पदायिनश्च । कस्मात्त्वं तेषामन्तिकादुच्चकुलीनतर(ा)श्चान्यतरश्च समान एव समनाप(मन आप)दायी, नाप्रणीतपरीत्तदायी चेति । य एभिराकौरः कुहनाम्वा निश्रित्य, लपनाम्वा, नैमित्तिकताम्वा, नैष्पेषिकताम्वा, लाभेन लाभं निश्चिकीर्षतां, चीवरपिण्डपातशयनासनग्लानप्रत्ययभै-[5]षज्यपरिष्कारान् परतः पर्येषते । सो[अ]-धर्मेण[।] यः पुनरधर्म्मेण सो[अ]स्य भवति मिथ्याजीवः । एवं तच्छीलमाजीवविपत्त्या परिगृहीतं भवति ।

**कथमन्तद्वयपतितं भवति ।** यथापीहैकत्यः

1. A separate hand adds this.

**कामसुखल्लिकानुयुक्तो** भवत्यध्यवसिततांपरः। प्रतिलब्धान्धर्मेण वा अधर्मेण वा चीवरपिण्डपातशय[6]नासनग्लानप्रत्ययभैषज्यपरिष्कारान् परिभुङ्क्ते। आदीनवादर्शी निःसरणमप्रजानन्नयमुच्यते एको[अ]न्तः। पुनरपरमिहैकत्य **आत्मक्लमथानुयुक्तो** भवत्यनेकपर्यायेणात्मानमातापयति, सन्तापयति। [7]कष्टव्रतसमादायी च भवति। तद्यथा कण्टकापाश्रयो वा भवति। भस्मादायी मुसलापाश्रयः। फलकापाश्रयो
1A—10// भवति। उत्कुहकस्थितो भवत्युत्कुहकप्र//[1]हाणयोगमनुयुक्तः [।] अग्निपरिचारको भवति। यावत् त्रिरप्यग्निं परिच[रति[1]] उदकमध्याहारो भवति। यावत् त्रिरप्युदकमध्यावै(व)हति। एकपादकः स्थित्वा यतः सूर्यस्ततः परिवर्तते। इति यो वा पुनरप्येवंभागीय आत्मकक्लमथानुयोगः अयमुच्यते द्वितीयो[अ]न्तः। ए[वमन्त[1]]द्वयपतितं भवति।[2]

**कथमनैर्याणिकं भवति।** यथापीहै[2]कत्यः शीलं वा व्रतम्वा दृष्ट्या परामृशति। अनेनैव शीलेन वा व्रतेन वा शुद्धिर्भविष्यति। मुक्तिर्निर्याणं

1. Letters damaged by pin-hold.
2. cf. S. N. IV.360 : द्वेमे, भिक्खवे, अन्ता पब्बजितेन न सेवितब्बा। कतमे द्वे? यो चायं कामेसु कामसुखल्लिकानुयोगो हीनो गम्मो पोथुज्जनिको अनरियो अनत्थसंहितो, यो चायं अत्तकिलमथानुयोगो दुक्खो अनरियो अनत्थसंहितो। एते खो, भिक्खवे, उभो अन्ते अनुपगम्म मज्झिमा पटिपदा तथागतेन अभिसम्बुद्धा····; cf. also, ibid, II.17.

भविष्यतीति । सर्वं च शीलमितो बाह्यानां सुरक्ष-(क्षि)तमपि सुविशुद्धमपि तदुपमया विशुद्ध्या अनैर्याणिकमित्युच्यते । एवमनैर्याणिकं भवति ।

**कथं समादानपरिभ्रष्टं भवति ।** यथापीहैकत्यः सर्व्वेण सर्व्वमलज्जी भ[3]भवति निरपेक्षः । श्रामण्ये स च भवति । दुःशीलः पापधर्मा[1] अन्तःपूतिरवस्रुतः कशम्बोदकजातः । शंखस्वरसमाचारः । अश्रमण[:] श्रमणप्रतिज्ञः अब्रह्मचारी ब्रह्मचारिप्रतिज्ञ एवं समादानपरिभ्रष्टं भवति ।

एभिर्दशभिः कारणैर्विपन्न(न्नं)शीलं शीलविपत्तिरित्युक्ता भगवता[2][।]

अपिच शीलाभ्यसन[4]मप्युक्तं भगवता[।]द-(त)च्च एभ्यः कारणेभ्यो द्वाभ्यां कारणाभ्यां वेदितव्यम् । या चानैर्याणिकता, यश्च समादानभ्रंशः तदन्यैश्च कारणैः **शीलविपत्तिरेव** वेदितव्या । एषामेव च कृष्णपक्षव्यवस्थितानां कारणानां विपर्ययेण शुक्लपक्ष्यः कारणैः **शीलसम्पत्तिर्वेदितव्या**[3] । शील-

1. See S Ś, p. 41 sq., Abd., p. 132 sq.
2. See D. N. I.68, II.69; A. N., I.249, II.491; Vbh., p. 431; Pug., p. 35.
3. Asaṅga says : तत्र विशुद्धं शीलं बोधिसत्त्वस्य कतमत् । तद्दशविधं वेदितव्यं । आदित एव सुगृहीतं भवति श्रामण्यसंबोधिकामतया न जीविकानिमित्तम् । नातिलीनं भवति व्यतिक्रमे मन्दकौकृत्यापगतत्वात् । नातिसृतं भवत्यस्थानकौकृत्यापगतत्वात् । कौसीद्यापगतं भवति निद्रासुखपार्श्वसुखशयनसुखास्वीकरणतया रात्रिंदिवं कुशलपक्षाभियोगाच्च । अप्रमादपरिगृहीतं भवति ।
*(contd. on p. 52)*

विशुद्धिश्च[।] क्वचित् पुनर्भगवता[5]शीलं मूलार्थेनोक्तं। यथोक्तं—

**सुप्रतिष्ठितमूल[:]स्याच्चित्तस्योपशमे रतः।**
**संयुक्ता च विसंयुक्ता दृष्ट्वा[।]दृष्ट्वार्यंपापयेति गाथा ॥**

क्वचिदलंकार शब्देनोक्तं। **यथोक्तं शीलालंकार-सम्पन्नो** भिक्षुर्व्वा भिक्षुणी वा अकुशलं प्रजहाति कुशलं भावयति। **क्वचिदनुलेपनशब्देनोक्तं। यत्राह। शीलानुलेपनसम्पन्नो** भि[6]क्षुर्व्वा भिक्षुणीवेति पूर्व्ववत्। **क्वचिद्गन्धशब्देनोक्तं।** अस्ति तद्दानं यद्गन्धजातं यस्यानुवातमपि गन्धो वाति प्रतिवाम(त)मप्यनुवातमपि गन्धो वाति।[1] क्वचित् **सुचरित-शब्देनोक्तं। यत्राह।** कायसुचरितस्येष्टो विपाको

---

*(contd. from p. 51)*

पूर्व्ववत् पञ्चाङ्गाप्रमादप्रतिनिषेवणतया। सम्यक्प्रणिहितं भवति लाभसत्कार-गर्वविगमात् देवत्वाय प्रणिधाय ब्रह्मचर्यावासानभ्युपगमाच्च। आचारसंपत्त्या परिगृहीतमीर्यापथेतिकरणीयकुशलपक्षप्रयोगेषु सुसम्पन्नप्रतिरूपकायवाक्समुदाचार-तया। आर्जीवसम्पत्त्या परिगृहीतं कुहनादिसर्वमिथ्याजीवकरकदोषविवर्जिततया। अन्तद्वयविवर्जितं कामसुखल्लिकात्मक्लमथानुयोगविवर्जितत्वात्। नैर्याणिकं सर्वतीर्थिकदृष्टिविवर्जिततया। समादानापरिभ्रष्टं शीलं बोधिसत्त्वानामछि(च्छि)-द्रीकरणाविपादनतया। इत्येतद् दशाकारं शीलं बोधिसत्त्वानां विशुद्धमित्युच्यते। Bodhi., p. 128.

1. cp. आर्यवज्रध्वजसूत्र (S Ś, p. 22) : सर्वसत्त्वाः शीलगन्धोपेता भवन्तु अनाच्छेद्यशीलाः बोधिसत्वपारमिताशीलाः; cf. also, महावस्तु, I.293-4:

............ग्रीष्माणमासे प्रथमे चैत्रस्मि।
वने प्रगुल्मा यथ पुष्पिताग्रा, वातेरिता ते सुरभि प्रवान्ति ॥
एवंविधं ध्यायिनो बुद्धपुत्राः शीलेनुपेता सुरभि प्रवान्ति।
इदं पि संघे रतनं प्रणीतं एतेन सत्यं सुस्वस्ति भोतु ॥
मनुष्यतो वा अमनुष्यतो वा ॥ ; cp. Dh. pp. 54, 55.

दृष्टे **धर्मे** **अभिसंपराये** **च** एवं वाक्सुचरितस्य[।]
**क्वचित्सम्वरशब्देनोक्तम्** । **यत्राह** । दाता दानपतिः
शीलवान्[7]भवति । सम्वरस्थायी आगमदृष्टिः
फलदर्शी । **अपिचोक्तं** । शीलवान् विहरति । प्राति-
मोक्षसम्वरसंवृत इति विस्तरः ।[1]

केन कारणेन भगवता **शीलं** **मूलशब्देनोक्तम्** ।
**1B—10**// //[**1**] प्रतिष्ठार्थं आधारार्थो मूलार्थः । तच्चैतच्छीलं
सर्व्वेषामेव लौकिकलोकोत्तराणां[शुद्धाना[2]] मनवद्या-
नामग्र्याणां प्रवराणां सुखाहाराणां, प्रतिष्ठास्थानीयं
चोत्पत्तये, प्रतिलंभाय तस्मान्मूलशब्देनोच्यते ।
तद्यथा **पृथिवी** **प्रतिष्ठा** भवत्याधार[स्तृणगु[2]]
ल्मौषधिवनस्पतीनामुत्पत्तये[3] एवमेव शीलम्विस्तरेण
पूर्व्ववद्वाच्यम् ।

[**2**]केन कारणेन **शीलमलंकारशब्देनाख्यातं** ।
आह । यानि तदन्यानि भूषणानि तद्यया हर्षम्वा,
कटाहा वा, केयूरा वा, मुद्रिका वा, जातरूपरजतमाला
वा तानि यावदयं दह्रो भवति । शिशु[ः] कृष्णकेशः

1. cf. इध, भिक्खवे, भिक्खु सीलवा होति, पातिमोक्खसंवरसंवुतो विहरति आचारगोचरसम्पन्नो .... A. N. I.226, 227, 228; Mn. p. 423 etc.
2. Letters damaged by pin-hold.
4. See Śatapatha Br., VI.1.1; X.6.1.4; I.9.1.29, I.9.3.11; III.9.3.2; Kau. Br., IX.4; XIV.3; A. B. VIII.1.; JUB, I.10.2; III.20.8. GBU, VI.2 and elsewhere.

प्रत्यग्रयौवनसमन्वागतः तावदस्य विभूषणानि प्रावृतानि शोभामात्रां जनयन्ति । न त्वेवं पुनर्जीर्ण्णस्य, वृ[3]द्धस्य, महल्लस्याशीतिकस्य वा, नावतिकस्य वा, शण्डदन्तस्य, पलितशिरसो, नान्यत्र तैर्विभूषणैः प्रावृतैः स विडम्बित इव ख्याति । आरोग्यव्यसने वा, भोग-व्यसने वा, ज्ञातिव्यसने वा प्रत्युपस्थिते न शोभते । शीलं पुनः सर्व्वेषां सर्व्वकालञ्च शोभाकारं भवति । तस्मादलंकारशब्देनोच्यते ॥

**केन कारणेन[4]शीलमनुलेपनशब्देनोक्तम् ।** तत्र बहुकुशलमनवद्यं शीलसमादानं सर्व्वदौःशील्य-समादानहेतुकं कायपरिदाहं चित्तपरिदाहं अपनयति । घर्माभितप्तस्य उत्तमग्रीष्मपरिदाहे काले प्रत्युपस्थिते चन्दनानुलेपनं वा कर्पूरानुलेपनं वा अनेन कारणेन शीलमनुलेपनशब्देनोच्यते ॥

**केन कार[5]णेन शीलं गन्धजातशब्देनोच्यते ।** शीलवतः खलु पुरुषपुद्गलस्य दिग्विदिक्षु कल्याणः (णं) कीर्त्तियशः शब्दश्लोको निश्चरति । विविधा-नाम्वा मूलगन्धजातानां, सारगन्धजातानाम्वा, पुष्प-गन्धानाम्वातेरितानां दिग्विदिक्षु मन आपो गन्धो निश्चरति । अनेन कारणेन शीलं गन्धजातशब्देनो-च्यते ॥

**केन का[6]रणेन शीलं सुचरितशब्देनोच्यते ।** सुखगामिनी एषा चर्या स्वर्गगामिनी सुगतिगामिनी ।

एषा चर्या । तस्मात् सुचरितमित्युच्यते ।।

**केन कारणेन शीलं सम्वरशब्देनोच्यते ।** निवृत्तिस्वभाव एष धर्मो निवृत्तिलक्षणो विरतिस्वभाव: । तस्मात् सम्वर[7]शब्देनोच्यते । अस्य खलु शीलसम्वरस्य त्रिविधा प्रत्यवेक्षा परिशुद्धिनिमित्तं [।] कतमा त्रिविधा [।] यदुत कायकर्मप्रत्यवेक्षा, वाक्कर्मप्रत्यवेक्षा, मन:कर्मप्रत्यवेक्षा ।

2A—1// //[1][तत्र च पुनरेतानि[1]] कर्माणि प्रत्यवेक्षमाण[:]शीलसम्वरं परिशोधयति । यत्कर्म कायेन प्रणिहितं भवति कर्त्तुं तदेव प्रत्यवेक्षते । किन्नु व्याबाधिकं मे एतत् कार्यं कर्म आत्मना अन्तराय:

1A—7// //[1] परेषा[मकु[2]] शलं दु:खोदयं दु:खविपाकमाहोस्विदव्याबाधिकं मे एतत् कायकर्मात्मन: परेषां कुशलं सुखोदयं सुखविपाकं स चेत्स एवं प्रत्यवेक्षमाणो जानाति व्याबाधिकं मे एतत्कायकर्मात्मनो वा, परस्य वा अकुशलं[[3]रागोदयं, रागविपाकं, स चेत्स एवं प्रत्यवेक्षमाणो न च][2]रति । तत्कर्म न करोति । नानुप्रयच्छति । स चेत्पुनर्जानात्यव्याबाधिकं मे एतत् कायकर्म कुशलं पूर्व्ववत स करोति । तत् कायेन कर्म

1. MS. erazed.
2. Letters damaged by pin-hold.
3. MS, leaf folded, portion reconstructed by us,

न प्रतिसंहरति, अनुप्रयच्छति । यदप्यनेनातीतमध्वानमुपादाय कायेन कर्म कृतं भवति । तदप्यभीक्ष्णं प्रत्यवेक्षते । किन्तु व्याबाधिकं मे एतत् पूर्ववत् । स विज्ञानां सब्रह्मचारिणां सचेत् स ए[वं[1]] प्रत्यवेक्षमाणो [[2]जानाति व्याबाधिकं] [3]मे एतत् कर्म्म पूर्ववत् । सविज्ञानां सब्रह्मचारिणामन्तिके प्रतिसंहरति । अनुप्रयच्छति । यदप्यनेनातीतमध्वानमुपादाय कायेन कर्म कृतं भवति । तदप्यभीक्ष्णं प्रत्यवेक्षते [।] किन्नु व्याबाधिकं मे एतत् पूर्ववत् । सविज्ञानां सब्रह्मचारिणा[मन्तिके[1]] सचेत् स एवं प्रत्यवेक्षमाणो जानाति व्याबाधिकं मे एतत् कर्म पूर्ववत् [।] [4] स विज्ञानां सब्रह्मचारिणामन्तिके प्रतिदेशयति, यथाधर्मं प्रतिकरोति । स चेत् पुनरेवं प्रत्यवेक्षमाणो जानात्यव्याबाधिकं मे एतत् कायकर्म पूर्ववत् [।] स तेनैव प्रीतिप्रामोद्येनाहोरात्रानुशिक्षी बहुलम्विहरत्येवमस्य तत्कायकर्म सुप्रत्यवेक्षितं च भवति । सुविशोधितं च । यदुतातीतानागतप्रत्युत्पन्नेष्वध्वसु[।] यथा का[5]यकर्म एवं वाक्कर्म वेदितव्यं । अतीतान् संस्कारान् प्रतीत्योत्पद्यते मनः । अनागतान्, प्रत्युत्पन्नान् संस्कारान् प्रतीत्योत्पद्यते मनः । तन्मनो[अ]भीक्ष्णं प्रत्यवेक्षते [।] किन्नु व्याबाधिकं मे एतन्मनः पूर्ववत् ।

1. Omitted in the MS., added by us.
2. MS. leaf folded, portion reconstructed by us.

यावन्नोत्पादयति । प्रतिसंहरति, नानुप्रयच्छति । तन्मनस्कर्म [।] शुक्लपक्षेण पुनरुत्पादयति, न प्रतिसंहरति, अनुप्रयच्छति[6]तन्मनस्कर्म । एवमनेन तन्मनः कर्म प्रत्यवेक्षितं भवति । सुपरिशोधितं। यदुतातीतानागतप्रत्युपन्नेष्वध्वसु[1] [।] तत्कस्य हेतोरतीते[अ]प्यध्वनि अनागते[अ]पिप्रत्युत्पन्ने[अ]पि ये केचिच्छ्रमणा वा, ब्राह्मणा वा, कायकर्म, वाक्ककर्म, मनस्कर्म प्रत्यवेक्ष्य परिशोध्य, परिशोध्य, बहुलं व्याहार्षुः, सर्व्वे ते एवं प्रत्यवेक्ष्य, परिशोध्य[2] च [।] य[7]**थोक्तं भगवता आयुष्मन्तं राहुलमारभ्य ।**

*कायकर्माथ वाक्कर्म मनस्कर्म च राहुल ।*
*अभीक्ष्णं प्रत्यवेक्षस्व स्मरन् बुद्धानुशासनम् ॥*
*एतच्छ्रामणकं कर्म अत्र शिक्षस्व राहुल ।*
*अत्र ते शिक्षमाणस्य श्रेय एव न पापकम् ॥*

तत्र यदेवं विचिनोति तत् कायकर्म, वाक्ककर्म, मनस्कर्म किं व्याबाधिकं मे इति विस्तरेण

1. cf., aṁbalaṭṭhikarāhulovādasuttaṁ, M. N., II.92 sq.
2. cp. ibid, pp. 98-9 : ये केचि राहुल, अतीतमद्धानं ··· अनागतमद्धानं ·· ··एतरहि समणा वा ब्राह्मणा वा कायकम्मं परिसोधेन्ति, वचीकम्मं परिसोधेन्ति, मनोकम्मं परिसोधेन्ति, सब्बे ते एवमेवं पच्चवेक्खित्वा पच्चवेक्खित्वा कायकम्मं परिसोधेन्ति, पच्चवेक्खित्वा पच्चवेक्खित्वा वचीकम्मं परिसोधेन्ति, पच्चवेक्खित्वा पच्चवेक्खित्वा मनोकम्मं परिसोधेन्ति ।

पूर्व्ववदियं **प्रत्यवे**[8][**क्षणा**[1]] [।] यत्पुनरेकत्यं प्रतिसंहरति प्रतिदेशयत्येकत्यमनुप्रयच्छति । तेनैव प्रीतिप्रामोद्येनाहोरात्रानुशिक्षी बहुलं विहरतीयमुच्यते **परिशोधना** [।]

तत्रैवं परिशुद्धस्य शीलसम्वरस्य दशानुशन्सा-

1. cp. ibid, p. 99 : तस्मातिह राहुल 'पच्चवेक्खित्वा कायकम्मं पच्चवेक्खित्वा परिसोधेस्सामि, पच्चवेक्खित्वा पच्चवेक्खित्वा वचीकम्मं परिसोधेस्सामि, पच्चवेक्खित्वा पच्चवेक्खित्वा मनोकम्मं परिसोधेस्सामी' ति-एवं हि ते, राहुल सिक्खितब्बं' ति।
So far, no parallel verses in Pāli have been met with, but corresponding ideas are found scattered throughout the whole corpus of the extant Tripiṭaka, e.g., K. N., VI.321 (Apadāna) Vs. 42; p. 232, Vs. 37 :

कायेन कुसलं कत्वा, वाचाय कुसलं बहु ।
मनसा कुसलं कत्वा, अब्यापज्जं निरूपधि ॥

cp. also S. N., I.40 (Vs. 88), p. 51, para 23; p. 72 (अत्तरक्खितसुत्त) :

कायेन संवरो साधु, साधु वाचाय संवरो ।
मनसा संवरो साधु, साधु सब्बत्थ संवरो ॥
सब्बत्थ संवुतो लज्जी, रक्खितो ति पवुच्चति ॥ ; p. 92 :
यं च करोति कायेन, वाचाय उद चेतसा ।
तं हि तस्स सकं होति, तं व आदाय गच्छति ।
तं वस्स अनुगं होति, छाया व अनपायिनी ॥
तस्मा करेय्य कल्याणं, निचयं सम्परायिकं ।
पुञ्ञानि परलोकस्मिं पतिट्ठा होन्ति पाणिनं ॥ ति;

the above Sanskrit verses might have been taken from the मध्यमागम of the Mahāyana Buddhists, which is no more extant.

(शंसा) वेदितव्या[1][:।] कतमे दश। इह शीलवां[2]-(वान्) विहरति पुरुषपुद्गलः शीलविशुद्धिमात्मनः

1. MS. slightly damaged.
2. This is called शीलसम्पत् also; cp. Aṭṭhaśālini, p. 45: सोरच्चमेव सीलस्स सम्पादनतो सीलस्सपरिपूरणतो सीलस्स सीम्पदा ति सील सम्पदा; cf. also सीलविसुद्धि, ibid, loc. cit.; cp. Psm., pp. 52-3 सोतापत्तिमग्गेन दिट्ठेकट्ठानं किलेसानं····सकदागामिमग्गेन ओळारिकानं किलेसानं····अनागामिमग्गेन अनुसहगतानं किलेसानं····अरहत्तमग्गेन सब्बकिलेसानं पहानं सीलं, वेरमणी सीलं, चेतना सीलं, संवरो सीलं, अवीतिक्कमो सीलं। एवरूपानि सीलानि चित्तस्स अविप्पटिसाराय संवत्तन्ति, पामोज्जाय संवत्तन्ति, पीतिया संवत्तन्ति, पस्सद्धिया संवत्तन्ति, सोमनस्साय संवत्तन्ति, आसेवनाय संवत्तन्ति, भावनाय····बहुलीकम्माय····, अलङ्काराय····परिक्खाराय····, परिवाराय····, पारिपूरिया····, एकन्तनिब्बिदाय विरागाय निरोधाय उपसमाय, अभिञ्ञाय, सम्बोधाय निब्बानाय संवत्तन्ति। cf. D. N., II.68-9: पञ्चिमे, गहपतयो, आनिसंसा सीलवतो सीलसंपदाय। कतमे पञ्च? इध····सीलवा सीलसम्पन्नो अप्पमादाधिकरणं महन्तं भोगक्खन्धं अधिगच्छति।····सीलवतो सीलसम्पन्नस्स कल्याणो कित्तिसद्दो अब्भुगच्छति।····सीलवा सीलसम्पन्नो यं यदेव परिसं उपसंकमति····विसारदो उपसङ्कमति अमङ्कुभूतो····सीलवा सीलसम्पन्नो असम्मळ्हो कालं करोति।····सीलवा सीलसम्पन्नो कायस्स भेदा परं मरणा सुगतिं सग्गं लोकं उप्पज्जति····।; cf. also M. N., I.45; A. N., IV.100-3; Vsm., I.23-4; I.10-5; cp. SR, XXVII, p. 160: दशेमे कुमार अनुशंसाः परिशुद्धशीलस्यबोधिसत्त्वस्य महासत्त्वस्य। कतमे दश? यदुत ज्ञानं च परिशोधयति परिपूरयति। बुद्धानां भगवतामनुशिक्षते। अगर्हितो भवति पण्डितानां। प्रतिज्ञातो न चलति। प्रतिपत्तौ तिष्ठति। संसारात् पलायते। निर्वाणमपंयति। निष्पर्युत्थानो विहरति। समाधिं प्रतिलभते। अदरिद्रश्च भवति।····See gāthās 1-6; cp. also, pp. 158-9 (XXVI. दानानुशंसापरिवर्तः); see also, XXVIII, p. 161 f.; cp. Bodhi, p. 128 quoted *supra*, p. 51, f.n. 3.

1B—7// प्रत्यवेक्षमाण: **अविप्रति** //[1][सारं प्र[1]] **तिलभते।** अविप्रतिसारिण: प्रामोद्यं प्रमुदितचित्तस्य **प्रीतिर्जायते।** प्रीतमनस: **काय:प्रश्रभ्यते।** प्रश्रब्धकाय: **सुखं** वेदयते। सुखितस्य **चित्तं समाधीयते।** समाहितचित्तो **यथाभूतं प्रजानाति।** यथाभूतं पश्यति। यथाभूतं जानन् पश्यन्निर्विद्यते[।]**निर्व्विण्णो** विरज्यते, **विरक्तो** विमुच्यते, **विमुक्तस्य** विमुक्ति[:] स्मृतिर्ज्ञा-(विमुक्तिज्ञा)नदर्शनं[2]भवति। यावन्निरुपधिशेषे निर्व्वाणधातौ परिनिर्व्वाति। यच्छीलवान् पुरुषपुद्गल: शीलविशुद्धय्धियतेयमविप्रतिसारं प्रतिलभते। अनुपूर्व्वेण यावन्निर्वाणगमनायायं प्रथम: शीलानुशन्स: (शंस:)। पुनरपरं शीलवां(वान्)पुरुषपुद्गल: मरण कालसमये प्रत्युपस्थिते, कृतं एतन्मे सूक्तं त [···](सुचरितं) कायेन वाचा मनसा न कृतं एत[3]न्मे दुश्चरितं कायेन पूर्व्ववत्। इति या गति:। कृतपुण्यानां कृतकुशलानां कृतभयभीरुप्राणानां तां गतिं प्रेत्य गमिष्यामीति द्वितीयमविप्रतिसारं प्रतिलभते (।) सुगतिगमनाय, अविप्रतिसारिणो हि पुरुषपुद्गलस्य **भद्रकं मरणं भवति।** भद्रिका कालक्रिया भद्रको[अ]भिसम्पराय:। अयं द्वितीय: शीलानुशन्स: (शंस:)।।

पुनरपरं [4]शीलवत: पुरुषपुद्गलस्य **कल्याणो**

---

1. MS. leaf brittled and torn, text reconstructed by us.

**वर्ण्णः कीर्तिर्यशः** [:] **शब्दश्लोको निश्चरति ।** अयं तृतीयः शीलानुशन्सः (शंसः) ॥

पुनरपरं शीलवान् पुरुषपुद्गलः **सुखं स्वपिति** सुखं प्रतियुज्यते । निष्परिदाहेन कायेन चित्तेन चायं चतुर्थः शीलानुशन्सः (शंसः) ।

पुनरपरं शीलवां(वान्)पुरुषपुद्गलः **सुप्तो[अ]पि देवानां रक्ष्यो भवति** । [5] अयं पञ्चमः शीलानुशन्सः (शंसः) ॥

पुनरपरं शीलवान् पुरुषपुद्गलः **न शंकी भवति ।** परतः पापस्य, न भीतेश्च संत्रस्तमानसः [।] अयं षष्ठः शीलानुशन्सः (शंसः) ॥

पुनरपरं शीलवां(वान्) पुरुषपुद्गलः **बधकानां** प्रत्यर्थिकानामपि प्र——त्राणां[1] छिद्रप्राप्तो[अ]पि **रक्ष्यो भवति ।** सर्वदायं पुरुषपुद्गल इति विदित्वा मित्रताम्वा[ऽऽ]पद्यन्ते(ते)[6]मध्यम-स्थताम्वा[।]अयं सप्तमः शीलानुशन्सः ॥

पुनरपरं पूर्व्वबह्वास्थानानां **यक्षाणां** निवासिका-नाममनुष्याणां छिद्रप्राप्तो[अ]पि **रक्ष्यो भवति ।** यदुत तदेव शीलमधिपतिं कृत्वा [।] अयमष्टमः शीलानुशन्सः (शंसः) ॥

पुनरपरं शीलवान् पुरुषपुद्गलः **धर्मेणाल्पकृच्छ्रेण परतो लाभं लभन्ते(लभते) ।** यदुत चीवरपिण्ड-

1. Letters indistinct.

पातशय[7] नासनग्लानप्रत्ययभैषज्यपरिष्कारान्यदुत शीलाधिका(क)रणहेतोः सत्कृतश्च भवति। गुरुकृतो राज्ञां राजामात्राणां नैगमजानपदानां धनिनां श्रेष्ठिनां सार्थवाहानां [।] अयं नवमः शीलानुशन्सः (शंसः) ।।

पुनरपरं पूर्व्ववत्सर्व्वप्रणिधानानि समृध्यन्ति। स चेदाकांक्षते कामधातौ क्षत्रियमहासालकुलानां, ब्राह्मणमहा[8]सालकुलानाम्वा, गृहपतिमहासाल-कुलानां वा चातुर्महाराजकाणि कानाम्वा (चातुर्म-हाराजिकाणां वा) देवानां, त्रा(त्र)यस्त्रिंशा-नाम्वा, यामानां, तुषितानां, निर्माणरतीनां, पर-निर्मितवशवर्त्तिनां देवानां सभागतोयोपपद्यो (सभा-गतायामुपपन्नो) यथापि तद्विशुद्धत्वाच्छीलानां समदानां अत्यर्थंजातं ध्यानानि च समापद्य दृष्टे धर्मे सुखं विह

1A—8// //[1]रेयं। रूपोपमानां च देवानां सभागतायोपपद्येय-(यामुपसम्पद्येय) विहरे[य एत[1]]द्यश एतच्च शीलवतो वीतरागस्य प्रणिधानं समृध्यति। स चेदाकांक्षते।...[2] विमोक्षा......स्याद्वोपसम्पद्य विहरेयं। आरूप्योपग-तानाम्वा देवा[नां स[1]] भागतायो(यामु)पपद्येय पूर्व्ववत् ।। स चेदाकांक्षते अत्यन्तनिष्ठनिर्व्वाणमधि-गच्छे[2]यमित्यधिगच्छति ।। (तद्गति[3]) शुद्धत्वा-

1. Letters lost by pin-hold.
2. MS. dim and illegible.
3. MS. dim and indistinct, may also be तथापि ?

च्छीलानां सर्व्वत्र च वीतरागस्य [।] अयं दशम: शीलानुशंसो वेदितव्य: ।।

निर्दिष्ट: शीलस्कन्धो विभागश:, निर्दिष्टा विपत्तिसम्पत्ति: । निर्दिष्टानि पर्यायनामानि । निर्दिष्टा परिशुद्धिप्रत्यवेक्षा, निर्दिष्टो[अ]नुशंस: ।।

स एष सर्व्वाकारपरिपूर्ण्ण: शीलसम्वर: संभार-परिगृहीत आख्यात: कथि[3]मो(तो) विवृत: प्रकाशितो यत्रात्मकामै: श्रामण्यब्राह्मण्यकामै: कुलपुत्रै: शिक्षितव्यं ।।

।। उद्दानं ।।

*विभंगस्त्रिविधो ज्ञेय: सम्पद् दशविधा भवेत् ।*
*पर्यायश्च षडाकारो विशुद्धिस्त्रिविधा मता ।*
*अनुशन्सो(शंसो)दशविध: एषो[ऽ]सौ शीलसम्वर: ।।*

**इन्द्रियसम्वर:**[1] **कतम:** । यथापीहैकत्य: [4]

---

1. In Vm., Buddhaghosa enumerates इन्द्रियसंवर as a special kind of सील (I.25, 42). On the basis of Vibhaṅga, p. 298 and D. N., I.62, he prefers to call it सतिसंवर instead of इन्द्रियसंवर. इन्द्रियसंवर has been defined in the Pāli Tripiṭaka as : इधेकच्चो चक्खुना रूपं दिस्वा न निमित्तग्गाही होति नानुब्यञ्जनग्गाही । यत्वाधिकरणमेनं चक्खुन्द्रियं असंवुतं विहरन्तं अभिज्झा दोमनस्सा पापका अकुसला धम्मा अन्वास्सवेय्युं, तस्स संवराय पटिपज्जति, रक्खति चक्खुन्द्रियं, चक्खुन्द्रिये संवरं आपज्जति ।····रक्खति मनिन्द्रियं, मनिन्द्रिये संवरं आपज्जति । या इमेसं छन्नं इन्द्रियानं गुत्ति गोपना आरक्खो संवरो—अयं वुच्चति 'इन्द्रियेसु गुत्तद्वारता' इमाय इन्द्रियेसु गुत्तद्वारताय उपेतो होति समुपेतो····पे०····समन्नागतो । तेन वुच्चति 'इन्द्रियेसु

*(contd. on p. 64)*

इन्द्रियैर्गुप्तद्वारो विहरत्यारक्षितस्मृतिर्निपकस्मृतिरित्ति विस्तर: । तत्र कथमिन्द्रियैर्गुप्तद्वारो विहरत्यारक्षित-स्मृतिर्भवति । निपकस्मृतिरिति विस्तरेण यावद्रक्षति मन इन्द्रियं मन इन्द्रियेण [।] स एवं समापद्यते । एवमिन्द्रियैर्गुप्तद्वारो विहरति ।

तत्र **कथमारक्षितस्मृतिर्भवति** । यथापीहैकत्येने [5]न्द्रियगुप्तद्वारतामेवाधिपतिं कृत्वा श्रुतमुद्गृहीतं भवति । चिन्तितम्वा पुनर्भावितम्वा । तेन च श्रुत-चिन्ताभावनाधिपतेया स्मृति: प्रतिलब्धा भवति ।[1]

---

*(contd. from p. 63)*

गुत्तद्वारो' ति । Vibhaṅga, pp. 298-9; Dh. S., p. 290; M. N., I.231 (इन्द्रियसंवर:); D. N. I.62; See, Vsm, I.25, 42, 126, and 59 : एवमिदं मङ्कुपतो रूपादिसु किलेसानुबन्धनिमित्ता-दिग्गाहपरिवज्जनलक्खणं इन्द्रियसंवरसीलं ति वेदितब्बं (I.59); cp. As., V. 135 (pp. 317-8); cf. Ada, p. 124 : इन्द्रियसंवर: कतम: । नोपगन्तुं प्राप्यचिन्तयति मातृग्रामं । अग्रजानुजातनुजासंज्ञया पश्यन् स्त्रियं न चिन्तयति न स्त्रीन्द्रियसंज्ञास्मृतिं जनयति यतो भवन्ति भूय: क्लेशा:, see, Ś S, p. 191.

1. cp. प्रयोमादङ्गमान्निध्यात्सभागत्वाच्च सन्तते: ।
प्राग्विज्ञानानुभूतेऽर्थे चेतस्युत्पद्यते स्मृति: ॥ (Abd., Vs. 27)

प्रणिधानानुभवज्ञानपाटवसातत्यकारित्वाभ्यामसहकारित्वाभ्याममहकारिकारण-साम्निध्ये सन्तत्यानुकूलेभ्य: पूर्वविज्ञानानुभूते रूपादौ वस्तुनि स्मृतिरुत्पद्यते (Adv., p. 22); cp. also, ibid. p. 69 : चित्तव्यापाररूपा स्मृति: । चित्त-स्यार्थाभिलपना कृतकर्तव्यक्रियमाणकर्मान्ताविप्रमोषलक्षणा, cf. Ada., pp. 116, 123; Trb., ad vs. 3. cd; cp. Y. S. with Y. B. and Vṛtti I.11; Vsm, XIV.141, cp. also I.8; IV.49; cf. S Ś, p. 68 :

*(contd. on p. 65)*

स तस्या एव स्मृतेः प्रतिलब्धायाः असंप्रमोषार्थमधिगमार्थमविनाशार्थं कालेन कालं तस्मिन्नेव श्रुते योगं करोत्यभ्य[ा]सं करोति, चिन्तायां[6]भावनायां योगमभ्यासं करोति । न भवति[1] स स्त प्रयोगा यि—कृत प्रयोग एवमनेन तस्या[ः]श्रुतसमुदागमता-(गता)याश्चिन्ता—समुदागतायाः स्मृतेः कालेन कालं श्रुतचिन्ताभावनायोगक्रिय(ा)या आरक्षा कृता भवति । एवमारक्षितस्मृतिर्भवति ।

**कथं निपकस्मृतिर्भवति ।** स तस्यामेव स्मृतौ नित्य[7]कारी च भवति । [निर्य[ा]णकारी च भवति[2]]। तत्र या नित्यकारिता इयमुच्यते सातत्य-कारिता । तत्र या निर्य[ा]णकारिता इयमुच्यते सत्कृत्यकारिता । स एवं सातत्यकारी सत्कृत्यकारी निपकस्मृतिरित्युच्यते[3] । स तथारक्षितस्मृतिर्भवति । तथा तां स्मृतिं न संप्रमोषयति । स तथानिपक-
1B—8// स्मृतिर्भवति । तथा तस्यामेवाप्र//[1]मुषितायां

---

*(contd. from p. 64)*

यया स्मृत्या सर्वक्लेशानां प्रादुर्भावो न भवति । यया स्मृत्या सर्वमारकर्मणामवतारं न ददाति । यया स्मृत्या उत्पथे वा कुमार्गे वा न पतति । यया स्मृत्या दौवारिकभूतया सर्वेषामकुशलानां, चित्तचैतसिकानां धर्माणामवकाशं न ददाति । इयमुच्यते सम्यक्स्मृतिरिति ।

1. MS. dim and illegible.
2. Added by a separate hand in a footnote, not legible.
3. cf. Vbh., p. 300.

स्मृतौ बलाधानप्राप्तो भवति। येन शक्तो भवति प्रतिबलश्च रूपाणामभिभवाय शब्दानां, गन्धानां, रसानां, स्प्रष्टव्यानां, धर्माणामभिभवाय।

**कथं स्मृत्या[ऽऽ]रक्षितमानसो भवति।** चक्षुः प्रतीत्य रूपाणि चोत्पद्यते। चक्षुर्वि[ज्ञानं, च[1]]-क्षुर्विज्ञानानन्तरमुत्पद्यते। विकल्पकं मनोविज्ञानं येन[2]विकल्पकेन मनोविज्ञानेन प्रियरूपेषु रूपेषु संरज्यते। अप्रियरूपेषु रूपेषु व्यापद्यते[।] स भा-(ता)मेवाधिपतिं कृत्वा तस्मादयोनिशो विकल्पात् संक्लेशसमुत्थापकात्तस्मात् संरक्षति। यथा संक्लेशो नोत्पद्यते। एवं श्रोत्रं घ्राणं जिह्वां कायं मनः प्रतीत्य धर्मांश्चोत्पद्यते मनो[3]विज्ञानं। तच्च मनोविज्ञानमस्यायोनिश[ो]विकल्पसहगतं संक्लेश-समुत्थापकं। येन प्रियरूपेषु धर्मेषु संरज्यते। अप्रियरूपेषु धर्मेषु व्यापद्यते। स तस्मादयोनिशो-विकल्पात संक्लेशसमुत्थापकात्तन्मानसं रक्षत्येवमस्य संक्लेशो नोत्पद्यते। एवं स्मृत्यारक्षितमानसो[4]-भवति॥

**कथं समावस्थावचारको भवति।** समावस्थोच्यते। उपेक्षा कुशला वा, अव्याकृता वा [।] स तस्मादयोनिशो विकल्पात् संक्लेशसमुत्थापकात् तन्मानसं रक्षित्वा कुशलायाम्वा उपेक्षायामव्याकृतायाम्वा अवचारयति।

---

1. Letters lost by pin-hold.

तेनोच्यते समावस्थावचारक: । एवं समावस्थावचार-[5] को भवति ।

कथं पुनस्तस्मादयोनिशो विकल्पसंक्लेशसमुत्थापकान् मानसं रक्षति । न निमित्तग्राही भवति । तेषु रूपेषु, शब्देषु, गन्धेषु, रसेषु, स्प्रष्टव्येषु, धर्मेषु नानुव्यंजनग्राही भवति यतो [अ]धिकरणमस्य पापका अकुशला धर्माश्चित्तमनुस्रवेयु: । स चेत् पुन: स्मृतिसंप्रमोषात् क्ले[6]शप्रचुरतया वा विवर्जयतो[अ]पि निमित्तग्राहम-(होऽ)नुव्यंजनग्राह[:स]मुत्पद्यते एव । पापका अकुशलातो दु:गृहीतो (पापकादकुशलतो दुर्गृहीतो) भवति

1A—5// //[2]के(ये) **धर्मा अनुसरन्त्येव** । चित्तं तेषां सम्वराय प्रतिपद्यते । आभ्यां द्वाभ्यामाकाराभ्यां तस्मात् संक्लेशसमुत्थापकादयोनिशोविकल्पात्तन्मानसं रक्षितं भवति ।।

कथं च पुनस्तन्मानसमाभ्यामाकाराभ्यां संर[3]क्ष्य कुशलायाम्वा उपेक्षायामवधारयत्यव्याकृतायाम्वा[।]द्वाभ्यामेवाकाराभ्यां [।] कतमाभ्यां द्वाभ्यां [।] यथाह रक्षति चक्षुरिन्द्रियं चक्षुरिन्द्रियेण सम्वरमापद्यते । यथा चक्षुरिन्द्रियं चक्षुरिन्द्रियेण सम्वरमापद्यते । से(ए)वं श्रोत्रघ्राणजिह्वाकायां-(यान्), रक्षति मन इन्द्रियं मन इन्द्रियेण सम्वरमापद्यते । आभ्यां द्वा[4]भ्यामाकाराभ्यां कुशलायाम्वा, अव्याकृतायाम्वा उपेक्षायां तन्मानसमेव चारयति[1] ।।

1. May also be read as धारयति.

**कथं चक्षुर्विज्ञेयेषु रूपेषु न निमित्तग्राही भवति।** **निमित्तग्राह** उच्यते। यच्चक्षुर्विज्ञानगोचरो रूपे तस्य गोचरस्य ग्राही भवति। चक्षुर्विज्ञानेन [।] एवं निमित्तग्राही भवति। यदुत चक्षुर्विज्ञेयेषु रूपेषु श्रोत्र-घ्राण[5]जिह्वाकायमनोविज्ञेयेषु रूपेषु अपरा जाति-[र्][2]निमित्तं। स चेत् पुनस्तं गोचरं परिवर्जयति। चक्षुर्विज्ञानस्यैवं न(च) न निमित्तग्राही [भ[1]]वति। चक्षुर्विज्ञेयेषु रुपेष्वेवं श्रोत्र घ्राणजिह्वाकायमनोविज्ञेयेषु धर्मेषु [।]

**कथं नानुव्यंजनग्राहीभवति।** चक्षुर्विज्ञेयेषु रूपेषु [।] अनुव्यंजनग्राह उच्यते। यस्तेष्वेव[6]चक्षु-र्विज्ञेयेषु रूपेषु चक्षुर्विज्ञानस्यैव समनन्तरसहोत्पन्नस्य विकल्पकस्य मनोविज्ञानस्य यो गोचरः संरागाय वा, संद्वेषाय, वा संमोहाय वा तं गोचरं परिवर्जयति। नोत्पादयति तदालम्बनं। तन्मनोविज्ञानमेवं नानु-व्यंजनग्राही भवति। यदुत चक्षुर्विज्ञेयेषु रूपेषु [।] एवं श्रोत्रघ्राणजिह्वाकाय[7]मनोविज्ञेयेषु धर्मेषु अपरा जातिर्निमित्तग्राहस्यानुव्यंजनग्राहस्य च। तत्र **निमित्त-ग्राहो** यच्चक्षुषा रुपाण्याभासगतानि तज्जं मनस्कारं
**1B—5//** संमुखीकृत्य पश्यति [।]//[1]तत्रानुव्यंजनग्राहः। तान्येव रूपाणि चक्षुषा आभासगतानि तज्जं मनसिकारं संमुखीकृत्य पश्यति। अपितु परतो[अ]नुस्रवपूर्व्वकं

1. A separate hand adds this.

श्रृणोति । सन्त्येवं रूपाण्येवं रूपाणि चक्षुर्विज्ञेयानि रूपाणीति यानि तानि तदनुगतानि नामानि पदानि व्यंजनानि[यान्य[1]]धिपतिं कृत्वा, यानि निश्रित्य प्रतिष्ठायायं पुरुषपुद्गलः [2]यथाश्रुतानि चक्षुर्विज्ञेयानि रूपाणि विकल्पयत्ययमुच्यते । अनुव्यंजनग्राहः [।] यथा चक्षुर्विज्ञेयेषु रूपेषु, एवं श्रोत्रघ्राणजिह्वाकायमनोविज्ञेयेषु धर्मेषु वेदितव्यः । स पुनरयं निमित्तग्राहो[अ]नुव्यंजनग्राहश्च अस्ति यन्निदानमस्य यदधिकरणं यदधिपतेयं अस्य पापका अकुशला धर्माश्चित्तमनु[3]स्रवन्ति । अस्ति यच्च तन्निदानं च तदधिकरणं च तदधिपतेयं पापका अकुशला धर्माश्चित्तमनुस्रवन्ति । तत्र यो[अ]यं निमित्तग्राहो [अ]नुव्यंजनग्राह[ो]अयोनिश[ो]ग्राहः यन्निदानं यदधिकरणं यदधिपतेयमस्य पापका अकुशला धर्माश्चित्तमनुस्रवन्ति । तद्रूपमसौ निमित्तग्राहमनुव्यंजनग्राहं च परिवर्जयति[4] ।

**पापका अकुशला धर्माः कतमे [।] रागः, रागसमुत्थापितं कायदुश्चरितं, वाग्दुश्चरितं, मनोदुश्चरितं । द्वेषो, मोहः [।], मोहसमुत्थापितं च कायदुश्चरितं, वाग्दुश्चरितं, मनोदुश्चरितमिम** उच्यन्ते पापका अकुशला धर्माः ।[2]

---

1. Letters lost by pin-hold.
2. cf. Vbh., pp. 207, 210, 211, 217; see, pp. 440-1;

*(contd. on p. 70)*

**कथमेते चित्तमनुप्रवर्न्ति** । यदालम्बनं चित्त-मनोविज्ञानमुत्पद्यते । गच्छति प्रतिस[5]रति । तदा-लम्बनास्तदालम्बनास्तेन चित्तमनोविज्ञानेन संप्रयुक्ता: [:][1] कायवाङ्मनोदुश्चरितसमुत्थापका[स्][1] ते राग-द्वेषमोहा उत्पद्यन्ते, गच्छन्ति प्रतिसरन्ति । तेनोच्यन्ते (ते) चित्तमनुप्रवन्ति ।

एवं तावन्निमित्तग्राहेणानुव्यंजनग्राहेण च य उत्पद्यते. संक्लेशश्चक्षुर्विज्ञेयेषु रूपेषु यावन्मनोविज्ञेयेषु धर्मेषु सो[अ]स्य [6]नोत्पद्यते निमित्तग्राहमनुव्यंजन-ग्राहं च परिवर्जयतः [।] स चेत् पुनः स्मृतिसंप्रमोषाद्वा, क्लेशप्रचुरतया वा, एकाकिनो[अ]पि विहरतः पूर्व-दृष्टानि चक्षुर्विज्ञेयानि रूपाण्यधिपतिं कृत्वा पूर्व्वा-नुभूतां (तान्) श्रोत्रघ्राणजिह्वाकायमनोविज्ञेयान् धर्मा-नधिपतिं कृत्वोत्पद्यन्ते पापका अकुशला धर्मा[स्] तानुत्पन्नानधिवासयति, [7]प्रजहाति, विशोधयति, व्यन्तीकरोति । तेनोच्यते तेषां सम्वराय प्रतिपद्यते ।

स येषु रूपेषु चक्षुः प्रेरयितव्यं भवति । येषु श्रोत्र-घ्राणजिह्वाकायमनोविज्ञेयेषु धर्मेषु मनः प्रेरयितव्यं

1A—4// भवति । //[1]तेषु तथा प्रेरयति । यथा न

*(contd. from p. 69)*

pp. 431-3 (अकुसलमूलानि लोभो, दोसो मोहो); Dh. S., pp. 96-106; pp. 240 f., 270 f.; A. N., I.244; cf. S. N., III.429-30; 184; 135.

2. Missing in the MS., added by us.

संक्लिश्यते । एवमनेन तस्मात् संक्लेशान्मन [इन्द्रियं[1]] रक्षितं भवति । तेनोच्यते रक्षति मन इन्द्रियं । येषु पुनश्चक्षुर्विज्ञेयेषु रूपेषु चक्षुरिन्द्रियं न प्रेरयितव्यं भवति । येषु श्रोत्रघ्राणजिह्वाकायमनोविज्ञेयेषु ध[र्मेषु[1]] मन इन्द्रियं न प्रेरयितव्यं भवति । तेषु सर्व्वेण सर्व्वं सर्व्वथा न प्रेरयति । तेनोच्यते[2]चक्षुरिन्द्रियेण सम्वरमापद्यते । तेनोच्यते यावन्मन इन्द्रियेण सम्वरमापद्यते । अयं **तावद्विभंगो विस्तरेणेन्द्रियसम्वरस्य** विज्ञेय[2] [:] ।

**समासार्थ**: । येन च संवृणोति, यतश्च संवृणोति, यथा च संवृणोति, या चासौ संवृतिः । तत्सर्व्वमेकत्यमभिसंक्षिप्येन्द्रियसम्वर इत्युच्यते ॥

**तत्र केन संवृणोति** [।]या आरक्षिता च स्मृतिस्तया संवृ[3]णोति [।]

**किं संवृणोति** [।] चक्षुरिन्द्रियं संवृणोति । श्रोत्रघ्राणजिह्वाकायमनइन्द्रियं संवृणोति । इदं संवृणोति ।

**कुतः संवृणोति** । प्रियरूपा[ऽ]प्रियरूपेभ्यो रूपेभ्यः शब्देभ्यो यावद्धर्मेभ्यो[अ]तः संवृणोति (संवृणोति[3]) ।

**कथं संवृणोति** । न निमित्तग्राही भवति नानु-

1. Letters lost by pin-hold.
2. See also, S. N., III.74, 170, 178; M. N., I.330-1; cp. Ś S, p. 112.
3. A repetition, may be deleted.

व्यंजनग्राही यतो[ऽ]धिकरणमेव पापका अकुशला धर्माश्चित्तम[4]नुस्रवन्ति । तेषां सम्वराय प्रतिपद्यते । रक्षतीन्द्रियमिन्द्रियेण । सम्वरमापद्यते । इत्येवं संवृणोति ।

**का पुनः संवृतिः** । यतः स्मृत्या[ऽऽ]रक्षितमानसो भवति । समावस्थावचारकः । इयमुच्यते संवृतिः ।

पुनरपरः समासार्थः [।] यश्चसम्वरोपायः । यच्च सम्वरणीयम्वस्तु, या च संवृतिः । तदेकत्यमभिसंक्षिप्येन्द्रियसम्वर इत्युच्यते ।

[5]**तत्र कतमः सम्वरोवा (संवरोपायः)** [।] यदाह आरक्षितस्मृतिर्भवति, निपकस्मृतिरिति चक्षुषा रूपाणि दृष्ट्वा न निमित्तग्राही भवति, नानुव्यंजनग्राही. यावन्मनसा धर्मान् विज्ञाय न निमित्तग्राही भवति, नानुव्यंजनग्राही । यतो[ऽ]धिकरणमेव पापका अकुशला धर्माश्चित्तमनुस्रवन्ति । तेषां सम्वराय प्रतिपद्यते । रक्षतीन्द्रियमिन्द्रियेण सम्वरमाप[6]द्यते । अयमुच्यते सम्वरोपायः ।

**सम्वरणीयं वस्तु कतमत्** [।] चक्षूरूपं चैवं यावन्मनोधर्माश्चेदमुच्यते सम्वरणीयं वस्तु ।

तत्र **संवृतिः** कतमा [।] यदाह । स्मृत्यारक्षितमानसो भवति । समावस्थावचारक इतीयमुच्यते संवृतिः ।

स खल्वयमिन्द्रियसम्वरः समासतो द्विविधः ।

प्रतिसंख्यानबलसंगृही[तो भावनाबलंसंगृही[1]] तश्च ।

तत्र **प्रतिसंख्यानबल**[7]**संगृहीतो** येन विष्येष्वादीनवं पश्यति । नो तु तमादीनवं व्यपकर्षति । प्रजहाति । तत्र[**भा**[2]]**वनाबलसंगृहीतो** येन विष्येष्वादीनवं पश्यति, तं च पुनरादीनवं व्यपकर्षति । प्रजहाति । तत्र प्रतिसंख्यानबलसंगृहीतेनेन्द्रियसम्वरेण
1B—4// विष//[1]यालम्बनं क्लेशपर्यवस्थानं नोत्पादयति, न संमुखीकरोति । न चैवाश(श्र)यसन्निविष्टमनुशयं प्र[जहा[3]]ति, समुद्घातयति । तत्र भावनाबलसंगृहीते-[ने[4]]न्द्रियसम्वरेण विषयालम्बनं च क्लेशपर्यवस्थानं नोत्पादयति, न सम्मुखीकरोति । सर्व्वदा सर्वकालमाश्रयसन्निविष्टं चानुशयं प्रजहाति । समुद्घातयति । अयम्विशेषः, अयमभिप्रायः । इद[म[5]] [2] नाकरणं प्रतिसंख्यानबलसंगृहीतस्य भावनाबलसंगृहीतस्य चेन्द्रियसम्वरस्य । तत्र यो[अ]यं प्रतिसंख्यानबलसंगृहीत इन्द्रियसम्वरो[अ]यं संभारमार्गसंगृहीतः [।] यः पुनर्भावनाबलसंगृहीत इन्द्रियसम्वरः । स वैराग्यभूमिपतितो वेदितव्यः ।।

**भोजने मात्रज्ञता कतमा** । यथापीहैकत्यः प्रति-

1. Added by a separate hand in a footnote.
2. A separate hand adds this.
3. Letters lost by pin-hold.
4. A separate hand adds this.
5. MS. slightly damaged, portion supplied by us.

संख्यायाहारमाहर[3]ति । न द्रवार्थं, न मण्डनार्थं, न विभूषणार्थमिति विस्तरेण पूर्व्ववत् ।[1]

कथं प्रतिसंख्यायाहारमाहरति । प्रतिसंख्योच्यते यया[2] प्रज्ञया कबडंकारस्याहारस्यादीनवं समनुपश्यत्या-

1. cp. S. N. II.84 (with reference to the forest-dwellers' parable) "तं किं मञ्ञथ, भिक्खवे, अपि नु ते दवाय वा आहारं आहारेय्युं, मदाय वा आहारं आहारेय्युं, मण्डनाय वा आहारं आहारेय्युं, विभूसनाय वा आहारं आहारेय्युं" ति ?

"नो हेतं भन्ते ।" आहार is intimately related to the Buddhist concept of पिण्डपात, see Vm., I.89; for an elaborate analysis of the above, see, ibid, I.89-90: नेव दवाया ति एतं मोहूपनिस्सय पहानत्थं वुत्तं । न मदाया ति एतं दोसूपनिस्सयपहानत्थं, न मण्डनाय, न विभूसनाया ति एतं रागूपनिस्सयपहानत्थं । नेव दवाय, न मदाया ति चेतं अत्तनो संयोजनुप्पत्तिपटिसेधनत्थं । न मण्डनाय, न विभूसनाया ति एतं परस्स पि संयोजनुप्पत्तिपटिसेधनत्थं । चतूहि पि चेतेहि अयोनिसो पटिपत्तिया कामसुखल्लिकायोगस्स च पहानं वुत्तं ति वेदितब्बं । (I.90); cp. also, M. N., I.335; 'किञ्च, भिक्खवे, उत्तरिकरणीयं ? भोजने मत्तञ्ञुनो भविस्साम, पटिसङ्खा योनिसो आहारं आहरिस्साम, नेव दवाय न मदाय न मण्डनाय न विभूसनाय यावदेव इमस्स कायस्स ठितिया यापनाय, विहिंसूपरतिया, ब्रह्मचरियानुग्गहाय, इति पुराणं च वेदनं न उप्पादेस्साम, यात्रा च नो भविस्सति, अनवज्जता च, फासु विहारो चा' ति एवं हि वो, भिक्खवे, सिक्खितब्बं, Vbh., p. 299; Dh. S., pp. 290-1; cf. S. N., II.12: चत्तारोमे, भिक्खवे, आहारा भूतानं वा सत्तानं ठितिया सम्भवेसीनं अनुग्गहाय । कबळीकारो आहारो ओळारिको ओळारिको वा सुखुमो वा, फस्सो दुतियो, मनोसञ्चेतना ततिया, विञ्ञाणं चतुत्थं ।

2. Wayman reads यया and corrects it as प्रज्ञा, ibid, p. 140, f.n. 27; he quotes Tib.: so sor rtog pa źes bya ba ni śes rabste; it might be possible that प्रज्ञा has been omitted in the MS.

दीनवदर्शनेन विदूषयित्वा (विदूष्या) भ्यवहरति[1] ॥

**तत्पुनरादीनवदर्शनं कतमत् । यदुत यस्यैव कबडंकारस्य परिभोगान्वयो वा, विपरि[4]णामान्वयो वा, पर्येषणान्वयो वा ।**

**परिभोगान्वय आदीनवः (कतमः[2])** [।] यथापीहैकत्यो यस्मिन् समये आहारमाहरति वर्णसम्पन्नमपि, गन्धसम्पन्नमपि, रससम्पन्नमपि, सुप्रणीतमपि [।] तस्य कबडंकार आहारः समनन्तरक्षिप्त एव आस्ये यदा दन्तयन्त्रचूर्णितश्च, लालाविसरविक्लिन्नश्च भवति । लालापरिवेष्टितश्च भवति । [5]स तस्मिन् समये कण्ठनालीप्रलुठितश्च भवति । स यासौ पूर्व्विका, पुराणा मनापता (न आपता) तां सर्व्वेण सर्व्वं त्रिजहाति । परां च विकृतिमापद्यते । यस्यां च विकृतौ

---

1. cp. As, V. 136, p. 318 : पटिसङ्खा योनिसो आहारं आहारेतीति पटिसंखानपञ्ञाय जानित्वा उपायेन आहारं परिभुञ्जति ।····उपायं दस्सेतु नेव दवाया ति आदि वुत्तं ।····; cp. सत्त्वस्थितिवृद्धिहेतव आहाराश्चतुर्विधाः । आहाराश्चत्वारः कतमे । कबलीकार आहारः प्रथमः । स्पर्शाहारो द्वितीयः । मनः संचेतनिकाहारस्तृतीयः । विज्ञानाहारश्चतुर्थः ॥

कबलीकाराहारस्य त्रिषु गन्धरसस्पर्शायतनेषु संग्रहः । कस्माद्रूपायतने न संग्रहः यस्माच्चक्षुर्दर्शनाहारेण सत्त्वनिकायस्य महाभूतानां नोपचयस्तस्मात् ॥ कबलीकाराहारो द्विविधः । खरो मृदुश्च । कतमः खरः । सर्वो हि भक्तापूपादिः । कतमो मृदुः । पेयं सुरभिकायानुविलेपनादि ॥ कतमः । स्पर्शाहारः । सास्रवमनः स्पर्शाहारश्च । (त इमे) सन्तानानुच्छेदेन परेऽपि लोके प्रवर्त्तन्ते ॥ Ada, p. 40; see also p. 41.

2. A separate hand adds this in a footnote; Wayman reads तत्र कतमः परिभोगान्वय आदीनवः.

वर्तमानश्छन्दितकोपमः[1] ख्याति। तदवस्थं चैनं स चेदयं भोक्ता पुरुषपुद्गलः स चेदाकारतो मनसि कुर्यात् समनुस्मरेन्नास्य सर्व्वेण सर्व्वमन्यत्रापि तावद-विपरिणते, प्रणीते [6]भोजने भोगकामता सन्तिष्ठेत। कः पुनर्व्वादस्तत्र तदवस्थ इति य एभिराकौररनेकवि-धैरनया[ऽऽ]नुपूर्व्या भोजनपरिभोगमधिपतिं कृत्वा या[ऽ]सौ शुभा वर्ण्णनिभा अन्तरीयते, आदीनवश्च प्रादुर्भवति अशू(शु)चिसंगृहीतः [।] अयमुच्यते **परिभोगान्वयः। आदीनवः।** यदुत आहारे।

तत्र कतमो **विपरिणामान्वय[2] आदीनव** [7] आहारे। तस्य तमाहारमाहृतवतस्तु[ष्टव[3]] तः यदा विपरिणमति रात्र्या मध्यमे वा यामे, पश्चिमे वा यामे, तदा स रुधिरमान्स(मांस)स्नाय्वस्थित्वगादी-न्यनेकविधानि बहुनानाप्रकाराणि। अस्मिन् काये अशुचिन्द्रव्याणि विवर्धयति संजनयति।

5A—7// //[5][4] अर्थतश्च। अतिपरिणतश्चाधोभागी

1. Wayman reads छर्दितकोपमः.
2. Omitted in the MS., added by us.
3. A black blot makes two letters completely illegible; supplied by us; Wayman suggests—आहृतवत आ(शितव)तः on the basis of Tibetan—mid par gyur nas.
4. This text is the resumption of the food-section and occurs in the middle of the Cintāmayī Bhūmi. On the basis of the Tibetan translation, Wayman suggests

(contd. on p. 77)

भवति । यदस्य[1] दिवसे शोचयितव्यं च भवति । तेन च यः स्पृष्टो भवति । हस्तो(स्तौ) वा पादो(दौ) वा, अन्यतमा[6]न्यतमज्वा (मंवा) अंगप्रत्यंगं, बहिर्धा गुप्यनीयं (गोपनीयं) भवत्यात्मनः परेषां च (।) तन्निदानाश्चास्योत्पद्यन्ते । काये बहवः कायिका आबाधाः । तद्यथा गण्डः, पिटकः, दद्रू, विचर्चिका, कण्डू[:], कुष्ठः, किटिभः, किवासो (किलासो), ज्वरः कासः शोथः[2], शोषापस्मार (शोषोऽपस्मार), आटक्करं, पाण्डुरोगः, रुधिरं, पित्तभगन्दर इतीमे चान्ये भैरंभगंया ([अ]प्येवंभागीयाः) काये का[7]यिका आबाधा उत्पद्यन्ते । भुक्तम्वा[अ]स्य विपद्यते । येनास्य काये विषूचिका सन्तिष्ठते । अयमुच्यते

(contd. from p. 76)

विपरिणमति for अति (Tib. yoṅs su ḥju bar ḥgyur ba). He further adds that the Tibetan translation suggests the following text preceding to the word विपरिणमति—उत्कर्षयति / तेषामेकत्यानि च विण्मूत्रवस्तुना. But I think, the context does not suggest this emendation. Tibetan translation is : brta bar ḥgyur ba daṅ / de dag las la la ni bśan ba daṅ / gci baḥi dṅos por yoṅs su ḥjug par ḥgyur śiṅ, see, ibid, p. 141, f.n. 29.

1. Wayman emends this as यदस्यैकस्मिन्.
2. Wayman reads शोषः, but the MS. seems to be correct and no such emendation is required, as शोथ has been enumerated in the Āyurvedic texts as a kind of disease, i.e., swelling; *vide*, Caraka, I. 18, p. 90 sq.

**विपरिणामाच्च य आदीनवो यदुत आहारे ।**

**तत्र कतमः पर्येषणान्न(न्व)यआदीनव आहारे ।**

पर्येषणान्वय आदीनवो[अ]नेकविध[:]—**समुदानना-कृतः । आरक्षाकृतः । स्नेहपरिभ्रंशकृतः । अतृप्ति-**
5B—7// **कृतः । अस्वातन्त्र्यकृत://[1]दुश्चरितकृतश्च ।**

**तत्र कतम आदीनव आहारे [।] समुदानना-कृतः** [।] यथापीहैकत्यः आहारहेतोराहारनिदानं शीते शीतेन हन्यमानः, उष्णे उष्णेन हन्यमानः, उत्सहते, घटते, व्यायच्छते । कृषिणा वा, गोरक्ष्येण वा, वाणिज्येन वा, लिपिगणनाऽयसनसंख्या-मुद्रया[अ]नेकविधेन शिल्पस्थानकर्मस्थानेनाप्रति-लब्धस्य वा[ऽऽ]हारस्य प्रति[2]लम्भाय, उपचयाय वा [।] यथा आहारस्ये(स्यै)वमाहार-निदानस्य [।] तस्यैवमुत्सहतो, घटत(तो), व्यायच्छत(:), स चेत्ते कर्मान्ता विपद्यन्ते । स तं निदानं (तन्निदानं) शोचति क्लाम्यति, परिदेवते । उरस्ताडयति । क्रन्दति —संगो वा[मा]मापद्यते । मोहो बत मे स्वायामो[अ]तिफल इति । अयमु(यं समु) दानना सहगतः आदीनवो यदुत आहारे [।]

स चेत्संपद्यते[3]स तस्यारक्षाधिकरणहेतोस्तीव्र-मौत्सुक्यमापद्ययते । कच्चिन्मे भोगा राज्ञा वा अपह्रियेरंश्चौरैर्व्वा, अग्निना वा दह्येरन्नुदकेन वा उह्येयुः । कुनिह(हि)ता वा निधयः प्रणश्येयुः,

कुप्रयुक्ता वा कर्मान्ता: प्रलुज्येरन्, अप्रियो(या)वा दायादा अधिगच्छेयु: । कुलेवा कुलांगार उत्पद्येत । यस्तान्भोगाननयेन व्यसनमापादये[द]**यमारक्षासह-[4]गत आदीनवो यद्युत आहारे ।**

**कतम आदीनव[:] स्नेहपरिभ्रंशकृत:** । यथापि तदाहारनिदानमाहाराधिकरणहेतोर्माता पुत्रस्या-वर्णम्भाषते । पुत्रो मात्य: (मातु:), पिता पुत्रस्य, पुत्रो(त्र:) पितु:, भ्राता भगिन्या, भगिनी भ्रातु: । सहायक: । सहायकस्य । प्रागेव जनो जनस्य [।] ते (।) चान्यो[ऽ]न्यं विगृहीता भवन्ति, विवादमापन्नास्तथा-उदारा ब्राह्मण[5]क्षत्रियगृहपतिमहासाला आहारा-धिकरणहेतोरेवं विगृहीत[ा]विवादमापन्ना: अन्यो-[ऽ]न्यं पाणिना प्रहरन्ति । लोष्ठेनापि, दण्डेनापि, शस्त्रेणापि प्रहरन्त्ययमुच्यते स्नेहपरिभंशकृत आदीनव: ।

**तत्र कतम: । अतृप्तिकृत आदीनव: ।** यथापि तद्राजान: कृतिया(क्षत्रिया) मूर्द्धाभिषिक्ता:, स्वेषु ग्रामनिगमराष्ट्रराजधानीषु असंतु[6]ष्टा विहरन्त उभयतो[अ]भ्यूहकानि संग्रामानीकानि प्रतिसरन्ति । शंखै(:) कम्प(म्प्य)मानै:, पटाहैर्वाद्यमानै:, इषुभि: क्षिप्यमाणैर्विविधैस्ते तत्र भ्रान्तेनाश्वेन सार्धं समा-गच्छन्ति ।। भ्रान्तेन हस्तिना, रथेन, पत्तिना सार्धं समागच्छन्ति । इषुभि:, शक्तिभिर्व्वा अपकृत्तगात्रा

मरणम्वा नि(वि)गच्छन्ति । मरणमात्रं वा दुःखमयमुच्यते । अ[7]तृप्तिकृत आदीनव इति यो वा पुनरप्येवंभागीयः ।।

तत्र कतमः । **अस्वातन्त्र्यकृत आदीनवः** । यथापि तद्राज्ञः पौरुषेया आवरोधिकानि नगराण्यनुप्रस्कन्दतः(न्ते) । तप्तेनापि ति(तै)लेनावसिच्यन्ते । तप्तया वसया, तप्तया गोमयलो(लौ)हिकया, तप्तेन ताम्रेण, तप्तेनायसा, इषुभिः सन्तिभि(शक्तिभि)-श्चापकृत्तगात्रा मरणं वा [8]नि(वि)गच्छन्ति । मरणमात्रकं वा दुःखं । अयमुच्यते अस्वातन्त्र्यकृत आदीनव इति यो वा पुनरप्येवंभागीयः ।

तत्र [कतमो[1]] **दुश्चरितकृत आदीनवः** [।] यथापि
5A—8// तदेकत्येनाहारनिदानं प्रभूतं कायेन //[1]दुश्चरितं कृतं भवत्युपचितं, यथा कायेनैवम्वाचा, मनसा[।] स च य(था का)य आबाधिको भवति, दुःखितो, बाढग्लानः, तस्य तत्पूर्व्वकं कायदुश्चरितं वाङ्मनो-दुश्चरित(तं), पर्व्वतानां वा पर्व्वतकूटानाम्वा, सायाह्ने[या]च्छया(च्छाया[2]) अवलम्बते । अव्या-(ध्य)वलम्बते । अभिप्रलम्बते । [तस्यै[3]] वं भवति । कृतं बत मे पापं, न कृतं बत मे पुण्यं, कायेन वाचा,

1. A seperate hand adds this.
2. Tib. छायेव.
3. Letters damaged by pin-hold.

मनसा, [2]सो[अ]हं या गति[:] कृतपापानां[तां[1]]गतिं प्रेत्य गमिष्यामीति। विप्रतिसारी कालं करोति। अकालञ्च कृत्वाऽपायेषूपपद्यते। यदुत नरकेषु, तिर्यक्प्रेतेषु [।] अयमुच्यते दुश्चरित कृत आदीनवः।

तस्यैवम्भवति। इत्ययमाहार[:] पर्येष(ष्य)-माणो[अ]पि सादीनवः। परिभुज्यमानो[अ]पि सादीनवः। परिभुक्तो[अ]पि परिणाम आदीनवः। ए[3]वमस्ति पुनरस्याहारस्य काचिदनुशन्स(शंस) मात्रा सा पुनः कतमा। आहारस्थितिको[अ]य(यं)-[काय[1]] आहारं निश्रित्य तिष्ठति।[2] ना[ऽ]नाहार इयमस्यानुशन्स(शंस)मात्रा [।]

एवमाहारस्थितिको[अ]यं कायं(:) सुचिरमपि तिष्ठन् वर्षशतम्वा तिष्ठति। किंचिद्वा पुनर्भूयः सम्यक् परिह्रियमाणः। अस्ति चास्यावर्गुपरतिः। तत्र यः(ये)कायस्थितिमात्रे प्रतिपन्नाः [4]न ते सुप्रतिपन्ना[:] काये कायस्थितिमात्रकेन(ण) संतुष्टा न(न)ते असंतुष्टा, न च पुनस्ते आहारकृतं परिपूर्ण-मनवद्यमनुशन्सं(शंसं) प्रत्यनुभवन्ति। ये पुनर्न-कायस्थितिमात्रकेण(न[3]) संतुष्टा[:] कायस्थितिमात्रके प्रतिपन्ना, न ते सुप्रतिपन्ना, अपि तु तामेव कायस्थितिं

1. Letters damaged by pin-hold.
2. cf. S. N., II.12, 13; D. N. III.169 : कतमो एको धम्मो? सब्बे सत्ता आहारट्ठितिका; cf. also, p. 211; A. N., IV.139.
3. This may be deleted.

निश्चि[त्य¹](निश्रित्य) ब्रह्मचर्यं(र्यं) समुदागमाय प्रतिपन्नाः, सुप्रतिपन्नाः, [5] त एव च पुनः परिपूर्ण-मनवद्यमनुशन्सं(शंसं) प्रत्यनुभवन्ति। तन्मे प्रतिमं स्याद् यद(द्)वा प्रत्यवरेण आहारानुशन्स(शंस) मात्रकेण संतुष्टो विहरेयं। न मे प्रतिरूपं स्याद्यदहं बालसभागतां बालसहधार्मिकतामध्यापद्येयमेवमाहारे सर्वाकारं परिपूर्णमादीनवं ज्ञात्वा स
5B—8// इतः प्रतिसंख्याया[ऽऽ]दीनव //[1] दर्शी, निःसर-णान्वेषी चाहारनिःसरणार्थमेव पुत्रमां(मान्) सो धर्ममाहारमाहरति।

तस्यैवं भवति। एवमेते दायकदानपतयः कृच्छ्रेण भोगान् समुदानीय, महान्तं पर्येषणाकृतमादीनवं प्रत्यनु-भवन्तः, प्रपीड्य, प्रपीड्य, त्वङ्मान्स(मांस)-शोणितमस्माकमनुप्रयच्छन्ति। य[एते²][अ]नुकम्पा-मुपादाय विशेषफलार्थिनः तस्यास्माकं [2] तथा प्रति-लब्धस्य पिण्डपातस्यायमेवं रूपो[अ]नुरूपः परिभोगः स्याद्यदहं तथा परिभूतमात्मानं (।) स्थापयित्वा परिभुंजीय, यथा तेषां काराः कृता अत्यर्थं महाफला[:] स्युर्महानुशंसा, महाद्युभ(त)यो, महाविस्ताराः, चन्द्रोपमश्च कुलान्युपसंक्रमेयं व्यवकृष्य कायं, व्यवकृष्य चित्तं, ह्रीमानप्रगल्भः, अनात्मोत्कर्षी, [3]अपर-

1. Letters damaged by pin-hold.
2. Syllables damaged by pin-hold.

पन्सी[1]; यथास्वेन लाभेन चित्त(सुचित्तः) स्यां, सुमनाः, एवं परस्यापि लाभेन चित्त(सुचित्तः)स्यां सुमना, एवं चित्तश्च पुनः कुलान्युसंक्रमेयं। तत्कुत एतल्लभ्यं प्रव्रजितेन परकुलेषु यद्वदत्र परे मे मान(नं) ददतु। सत्कृत्य, मा असत्कृत्य, प्रभूतं मा स्तोकं, प्रणीतं मा लूहं, त्वरित[ ˙ ]मा गत्वं (बद्धम्)। एवं चरितस्य मे कुलान्युसंक्रम[4]तः स चेत् परे न दद्युस्तेनाहं न तेषामन्तिके आघातचित्ततया प्रतिघचित्ततया व्यवदीयेयं। न च पुनस्तन्निदानं। कायस्य भेदादपायोपपत्त्या विघातमापद्येय(यं)। यदुत तामेवाघातचित्तता(तां) [प्रतिघचित्ता[2]]मधिपतिं कृत्वा स चेदसत्कृत्य न सत्कृत्य, स चेत्स्तोकं न प्रभूतं। स चेल्लूहं न प्रणीतं, स चेद्बद्धं न त्वरितं दद्युः। [5] द(त[3])-याहमाघातचित्ततया, प्रतिघचित्ततया च व्यवदीयेयमिति विस्तरेण पूर्व्ववत्। इमं चाहं कबडीकारमाहारं निश्रित्य तथा तथा प्रतिपद्येय(यं), ताञ्च मात्रां प्रतिवेध्येयं। येन मे जीवितेन्द्रियनिरोधश्च न स्यान्न-च पिण्डकेन क्लाम्येयं। ब्रह्मचर्यानुग्रहश्च मे स्यादेवं च मे श्रव(म)णभावे, प्रव्रजितभावे स्थितस्यायं पिण्ड

1. Wayman emends it as अपरकुत्सी and quotes Tib. Tr., gźan la mi smod pa', 'not reproaching others', ibid, p. 144, f.n. 43.
2. Added by a separate hand in a footnote.
3. Wayman reads तया.

5A—9// //[1] पातपरिभोगरूपश्च । परिशुद्धश्चानवद्यश्च स्यादेभि[राका[1]]रैः स प्रतिसंख्यायाहारमाहरति ।

**आहारः**[2] **पुनः कतमः** [।] **चत्वार आहाराः**[3] [।] **कबडंकारः**[4], **स्पर्शो, मनःसंचेतना, विज्ञानं** चास्मिंस्त्वर्थे कबडंकार आहारोऽभिप्रेतः । स पुनः कतमस्तद्यथा मन्था वा[सूपा[5]] वा ओदनकुल्माषम्वा, सर्पिस्तैलं, फणितं, मांसं, मत्स्या, [2] वल्लूरा, लवणं, क्षीरं, दधि, नवनीतमितीमानि चान्यानि चैवं रूपाण्युपकरणानि यानि कबडानि

1. Syllables damaged by pin-hold.
2. Āhāra has been regarded as the basic conception underlying the Buddhist concept of Paṭiccasamuppāda; (see, S. N. II. 289, 291—आहारसमुदया रूपसमुदयो; cf. pp. 84-5; M. N. I. 321 sq); the Four Aryan Truths (M. N. I. 64) and other important doctrines such as eschatology and the theory of instantaneous being (becoming), *vide*, E. B., II, s. v. Āhāra, p. 280 sq.
3. cp. S. N., II.83-84 : "चत्तारोमे, भिक्खवे, आहारा भूतानं वा सत्तानं वा ठितिया सम्भवेसीनं वा अनुग्गहाय । कतमे चत्तारो ? कबळीकारो आहारो ओळारिको वा सुखुमो वा, फस्सो दुतिया, मनोसञ्चेतना ततिया, विञ्ञाणं चतुत्थं । इमे खो, भिक्खवे, चतारो आहारा भूतानं वा सत्तानं ठितिया सम्भवेसीनं वा अनुग्गहाय । cp. K. N., V.135 : चत्तारो लोका चत्तारो आहारा (Paṭi.); cp. Vm., XI.1 'तत्थ आहरतीति आहारो । सो चतुब्बिधो, कबळीकाराहारो, फस्साहारो, मनोसञ्चेतनाहारो, विञ्ञाणाहारो ति । cp. Abhas., VII.21 (KAP, p. 197); see M. N. I.
4. Wayman reads कवडंकारः, ibid, p. 145.
5. Letters lost by pin-hold.

कृत्वा[अ]भ्यवह्रियन्ते । तस्मात् **कबडंकार** इत्युच्यते ।[1]

**आहरतीति भुंक्ते ।** प्रतिनिषेवत्यभ्यवहरति, खादति, भक्षयति । स्वादयति, पिबति, चूषतीति पर्यायाः [।]

**न द्रवार्थमिति ।** यश्चैते(ये चैते) कामोपभोगिन इत्यर्थः । याहरन्ति[2](य आहरन्ति) [3]यद्वयमाहारेण प्रीणितगात्राः संतर्पितगात्राः प्रत्युपस्थिते सायाह्नकाले समये, अतिक्रान्तायां रजन्यां, मौलीबद्धिकाभिः सार्द्धमलाबु-रोमशबाहुभिः कन्दुकस्तनिभिर्नारीभिः (कन्दुकस्तनीभिर्नारीभिः)

---

1. Asaṅga variously spells this word. In the body of the present text we meet with expressions such as कबडंकारः and कबडीकारः, in the YBS,I, the expression कवडीकार has been used (p. 100). Buddhaghosa adds : कबळीकाराहारो ओजट्ठमकं रूपं आहरति । (XI.2, ibid); असित-पीत-खयित सायितप्पभेदो कबळीकारो आहारो···(ibid, XI.4). About this kind of āhāra, Asaṅga remarks in the YBS, I., p. 100: कवडीकारेण पुनः कामावचराणामेव सत्त्वानां स्थितिर्भवति । यावता तत्र नरकोपपन्नानां सत्त्वानां सूक्ष्मः कवडीकाराहारगर्भो वायुर्वाति । येन तेषां स्थितिर्भवति । यावता तिरश्चां प्रेतानां मनुष्याणां चौदारिक आहारो यं ते कबडीकृत्य भक्षयन्ति । य एव पुनः सूक्ष्मकललादिगतानां सत्त्वां देवानां च कामावचराणां । तथा हि । तेषां भुक्तमात्र एव कबडीकार आहारः काये सर्वाङ्गेष्वनुविसरञ्जरामापद्यते । न च तेषामुच्चारप्रस्रावः सन्तिष्ठते ।।; Buddhaghosa further defines Kabalıkāra āhāra as : ओजालक्खणो कबळीकारो आहारो, रूपाहरणरसो, उपत्थम्भपच्चुपट्ठानो, कबळं कत्वा आहरितब्बवत्युपदट्ठानो याय ओजाय सत्ता यापेन्ति, तस्सा एतं अधिवचनं (Vm., XIV.70).
2. Wayman reads य आहरन्ति, ibid, loc. cit.

क्रीडतो(न्तो), रममाणाः, परिचारयन्(न्त), औद्धत्यं द्रवं प्राविष्करिष्याम इति[।]द्रव एष आर्ये धर्मविनये यदुतकामरागोपसं[4]हिता, मैथुनोपसंहिता[:] पापका अकुशला धर्मा, वितर्का, यैरयं खाद्यमानो, बाध्यमान, उद्धतेन्द्रियो भवत्यनुद्धतेन्द्रियश्च, द्रुतमानसः, प्लुत-मानसः, अस्थितमानसो [अ]व्युपशान्तमानसः, ते पुनरत्यन्तमाहारमाहरन्तो द्रवार्थमाहरन्तीत्युच्यते ।[1]

श्रुतवांस्त्वार्यश्रावक[:] प्रतिसंख्यानबलिक आदी-नवदर्शी निः[5]सरणं प्रजानं(नन्)परिभुंक्ते । न तथा यथा ते कामोपभोगिनो भुंजन्ते । तेनाह—**न द्रवार्थं न मदार्थं, न मण्डनार्थं न विभूषणार्थमिति** । यथापि त एव कामोपभोगिन इत्यर्थं माहारमाहरन्ति । अद्य वयमाहारमाहृतवन्तो यदुत प्रभूतञ्च तृप्तितो यथा-शक्त्याबलं । स्निग्धं च, वृष्यञ्च, बृंहणीयञ्च, वर्ण्णसंपन्नं[6],गन्धसम्पन्नं, रससम्पन्नं । एन्धाभूते-(ऐन्धीभूते), निर्गतायां रजन्यां शक्ता भविष्यामः । प्रतिवला, व्यायामकरणो(णा), यदुत अतत्कीया (आततीक्रियया[2]) वा, निर्घातेन[3], व्यायामशिलया

1. Buddhaghosa while commenting on 'न दवाया न मदाया' etc., remarks : नेव दवाया ति न गामदारकादयो विय दवत्थं । कीळानि-मित्तं' ति वुत्तं होति । (Vm. I 89).
2. Tib. gźu dgaṅ ba—stretching the bow, see ASM, p. 145, f.n. 48.
3. Wayman, ibid, p. 145, suggests निर्घट्टेन.

वा, उल्लोठनेने(न)वा, पृथिवीखातेन वा, बाहु-व्यायामेन वा, पादावष्टम्भनेन वा, प्लवनेन वा, (अ[1])लंघनेन वा [।] तत्र व्यायामेन बाह(हु)ञ्च पुनर्व्यायामं निश्रित्य बलवन्तो[7]भविष्यामः । (अ)व्यायतगात्रा, दीर्घं[2] चारोगाः, चिरकालं चास्माकं यौवनमनुवर्तकं भविष्यति, नो तु त्वरितं (।) विरूपकरणी[3] जरा देहमभिभविष्यन्ती-(ती)ति । चिरतरं च जीविष्याम इति । प्रभूत-भक्षणे च प्रतिबला भविष्यामः । भुक्तं च (भुक्तं[4]) सम्यक्परिणमिष्यति । दोषाणां चापच(क्ष)यः कृतो भविष्यति । इत्यारोग्यमदार्थं, [8][यौवन[5]]मदार्थं, जीवितमदार्थं परिभुंजते ।

तेषां पुनरेवं भवति । कृतव्यायामा वयं स्नात्र-संविधानं करिष्यामो, यदुत-शुचिना तोयेन गात्राणि प्रक्षालिष्यामः । प्रक्षालितगात्राश्च केशानि च (केशांश्च) प्रसाधयिष्यामः । विविधेन चानु-
5B—9// लेपनेन //[1]कायमनुपलिप्य(-मनुलिप्य) विविधैर्वस्त्रै-
र्विविधैर्माल्यैर्विविधैरलं[कारैः[6]] कायं भूषयिष्यामः ।

---

1. May be dropped.
2. Wayman reads दीक्षम्.
3. Wayman amends this as विरूपकरणानि but I think no emendation is needed here.
4. Repetition, may be dropped.
5. Letters too dim and illegible.
6. Letters lost by pin-hold.

तत्र यत् स्नानप्रसाधनानुलेपनमिदमुच्यते । तेषां **मण्डनं** ।

तथा मण्डनजातानां यद्वस्त्रमाल्याभरणधारण-मिदमुच्यते । **विभूषणमिति** । मण्डनार्थं विभूषणार्थं परिभुंज[तो[ऽ]त[1]] एवं (परिभुंजन्तोऽस्त एवं)मद-मत्ता मण्डनजातिविभूषितगात्राः । [2] मध्याह्नसमये, सायाह्न समये वा, भक्तसमये तृषिता बुभुक्षिताश्च, परेण हर्षेण[2], परया नन्द्या, परेणामोदेन । आदी-नवदर्शिनो निःसरणमप्रजानन्त(न्तो)यथोपपन्नमाहार-माहरन्ति । यावदेव पुनः पुनर्द्रवार्थं, मण्डनार्थं, विभूषणार्थं च[।]

श्रुतवांस्त्वार्यश्रावकः । प्रतिसंख्यानबलिक आदी-नवदर्शी निःसरणं[3]प्रजानन् परिभुंक्ते । न तु तथा यथा ते कामोपभोगिनः परिभुंजते । नान्यत्रेममसं-निवेषणाप्रहातव्यमाहारं प्रतिनिषेवमाण एव प्रहास्यामीति । यावदेवास्य कायस्य स्थितये इति भुक्त्वा ना[ऽ]भुक्त्वा यश्च जीवितस्य कायस्थिति-रित्युच्यते । सो[अ]हमिममाहारमाहृत्य जीविष्यामि, न मरिष्यामीति आहार[4]ति । तेनाहं(ह)यावदेवास्य कायस्य स्थितये ।[3]

1. Letters lost by pin-hold, Wayman suggests : परिभुञ्जन्तस्त एवं.
2. Wayman reads नर्पण.
3. See, Ś S, p. 73.10.

**कथं यापनार्थं आहरति ।** द्विविधा यात्रा-अस्ति कृच्छ्रेण, अस्त्यकृच्छ्रेण[।] **कृच्छ्रेण यात्रा** कतमा[।] यद्रूपमाहारतो जिघत्सा दौर्बल्यं वा भवति । दुःखितो वा बाढग्लानः । अधर्मेण वा पिण्डपातं पर्येषते, न धर्मेण । रक्तः परिभुंक्ते, सक्तः, गृद्धो, ग्रथितो, मूर्छितो[ऽ]ध्यवसितो[5][अ]ध्यवसायमापन्नः । गुरुको वास्य कायो भवत्यकर्मण्यः, अप्रहाणक्षमः, येनास्य धन्धं चित्तं समाध्रियते(धीयेत) । कृच्छ्रेण वा आश्वास-प्रश्वासाः प्रवर्तन्ते । स्त्यानमिद्धं वा चित्तं पर्यवहीय (पर्यवनह्यतीय) मुच्यते कृच्छ्रेण यात्रा ।[1]

**अकृच्छ्रेण यात्रा कतमा**[।]यथापि तद्रूपमाहार-माहरतो यथा जिघत्सा दौर्ब्बल्यं वा न भवति । [2]नाभ्यधिको[6]भवति[2] । दुःखितो वा बाढग्लानः । धर्मेण वा पिण्डपातं पर्येषते, न वा[अ]धर्मेण । सुरक्तो वा परिभुंक्तेसक्तः[3](परिभुङ्क्तेऽसक्तः), अगृध्रः, अग्रथितः[4], अनध्यवसितो [अ]नध्यवसायमापन्नः, न चास्य कायो गुरुको भवति । कर्मण्यो भवति । प्रहाणक्षमः । येनास्य त्वरितं चित्तं समाधीयते । अल्पकृच्छ्रेणाश्वासप्रश्वासाः प्रवर्त्तन्ते । स्त्या[7]न-

---

1. See, ibid, p. 73, cp. also, p. 75.
2. Wayman suggests its deletion, p. 146, f.n. 51.
3. The correct reading seems to be : परिभुङ्क्तेऽसक्तोऽगृध्रोऽनध्य-वसितोऽनध्यवसायमापन्नः ।
4. Wayman reads ग्रथितो.

मिद्धं चित्तं न पर्यवन(द्ध)तीयमुच्यते अल्पकृच्छ्रेण यात्रा ।[1]

तत्र या **कृच्छ्रेण यात्रा** तया जीवितस्थितिर्भवति । कायस्य सावद्या ससंक्लिष्टा[।] तत्र येयमल्पकृच्छ्रेण यात्रा तया जीवितस्थितिर्भवति (।) कायस्य [।] सा च पुनरनवद्या । असंक्लिष्टा [।] तत्र श्रुतवानार्यश्रावकः । सावद्यां संक्लिष्टां यात्राम्परिवर्जयति । अनवद्याम[8]संक्लिष्टां यात्रां गच्छति । प्रतिषेवते । तेनाह **यापनार्थं** ।

सा पुनरनवद्या असंक्लिष्टा यात्रा या पूर्व्वमुक्ता ।
तां कथं यापयति । आह । यद्यं जिघत्सोपरतये,
ब्रह्मचर्यानुग्रहाय इति, पौराणां च वेदनां प्रहास्यामि
6A—1// नवाञ्च नोत्पादयिष्यामि । //[1] यात्रा च मे
भविष्यति । बलं च, सुखं चानवद्यता च,

---

1. cf. Ś S, p. 71 : परिभुञ्जानो न रक्तः परिभुङ्क्तेऽसक्तोऽगृद्धोऽनध्यवसितः । अन्यत्र यावदेव कायस्य स्थितये, यापनार्थं । तथा परिभुङ्क्ते यथा नातिसंलिखितो भवति, नातिगुरुकायः । तत् कस्य हेतोः ? अतिसंलिखितो हि कुशलपक्षपराङ्मुखो भवति । अतिगुरुकायो मिद्धावष्टब्धो भवति । तेन तं पिण्डपातं परिभुज्य कुशलपक्षाभिमुखेन भवितव्यम् ।; cp., ibid, p. 73 : प्रायेण हि सत्त्वा रसगृद्धा भोजनहेतोः पापानि कर्माणि कृत्वा नरकेषूपपद्यंते । ये ये पुनः सन्तुष्टा अगृद्धा अलोलुपा रसप्रतिप्रस्रब्धा जिह्वेन्द्रियसन्तुष्टाः कियल्लूहेनापि भोजनेन यापयन्ति, तेषां च्युतानां कालगतानां स्वर्गोपपत्तिर्भवति सुगतिगमनं भवति देवमनुष्येषु । ते देवोपपन्नाः सुधां परिभुञ्जते । एवं काश्यप पिण्डचारिकेण भिक्षुणा रसतृष्णां विनिवर्तयित्वा निध्याप्तचित्तेन सुपरिपक्वान् कुल्माषान् परिभुञ्जता न परितप्तव्यम् । तत् कस्माद्धेतोः ? कायसन्धारणार्थं मार्गसन्धारणार्थं मया भोजनं परिभोक्तव्यम् ।····

स्पर्शवि[हार[1]]ता चेति[2]। एवं प्रतिषेवमाणः अनवद्यामसंक्लिष्टां यात्रां कल्पयति ।

**कथं च पुनर्जिघत्सोपरतये आहरति**[।] प्रत्युपस्थिते भक्तसमये, उत्पन्नायां क्षुधायां, यदा परिभुंक्ते तस्यैव क्षुत्पर्यवस्थानस्य जिघत्सादौर्बल्यस्य च प्रतिविगमाय ताञ्च मात्रां प[2]रिभुंक्ते। यथास्य भुक्तवतः अकाले पुनर्जिघत्सादौर्बल्यन्न बाधते । सायाह्नसमये वा, अभि-(ति?)क्रान्तायाम्वा रजन्यां, श्वोभूते, प्रत्युपस्थिते भक्तसमये[।] एवं जिघत्सोपरतये आहरति ।

**कथं ब्रह्मचर्यानुग्रहायारति ।** तां मात्रां परिभुंक्ते तद्रूपमाहारमाहरति । येनास्य कुशलपक्षे[3]प्रयुक्तस्य दृष्ट एव धर्मे भुक्तसमनन्तरं तस्मिन्नेव वा दिवसे अगुरुकः कायो भवति । कर्मण्यश्च भवति, प्रहाणक्षमश्च, येनास्य त्वरितत्वरितं चित्तं समाधीयते । अल्पकृच्छ्रेणाश्वासप्रश्वासाः प्रवर्तन्ते । स्त्यानमिद्धं चित्तं न पर्यवनह(ह्य)ति । येनायं भव्यो भवति । प्रतिबलश्च । क्षिप्रमेवाप्राप्तस्य प्रा[4]प्तये, अनधिगतस्याधिगमाय, असाक्षात्कृतस्य साक्षात्क्रियायै । एवं ब्रह्मचर्यानुग्रहायाहरति ।।

**कथं पौराणां वेदनां प्रहास्यामीत्याहरति ।**

1. Letters damaged by pin-hold.
2. Buddhaghosa gives a brief description of these aspects of आहार—concept of the theravādins in AS, V. 136-9, pp. 318-9.

तथापि तदतीतमध्वानमुपादाय। अमात्रया वा परिभुक्तम्भवत्यपश्यम्वा (पथ्यं वा), अपरिणते(तं) वा, येनास्य विविध: कायिक आबाध: समुत्पन्नो भवति। तद्य[5]था कण्डू[:], कुष्ट[:], किटिभ[:] किलास इति विस्तरेण पूर्व्ववत्। तस्य चाबाधनिदाना उत्पद्यन्ते शारीरिका वेदना दु:खास्तीव्रा:, खरा:, कटुका, अमनापा (अमन आपा)[:।] तस्याबाधस्योपशमाय तासां च तन्निदानानां दु:खानां वेदनानामुपशमाय हितं पश्यमनु (पथ्यमनु) कूलमानुलोमिकं वैद्योपदिष्टेन विधिना भैषज्यं प्रतिषेवते [।] [6]सांप्रेयं चाहारमाहरति। येनास्योत्पन्नस्याबाधस्य तन्निदानानां च दु:खानां वेदनानां प्रहाणं भवत्येवं पौराणाम्वेदनां प्रहास्यामीत्याहारमाहरति। स वर्त्तमानमध्वानमुपादाय सुखी, अरोगो, बलवान्नामात्रया वा परिभुंक्ते। अपथ्य

6B—1// //[1]ता अपरिणते, काये नास्यागतमध्वानमुपादाय-(चास्यानागतमध्वानमुपादाय)श्वो वा, उत्तरश्वो वा, विषूचिका वा काये संतिष्ठेत। अन्यतमान्यतमो वा काये कायिक आबाधस्समुत्पद्येत। तद्यथा कण्डू[:], कुष्ट[:], किटिभ[:], किलास इति विस्तरेण पूर्व्ववत्। यन्निदाना[1] उत्पद्येरन्छा(ञ्छा)रीरिका वेदना[:] पूर्व्ववत्। एवं च नवां वेदनां नोत्पा[2]-दयिष्यामीत्याहरति।

1. A separate hand adds this.

**कथं यात्रा मे भविष्यति । वर्णं च सुखं चानव-द्यतां(ता) च । स्पर्शविहारता चेत्याहरति ।** यत्तावद् भुक्तो जीवतीत्येवं यात्रा भवति । यत्पुनर्जिघत्मा-दौर्बल्यमु(म)पनयति । एवमस्य वर्ण्णं भवति । यत्पुनः पौराणां वेदनां प्रजहाति । नवां चो(च नो)-त्पादयत्येवमस्य सुखं भवति । यत् पुन[3]र्धर्मेण पिण्डपातं पर्येष्ट्यारक्तः (पर्येष्या[ऽ]रक्तः), अमक्तः इति विस्तरेण पूर्व्ववदेव**मनवद्यता** भवति । यत्पुन-र्भुक्तवतो न गुरुकः कायो भवति, कर्मण्यश्च भवति, प्रहाणक्षमो विस्तरेण पूर्व्ववदेवमस्य **स्पर्शविहारता** भवति । तेनाह प्रतिसंख्यायाहारमाहरति । न द्रवार्थं, न मदार्थं, न मण्डनार्थमिति । विस्तरेण पूर्व्व[4]-वदयं तावद् **भोजने मात्रज्ञताया विस्तरविभागः ।**

**समासार्थः पुनः कतम**[:] आह [।] यश्च(यञ्च) परिभुङ्क्ते । यथा च परिभुंक्ते । यदुत कबडं-कारमाहारं, मन्था वा, [अ]पूपा वा, ओदनकुल्माषं वा विस्तरेण पूर्व्ववत् ।

**कथं परिभुंक्ते ।** प्रतिसंख्याय परिभुंक्ते । न द्रवार्थं, न मदार्थं[5] न मण्डनार्थमिति विस्तरेण पूर्व्ववत् ।

पुनरपरं(:) समासार्थः [।] प्रतिपक्षपरिगृहीतं च परिभुंक्ते । कामसुखल्लिकान्त(वि)वर्जितञ्च । आत्मक्लमथान्तविवर्जितञ्च ब्रह्मचर्यानुग्रहाय ।

यदाह । प्रतिसंख्यायाहारमाहरति ।

**कथं कामसुखल्लिकान्तविवर्जितं** । यदाह । न द्रवार्थं, न मदार्थं, न मण्डना[6]र्थं, न विभूषणार्थमिति ।

**कथमात्मक्लमथान्तविवर्जितं** । यदाह [।] जिघत्सोपरतये, पौराणां च वेदनां प्रहास्यामि । नवाञ्च नोत्पादयिष्यामि । यात्रा च मे भविष्यति । बलं च सुखं चेति ।

कथं **ब्रह्मचर्यानुग्रहाय परिभुंक्ते ।** यदाह । ब्रह्मचर्यानुग्रहाय । अनवद्यता च । स्पर्शविहारता च मे भविष्यतीति ।

6A—2// पुनरपरः //[1]समासार्थः [।] **द्वयमिदं भोजनं, चाभोजनं च । तत्राभोजनं** यत् सर्व्वेण सर्व्वं सर्व्वथा किंचिन्न परिभुंक्ते । अभुंजानश्च म्रियते । तत्र **भोजनं द्विविधं । समभोजनं, विषमभोजनं च ।** तत्र **समभोजनं ।** यन्नात्यल्पं नातिप्रभूतं, नापथ्यं, नापरिणतेन संक्लिष्टं । तत्र **विषमभोजनं** । यद्य(द)त्यल्पमतिप्रभूतं च । अपरिणते(तं) वा, अपथ्यं वा, [2] संक्लिष्टं वा परिभुंक्ते । तत्र समभोजने नात्यल्पभोजने जिघत्सा-दौर्बल्यमनुत्पन्नं (।) नोत्पादयति । उत्पन्नं प्रजहाति । तत्र नातिप्रभूतभोजने(न[1]) [सम[2]]–

1. Wayman suggests (ibid, p. 148) this to be deleted, but the context does not permit.
2. This should be deleted or emended as असमेन.

विषमभोजनेन गुरुकः कायो भवत्यकर्मण्यः, अप्रहाण-क्षमो विस्तरेण पूर्व्ववत्। तत्र परिणतभोजनेन, समभोजनेन पौराणां च वेदनां प्रजहाति। नवाञ्च नोत्पादयिष्यत्ये[3]वमस्य यात्रा भवति। बलं च, सुखं च, असंक्लिष्टभोजनेन। समभोजनेन अनवद्यता च भवति। स्पर्शविहारता च।

**तत्रात्यल्पभोजनं** येन जीवति। **अतिप्रभूत-भोजनं**। येनास्य गुरुभाराध्याक्रान्तश्च कायो भवति। न च कालेन भ(भु)क्तम्परिणमति। **तत्रापरिणतभोजनेन** विषूचिका काये संतिष्ठते। [4]अन्यतमान्यतमो वा काये कायिक आबाधः (।) समुत्पद्यते। यथा अपरिणतभोजनेनैवमपथ्य-भोजनेन [।] तत्रायम**पथ्यभोजने विशेषः** [।] दोषः प्रचयं गच्छति। **खरं** वा[ऽऽ]बाधं स्पृशति। तत्र संक्लिष्टभोजनेन अधर्मेण पिण्डपातं पर्येष्य रक्तः परिभुंक्ते। सक्तो, गृद्धो, ग्रथित इति विस्तरेण पूर्व्ववत्। इति यः समभोजनं च परिभुंक्ते। [5]विषमभोजनं च परिवर्जयति। तस्माद् भोजने समकारीत्युच्यते। **भोजने समकारितैषा** एभिरा-कौरराख्याता, उत्ताना, विवृता, संप्रकाशिता। यदुत प्रतिसंख्यायाहारमाहरति। न द्रवार्थं, न मदार्थं, न मण्डनार्थं, न विभूषणार्थमिति विस्तरेण पूर्व्ववत्।

तत्र यस्ता(यत्ता)वदाह । प्रतिसंख्यायाहारमाहरति । न द्रवार्थं, न मदार्थं, न मण्डनार्थं, [6]न विदू(भू)षणार्थं(।), यावदेवास्य कायस्य स्थितये, यापनायै, अनेन तावदभोजनं न(च)प्रतिक्षिपति । यत्पुनराह । जिघत्सोपरतये, ब्रह्मचर्यानुग्रहाय विस्तरेण यावत् स्पर्शविहारतायै, अनेन विषमभोजनं प्रतिक्षिपति ।

**कथं च पुनर्व्विषमभोजनं** (**पुनरतिप्रभूतभोजनं**) **प्रतिक्षिपति ।** यत्तावदाह ब्रह्मचर्यानुग्रहायानेनातिप्रभूतभोजनं प्रतिक्षिपति । यदा[7]ह[।]पौराणां च वेदनां प्रहास्यामि(।), नवां च नोत्पादयिष्यामीत्यनेना-[ऽ]परिणत-भोजनत मे (ताम)पथ्यभोजनतां च प्रतिक्षिपति । यदाह । यात्रा च मे भविष्यति, बलं चानेनात्यल्पभोजनतां प्र(तामप्र)भूतभोजनतां च दर्शयति (प्रतिक्षिपति) । यदाह । सुखं च मे भविष्यतीत्यनेन परिणतभोजनतां च[1] दर्शयति [।] यदाह (।) सुखं च मे भविष्यतीति पथ्यभोजनतां
6B—2// //[1] च दर्शयति । यदाह । अनवद्यता च मे भविष्यति, स्पर्शविहारता चेत्यनेनासंक्लिष्टभोजनतां दर्शयति । योसावधर्मेण पिण्डपातं पर्येष्य रक्तः

1. Wayman adds पथ्य(a mistake for पथ्य)भोजनतां before च and deletes the following sentence on the basis of the Tibetan trans., see, f.n. 53, p. 149.

परिभुंक्ते । सक्तो विस्तरेण पूर्व्ववत् । स संक्लिष्टश्च परिभुंक्ते, सावद्यता चास्य भवति । तस्यैव च कुशलपक्षप्रयुक्तस्य प्रतिसंलयने, योगे, मनसिकारे, स्वाध्याये,[2]अर्थचिन्तायां त एव पापका अकुशला वितर्काश्चित्तमनुवस्रवन्ति ये[अ]स्य तं नित्यां (तन्नित्यां), तत्प्रवणां, तत्प्राभोरां (तत्प्राभारां) चित्तसन्ततिं प्रवर्त्तयन्ति । येनास्य स्पर्शविहारेण (स्पर्शविहारो न) भवति । सा चेयं द्विविधा स्पर्श-विहारता अतिप्रभूतभोजनपरिवर्जनाच्च येनास्य न गुरुकः कायो भवत्यकर्मण्यः, अप्रहाणक्षम इति विस्तरेण पूर्व्ववत् । [3]अपरेना(णा)स्वादाकरणाद् येनास्य वितर्कसंक्षोभकृतां(ता)अस्पर्शविहारता न भवति । तदेवं सति सर्व्वैरेभिः पदैर्भोजने समकारिता व्याख्याता भवति । इयमुच्यते भोजने मात्रज्ञता ।। विस्तरतः संक्षेपतश्च ।।

**पूर्व्वरात्रापररात्रं[1] जागरिकानुयुक्तता कतमा[2] ।**

---

1. Buddhaghosa remarks that जागरिकानुयोग is one of the causal factors of the पातिमोक्खसंवर and झान : पुब्बरत्तापरत्तं जागरियानुयुत्तमनुयुत्तो ति इदमस्स कारणभावपरिदीपनं । (SVA, p. 326), पुब्बरत्तापरत्तं ति आदिना सीले पतिट्ठितस्स झानभावनाय उपकारके धम्मे (ibid, p. 327).
2. cp. 'कथं चावुसो, जागरियं अनुयुत्तो होति ? इधावुसो, भिक्खु दिवसं चङ्कमेन निसज्जाय आवरणीयेहि धम्मेहि चित्तं परिसोधेति । रत्तिया पठमं यामं चङ्कमेन निसज्जाय आवरणीयेहि धम्मेहि चित्तं परिसोधेति । रत्तिया मज्झिमं यामं

*(contd. on p. 98)*

तत्र कतमः पूर्व्वरात्रः(-मत् पूर्वरात्रम्) । कतमो-(मद)पररात्रः(त्रम्) । कतमो[4]जागरिकायोगः । कतमा जागरिकायोगस्यानुयुक्तता[1] । तत्राय(यं)-(त्वेदं) सायाह्नं अर्धरात्रः(त्रं), सायाह्नं सूर्यास्तंगमनमुपादाय यो रात्र्याः पूर्व्वभागः, सोतिरेकं प्रहारं (साऽतिरेकः प्रहरः) । तत्रायं जागा(ग)रिकायोगः[2] । यदाह । दिवा चंक्रमनिषद्याभ्यामावरणीयेभ्यो धर्मेभ्य[5]श्चित्तं परिशोधयति । परिशोध्य, बहि[र्]विहारस्य पादौ प्रक्षाल्य, विहारं प्रविश्य, दक्षिणेन पार्श्वेन शय्यां कल्पयति । पादे पादमाधाय आलोकसंज्ञी स्मृतः । संप्रजान(न्) उत्थानसंज्ञामेव मनसि कुर्व्वन्, स रात्र्याः पश्चिमे यामे[6]लघु लघ्वेव प्रतिविबुध्य, चंक्रमनिषद्याभ्यामावरणीयेभ्यो धर्मेभ्य-

---

*(contd. from p. 97)*

दक्खिणेन पस्सेन सीहसेय्यं कप्पेति पादे पादं अच्चाधाय सतो सम्पजानो, उट्ठानसञ्ञं मनसि करित्वा । रत्तिया पच्छिमं यामं पच्चुट्ठाय चङ्कमेन निसज्जाय आवरणीयेहि धम्मेहि चित्तं परिसोधेति ।, S. N., III.96; see also, M. N., II.22; A. N., I.105; Vibhaṅga, pp. 299-300; Dhs., pp. 291-2.

1. cp. SVA, p. 347 : जागरिकानुयोगनिद्देसे पुब्बरत्तापरत्तं ति एत्थ अड्ढरत्तसङ्खाताय रत्तिया पुब्बे पुब्बरत्तं, इमिना पठमयामञ्चेव पच्छाभत्तञ्च गण्हाति । रत्तिया पच्छा अपररत्तं, इमिना पच्छिमयामञ्चेव पुरेभत्तञ्च गण्हाति । मज्झिमयामो पनस्स भिक्खुनो निद्दाकिलमथविनोदनोकासो ति न गहितो । see also, p. 348, lines 1-2.

2. cp., ibid, loc. cit. जागरिकानुयोगं ति जागरियस्स असुपनभावस्स अनुयोगं । अनुयुत्तो होती ति तं अनुयोगसङ्खातं आसेवनं भावनं अनुयुत्तो होति पयुत्तो ।

श्चित्तं परिशोधयति ।[1] तत्रेयं **जागरिकानुयोगस्यानुयुक्तता ।** यथापि तद्बुद्धस्य भगवत: श्रावकजागरिकायोगस्य श्रोता । तत्र शिक्षितुकामो भवति । यथाभूतस्यास्य यज्जागरिकायोगमारभ्य बुद्धानुज्ञातं जागरिकानुयोगं सम्पादयिष्या[7]मीति [।] यश्छन्दो, वीयं (वीर्यं), व्यायामो, निष्क्रम: । पराक्रमस्थानप्रारम्भ: । उत्साह उत्सूढिरप्रतिवाणिश्चेतस: । संग्रह: सावद्य (द्य:) ।

**तत्र कथं चंक्रमनिषद्याभ्यामावरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयति ।** **दिवा** उच्यते । सूय (र्यं)-
स्याभ्युद्गमनसमयमुपादाय यावदस्तगमनसमया[च्],
6A—3// चंक्रम उच्यते । आयतानि (आयतनानि) //[1](।)
विपुलमापिते पृथिवीप्रदेशे गमनप्रत्यागमनप्र[योग[2]]
युक्त । **सत्कायकर्मनिषद्या** उच्यते । यथापीहैकत्यो
मंचेवा, पीठे वा, तृणसंस्तरे वा निषीदति । पर्यङ्कमाभुज्य । ऋजुं कायं प्रणिधायाभिमुखीं स्मृतिमुपस्थाप्य [।] आवरणान्युच्यन्ते पञ्च निवरणानि । आवरणीया धर्मा ये निवरणस्थानीया धर्मा निवर-

---

1. See, Sdp., p. 652; cp. Vjv., p. 203; Vibhaṅga, pp. 299-300; cp. also, p. 301; cp. SVA, p. 348 : चित्तस्स आवरणतो आवरणीयेहि धम्मेहि पञ्चहि पि नीवरणेहि सब्बाकुसलधम्मेहि वा चित्तं परिसोधेति । तेहि धम्मेहि विमोधेति परिमोचेति । ठानम्पनेत्थ किञ्चापि न गहितं, चङ्कमनिसज्जासन्निस्सितं पन कत्वा गहेतब्बमेव ।
2. Letters damaged by pin-hold.

णापरकास्ते[2]पुनः कतमे । कामछन्दो(कामच्छन्दो), व्यापाद[ः], स्त्यान(नं), मिद्धौद्धत्यं, कौकृत्यं, विचिकित्सा,[अ]शुभता, प्रतिघनिमित्तमन्धकारः, ज्ञातिजनपदामरवितर्कपौराणस्य च हसितक्रीडितरसितपरिवारितस्यानुस्मृतिः, त्रयश्चाध्वानः । त्र्यध्वगता चायोनिशो धर्मचिन्ता [।]

एभ्यः **कथं चंक्रमणचित्तं परिशोधयति ।** कतिभ्यश्च परिशोधयति[।][3]स्त्यानमिद्धात्स्यानमिद्धाहारकाच्चावरणात् परिशोधयति । आलोकनिमित्तमनेन साधु च, सुष्ठु च, सुगृहीतं भवति । सुमनसिकृतं, सुज(जु)ष्टं । सुप्रतिविद्धं । स आलोकसहगतेन, सुप्रभाससहगतेन चित्तेन छन्ने वा, अभ्यवकाशे वा, चंक्रमे चंक्रम्यमाणः (चंक्रममाणः), अन्यतमान्यतमेन प्रसदनीयेनालम्बनेन चित्तं संदर्शय[4]ति । समुत्तेजयति । संप्रहर्षयति । यदुत बुद्धानुस्मृत्या वा, धर्मसंघशीलत्यागदेवतानुस्मृत्या वा, (।) काये वा पुनरनेन स्त्यानमिद्धादीनवप्रतिसंयुक्ता धर्माः श्रुता भवन्त्यद्गृहीता, धृताः । तद्यथा सूत्रं, गू(गे)यं, व्याकरणं, गाथोदाननिदानावदानेतिवृत्तकजातकवैपुल्याद्भुतधर्मोपदेशा, येषु स्त्यानमिद्धम[5]मनेकपर्यायेण विगर्हितं, विजुगुप्सितं [।] स्त्यानमिद्धप्रहाणं पुनः(।)स्तुतं, वर्ण्णितं, प्रशस्तं [।] तान् तेषां विस्तरेण स्वरेण स्वाध्यायं करोति । परेषाम्वा

प्रकाशयत्यर्थम्वा चिन्तयति । तुलयत्युपपरीक्षते, दिशो वा व्यवलोकयति । चतुर्नक्षत्रग्रहतारासु वा दृष्टि धारयत्युदकेन मुखमाक्लेदयति । एवमस्य तत्स्त्यान-मिद्धप[6]र्यवस्थानं अनुत्पन्नं च नोत्पद्यते, उत्पन्नं च प्रतिविगच्छत्येवमनेन तस्मादावरणीया[द्] धर्माच्चित्तं परिशोधितं भवति ।

तत्र निषद्यया कतमेभ्य आवरणीयेभ्यो धर्मेभ्यः-[चित्तं[1]][7]परिशोधयति । कामच्छन्दाद्, व्यापा-
6B—3// दादौद्धत्यकौकृत्याद्विचिकित्साया //[1]स्तदाहारकेभ्यश्च धर्मेभ्यः [।] स उत्पन्ने वा कामच्छन्दपर्यवस्थाने प्रतिविनोदनायानुत्पन्ने वा दूरीकरणाय, निषद्य, पर्यङ्कमाभुज्य, ऋजुं कायं प्रणिधाय, प्रतिमुखां(खीं) स्मृतिमुपस्थाप्य, विनीलकं वा, विपूयकम्वा, विम(भ)-द्राम(त्म)कम्वा, व्याध्मातकम्वा, वि[खादि[2]]तकम्वा, विलोहितकम्वा, अस्थिं (अस्थि) वा, शंकलिकां वा, अन्यतमान्यतमं वा भद्रकं[2]समाधिनिमित्तं मनसि करोति । ये वा धर्माः कामरागप्रहाणमेवारभ्य कामरागप्रहाणायोद्गृहीता भवन्ति । धृता, वचसा परिजिता, मनसा अन्वीक्षिता[:], दृष्ट्या सुप्रतिवि-द्धा[:], तद्यथा सूत्रं, गेयं, व्याकरणमिति विस्तरेण पूर्व्ववत् । ये अनेकपर्यायेण कामरागं, कामच्छन्दं,

1. MS. omits this.
2. Letters damaged by pin-hold.

कामालयं, कामनियन्ति, कामाध्यव[3]सानं विगर्हन्ति, विवर्ण्णयन्ति। विजुगुप्सयन्ति। कामरागप्रहाण-मनेकपर्यायेण स्तुवन्ति। वर्ण्णयन्ति, प्रशन्स(शंस)-यन्ति। तां (तान्) धर्मांस्तथा निषण्णो[अ]योनिशो मनसि करोत्येवमस्यानुत्पन्नं च कामच्छन्दपर्यवस्थानं नोत्पद्यते। उत्पन्नं च कामच्छन्दपर्यवस्थानं प्रति-विगच्छति।

तत्र व्यापादे अयम्विशेषः। तथा निषण्णो[4]-मैत्रीसहगतेन चित्तेनावैरेणासंपथेनाव्याबाधेन, विपुलेन, महद्गतेनाप्रमाणेन सुभावितेनैकां दिशमधिमुच्य स्मारित्वोप(स्मृत्वोप-)सम्पद्य विहरति। तथा द्वितीयां, तथा तृतीयां, तथा चतुर्थीमित्यूर्ध्वमधस्तिर्यक्सर्व्वमनन्तं लोकं स्मारित्वा(स्मृत्वा)उपसम्पद्य विहरति। शेषं पूर्व्ववत्।

तत्रौद्धत्यकौकृत्ये विशेषः। तद्य[5]था निषण्ण[ो]-अध्यात्ममेव चित्तं स्थापयति। संस्थापयति। सम्विषोदयति (संविशोधयति)। एकोतीकरोति। समाधत्ते। शेषं पूर्व्ववत्।

तत्र विचिकित्सानिवरणे विशेषः। तथा सन्निषण्णः। अतीतमध्वानं नायोनिशो मनसिकरोति। अनागतं प्रत्युत्पन्नमध्वानं नायोनिशो मनसिकरोति। किं न्वहमभूवमतीते[अ]ध्वनि को[6]न्वहमभूवं। आहोस्विन्नाहमतीते[अ]ध्वनि को न्वहमभूवं। कथं

न्वहमभूवमदी(ती)ते[ऽ]ध्वनि [।] को न्वहं भविष्यामि । अनागते[अ]ध्वनि, कथं भविष्याम्यनागते[अ]ध्वनि, के सन्तः के भविष्यामः । अयं सत्व(सत्त्वः) कुत आगतः । इतश्च्युतः कुत्रगामी भविष्यति । [7] स इत्येवं रूपमयोनिशोमन-
6A—4// सिकारं वर्जयित्वा //[1]योनिशो मनसि करोति । अतीतमध्वानमनाती(ग)तं प्र[त्युत्पन्न[1]]मप्यध्वानं [।] स धर्ममात्रं पश्यति । वस्तुमात्रं । सच्च सतः, असच्चासतः । हेतुमात्रं, फलमात्रं, नासद्भूतं समारोपं करोति । न सद्वस्तु नाशयत्यपच(व)दति । भूतं भूततो जानाति । यदुतानित्यतो वा, [दुःखतो[1]]वा, शून्यतो वा, [अनात्मतो वा[2]], अनित्येषु, दुःखेषु, शून्येषु, अनात्मसु धर्मेषु स[2]एवं योनिशो मनसि कुर्व्वन्, बुद्धे[अ]पि निष्काङ्क्षो भवति, निर्विचिकित्सः । धर्मे, संघे, दुःखे, समुदये, निरोधे, मार्गे, हेतौ, हेतुसमुत्पन्नेषु धर्मेषु निष्काङ्क्षो भवति । निर्विचिकित्सः । शेषं पूर्व्ववत् ।

तत्र व्यापादे वक्तव्यं । यो[अ]नेन प्रतिघं प्रतिघनिमित्तं चारभ्य, तस्य च प्रहाणाय, धर्मा उद्गृहीता इति विस्तरः [ः ।]

[3]औद्धत्यकौकृत्ये वक्तव्यं । अनेनौद्धत्यकौकृत्य-

1. Letters damaged by pin-hold.
2. Added by a separate hand.

मारभ्य तस्य च प्रहाणाय धर्मा उद्गृहीता इति विस्तरेण पूर्व्ववत् ।

विचिकित्सायाम्वक्तव्यं । ये अनेन विचिकित्सा-मारभ्य तस्याश्च प्रहाणाय धर्मा उद्गृहीता इति विस्तरेण पूर्व्ववदित्यनेन कामछ(च्छ)न्दनिवरणाद् व्यापादस्त्यानमिद्धौद्धत्यकौकृत्यविचिकित्सानिवरणा[च्] [4]चित्तं विशोधितं भवति । तदाहारकेभ्यश्च धर्मेभ्य आवरणीयेभ्यस्तेनाह चंक्रमनिषद्याभ्यामावरणी-येभ्यो धर्मेभ्यश्चित्तं परिशोधयति ।

या चैषा धर्माधिपतेया आवरणीयेभ्यो धर्मेभ्य-श्चित्तस्य परिशोधना [।] **अस्ति पुनरात्माधिपतेया, लोकाधिपतेया चावरणीयेभ्यो धर्मेभ्यश्चित्त**[5] **परिशोधना** [।]

**आत्माधिपतेया कतमा ।** यथापि तदुत्पन्ने अन्यतमान्यतमस्मिन्निवरणे आत्मत एव प्रतिरूपता-म्विदित्वा, उत्पन्नं निवरणं नाधिवासयते(ति) । प्रजहाति, विनोदयति, व्यन्तीकरोति । तेन निवर-णेनात्मानं न ज्ञायमानः, चेतस उपक्लेशकरेण, प्रज्ञादौर्बल्यकरेण, विघातपक्ष्येणै[6]वमसावात्मानमे-वाधिपतिं कृत्वा आवरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयति ।

**कथं लोकमधिपतिं कृत्वा आवरणीयेभ्यो धर्मे-भ्यश्चित्तं परिशोधयति ।** इहास्या(स्य) निवरणे

समुत्पन्ने, उत्पत्तिकाले वा प्रत्युपस्थिते । एवं भवत्यहं चेदनुत्पन्नं निवरणमुत्पादयेयं, शास्ता मे अपवदेद्, देवता अपि, [7]विज्ञा अपि, सब्रह्मचारिणो[अ]धर्मतया विगर्हयेयुरिति । स लोकमेवाधिपतिं कृत्वा आवरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयति । इहास्य निवरणे समुत्पन्ने, उत्पत्तिकाले वा प्रत्युपस्थिते, एवं भवत्यहं चेदनुत्पन्नं निवरणमुत्पादयेयं । शास्ता मे अपवदेद्, देवता अपि । विज्ञा अपि, सब्रह्मचारिणो[अ]धर्म्मत[8]या विगर्हयेयुरिति । स लोकमेवाधिपतिं कृत्वा, अनुत्पन्नं च निवरणं नोत्पादयति, उत्पन्नं च प्रजहाति । एवं लोकमधिपतिं कृत्वा आवरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयति । शयनासनप्रतिगुप्त्यर्थं पुनर्लोकाचारञ्चानुवृत्तो भविष्यतीति यावद्रात्र्याः प्रथमे यामे चंक्रम-
6B—4// //[1]निषद्याभ्यामावरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयति । आवरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोध्य बहिर्विहारस्य पादौ प्रक्षालयति । प्रक्षाल्य, विहारं प्रविश्य, शय्यां कल्पयति । यावदेव स्वस्यो(यौ)-पचयिकानाम्महाभूतानां उपचयाय[।]उपचितो[अ]यं कायः कर्मण्यतरश्च भविष्यति । अनुकूलतरश्च सातत्येनै[क[1]]पक्ष्ये कुशलपक्षप्रयोगे ।

**केन[2]कारणेन[2] पार्श्वेन शय्यां कल्पयति[3] ।**

---

1. MS. omits this, added by us.
2. Wayman adds दक्षिणेन, ibid, p. 72.
3. Buddhaghosa distinguishes between four śayyās, कामभोगीसेय्या, पेतसेय्या, सीहसेय्या and तथागतसेय्या, *vide* SVA, p. 348.

**सिंहस्य प्राणिनः साधर्म्येण** [।]किं पुनरत्र साधर्म्यं [।]सिंहः प्राणं(प्राणी)सर्व्वेषां तिर्यग्योनिगतानां प्राणिनां विक्रान्त, उत्साही, दृढपराक्रमः । भिक्षुरपि जागरिकानुयुक्त आरब्धवीर्यो विहरति । विक्रान्त, उत्साही, दृढपराक्रमः । अतस्तस्य सिंहोपमैव शय्या प्रतिरूपा भवदि(ति), नो तु प्रेत[3]शय्या, देवशय्या, न का[म[1]] भोगशय्या । तथा हि ते सर्व्वे एव कुसीदा, हीनवीर्या, च(म)न्दबलपराक्रमाः । अपि तु धर्म्मतैषा यद्दक्षिणेन पार्श्वेन सिंहोपमां शय्यां कल्पयतो न तथा गात्राणां विक्षेपो भवति । न च शयानस्य स्मृतिसंप्रमोषो भवति । न च गाढं स्वपिति । पापकांश्च स्वप्नां(प्नान्) न पश्यति । अन्यथा तु शय्यां कल्पय[4]तो विपर्ययेण सर्व्वे दोषा वेदितव्याः । तेनाह दक्षिणेन पार्श्वेन शय्यां कल्पयति ।

आलोकनिमित्तमनेन सूद्गृहीतं भवति । सुमनसिकृतं । सुजुष्टं, सुप्रतिविद्धं । यदेव मनसि कुर्व्वन् स प्रभा सहगतेन चित्तेन शय्यां कल्पयति । सुप्तस्यापि चास्य येन न भवति चेतसः (।) अन्धकारायितत्वमेवमालोकसंज्ञी[5]शय्यां कल्पयति ।

कथं स्मृत[:]शय्यां कल्पयति । य (ये) अनेनधर्मा[:]श्रुता भवन्ति । चिन्तिता, भाविता वा,

1. A separate hand adds this.

कुशला अर्थोपसंहितास्तदन्वया[अ]स्य स्मृतिर्यावत्स्व-
पनकालानुवर्त्तिनी भवति। यथास्य सुप्तस्यापि त
एव धर्मा जाग्रतो वा अभिलपन्ति, तेष्वेव च धर्मेषु
तच्चित्तं बहुलमनुविचरति। इति यथास्मृत्या यथा-
स्मृतः। [6] कुशलचित्तशय्यां कल्पयति। अव्याकृत-
चित्तो वा [।] एवं स्मृतः शय्यां कल्पयति।

**कथं संप्रजानन्तो(जानन्) शय्यां कल्पयति।**
सुप्तस्यास्य तथा स्मृतस्य यस्मिन्समये[अ]न्यतमान्य-
तमेनोपक्लेशेन चेतसः संक्लेशो भवति। स
उत्पद्यमानमेव तं संक्लेशं सम्यगेव प्रजानाति,
नाधिवासयति, प्रजहाति, प्रतिविध्यति। [7]प्रत्यु-
दावर्त्तयति मानसं। तेनोच्यते संप्रजानं(नन्) शय्यां
कल्पयति।

**कथमुत्थानसंज्ञामेव मनसिकुर्व्वन् शय्यां
कल्पयति।** स वीर्यसंप्रगृहीतं चित्तं कृत्वा शय्यां
कल्पयति। सुप्रतिबुद्धिकया सुहर्षक्त(सुहृष्टचित्त)-
स्तद्यथा आरण्यको मृगः। नो तु सर्व्वेण सर्व्वं
विद्धमवक्रमणनिम्नं चित्तं करोति। तत्प्रवणं। न
तत्प्राभो(भा)रमपि (।) [8]चास्यैवं भवति। अहो
बताहं बुद्धानुज्ञातां जागरितां(कां)सर्व्वेण सर्व्वं
सर्व्वथा सम्पादयेयमिति। तस्याश्च सम्पादनार्थं
त्व[ा]शंसेन, रसेन, प्रयोगेण, छन्दगतो विहरत्य-
भियुक्तश्च [।] अपि चास्यैवं भवति। यथाहमद्य

**जागरिकार्थमारब्धवीर्यो व्यहार्षं, कुशलानाञ्च धर्माणां**
6A—5// भावनायै, दक्षो[अ]नलस, उत्थानसम्पन्नः, श्वः //[1]
प्रभाते, निर्गतायां च रजन्यां, भूयस्या मात्रया
आरब्धवीर्यो विहरिष्यामि उत्थानसम्पन्न इति ।
तत्रैकया उत्थानसंज्ञया गाढं स्वपिति । येनाहं(यं)
शक्नोति लघु लघ्वेव उत्थानकाले उत्थातुं, न कालाति-
क्रान्तं प्रतिबुध्यति । द्वितीययोत्थानसंज्ञया बुद्धानुज्ञातां
सिं[हश[1]]य्यां कल्पयत्यन्यूनामनधिकां । तृतीययोत्थान-
संज्ञया छन्दं[2]न स्रन्स(स्रंस)यति । सति स्मृति-
संप्रमोषे, सत्युत्तरश्रोत्तरत्र समादानाय प्रयुक्तो भवति ।
एवमुत्थानसंज्ञामेव मनसि कुर्व्वन् शय्यां कल्पयति ।

स रात्र्याः पश्चिमे यामे लघु लघ्वेव प्रति-
विबुध्यावरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयतीति ।
**पश्चिमो याम उच्यते ।** यो[अ]पररात्रः सातिरेक-
प्रहरं(रः) । स चायमालोकसं[3]ज्ञी स्मृतः ।
संप्रजान[न्], उत्थानसंज्ञामेव मनसि कुर्व्वन्, मध्यमं
यामं सातिरेकं प्रहरं मिद्धमवक्रामयित्वा(क्राम्य),
यस्मि(स्मिन्)समये व्युत्तिष्ठते । तत्र तस्मि(स्मिन्)
समये व्युत्तिष्ठते । कर्मण्यकायो भवति । उत्थाय,
नाधिमात्रेण स्त्यानमिद्धपर्यवस्थानेनाभिभूतः ।
येनास्योत्तिष्ठतो धन्धायितत्वं वा स्यान्मंदा[4]
यितच्च(त्व)म्वा, आलस्यकौसीद्यम्वा[।] असति वा

1. Letters damaged by pin-hold.

पुनस्तस्मिन्धन्धायितत्वे, मन्दायितत्वे, आलस्यकौसीद्ये, लघु लघ्वेवोत्थानं भवत्याभोगमात्रादेव नो संग्रामं वा कृत्वा आवरणीयेभ्यो धर्मेभ्यः परिशुद्धिः पूर्ववद्वेदितव्याः(व्या) । अयं तावत्पूर्वरात्रापररात्रं जागरिकानुयोगस्य विस्तरविभागः ।

समासार्थाः पु[5]नः कतमे । इह जागरिकायोगमनुयुक्तस्य पुरुषपुद्गलस्य **चत्वारि सम्यक्करणीयानि** भवन्ति । कतमानि चत्वारि । यावज्जाग्रति(र्ति)-तावत्कुशलपक्षं न रिंचति । सातत्येनै[क[1]]पक्ष्यकुशलधर्मभावनायां कालेन च शय्यां कल्पयति । नाकालेन । सुप्तश्चासंक्लिष्टचित्तो मिद्धमवक्रामयति । न संक्लिष्टचित्तः [।] कालेन च प्रति[6]विबुध्यते(ति) । नोत्थानकालमतिवर्तते । इतीमानि चत्वारि सम्यक्करणीयान्यारम्य भगवता श्रावकाणां जागरिकानुयोगो देशितः ।

कथं च पुनर्देशितः । यत्तावदाह [।] दिवा चंक्रमनिषद्याभ्यामावरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयति । एवं रात्र्याः प्रथमयाममि (इ)त्यनेन तावत् प्रथमं सम्यक्क[7]रणीयमाख्यातं । यदुत यावज्जाग्रति(र्ति)तावत् कुशलपक्षं न रिंचति । सातत्येनै[क[2]]पक्ष्यकुशलधर्म्मभावनायां । यस्मात्

1. MS. omits this.
2. Letter damaged by pin-hold.

पुनराह । बहिर्विहारस्य पादौ प्रक्षाल्य, विहारं प्रविश्य, दक्षिणेन पार्श्वेन शय्यां कल्पयति । पादे पादमाधायेत्यनेन द्वितीयं सम्यक्करणीयमाख्यातं । यदुत कालेन शय्यां कल्पयति । [8] नाकालेन । यत्पुनराह । आलोकसंज्ञी स्मृतः । संप्रजान[न्], उत्थानसंज्ञामेव मनसि कुर्व्वन्, शय्यां कल्पयतीत्यनेन तृतीयं सम्यक्करणीयमाख्यातं । यदुत असंक्लिष्टचित्तो मिद्धमवक्रामयति (क्रमते) । न संक्लिष्टचित्त
6B—5// इति । यत् पुनराह । // [1] रात्र्याः पश्चिमे यामे लघु लघ्वेव प्रतिविबुध्य आवरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयतीत्यनेन चतुर्थं सम्यक्करणीयमाख्यातं । यदुत कालेन प्रतिविबुध्यति । नोत्थानकालमतिवर्तते । इति तत्र यदुक्तमालोकसंज्ञी स्मृतः, संप्रजानन्, व्युत्थानसंज्ञामेव मनसि[कुर्व्व[1]]न् शय्यां कल्पयतीति । अतो द्वाभ्यां कारणाभ्यां असंक्लि[2]ष्टचित्तो[2] मिद्धमवक्रामयति । यदुत स्मृत्या, संप्रजन्येन, द्वाभ्यां पुनः कारणाभ्यां कालेन प्रतिविबुध्यते । नो तु कालमतिवर्तते । यदुतालोकसंज्ञया, उत्थानसंज्ञया च । कथं पुनः कृत्वा कुशलमालम्बनं परिगृह्य स्वपिति । संप्रजन्येन, तस्मात् कुशलादा-

1. Letters damaged by pin-hold.
2. Wayman (ibid, p. 73) emends it as असंक्लिष्टचित्तम् but I think, no emendation is required here.

लम्बनाच्च्यवमानं, संक्लिश्यमानं चित्तं लघु लघ्वेव सम्यक्प्रजानाति । एवमस्याभ्यां द्वाभ्यां कारणाभ्याम-संक्लिष्टचित्तस्य शय्या भवति । तत्रालोकसंज्ञया, उत्थानसंज्ञया च । न गाढं स्वपिति । नास्य दूरानुगतं तन्मिद्धपर्यवस्थानं भवति । इत्याभ्यां द्वाभ्यां कारणाभ्यां कालेन [प्रति[1]]विबुध्यते(ति) । नोत्थान-कालमतिवर्तते । अयं जागरिकानुयोगस्य समासार्थो (र्थः)[।]यश्च पूर्व्वको विस्तरविभागः, यश्चायं स[4]मासार्थः । इयमुच्यते पूर्वरात्रापररात्रं जागरिकानुयुक्ता ॥

**संप्रजानद्विहारिता कतमा ।** यथापीहैकत्यः अभि-क्रमप्रतिक्रमे संप्रजानद्विहारी भवति । आलोकितव्यव-लोकिते, संमिजित(साम्मिञ्जित)प्रसारिते, संघाटी-चीवरपात्रधारणे । अशिते, पीते, खादिते, स्वादिते, निषण्णे, शयिते, जागृते, प्र[ल[2]]पिते, [5]तूष्णींभावे, निद्राक्लमविनोदने संप्रजानद्विहारी भवति ।[3]

---

1. A separate hand adds this.
2. MS. omits this.
3. cf., Vbh., p. 301 : तत्थ कतमं सम्पजञ्ञं ? या पञ्ञा पजानना विचयो पविचयो धम्मविचयो सल्लक्खणा उपलक्खणा पच्चुपलक्खणा पण्डिच्चं कोसल्लं नेपुञ्ञं वेभब्या चिन्ता उपपरिक्खा भूरी मेधा परिणायिका विपस्सना सम्पजञ्ञं पतोदो पञ्ञा पञ्ञिन्द्रियं पञ्ञाबलं पञ्ञासत्थं· · · ·अमोहो धम्मविचयो सम्मादिट्ठि—इदं वुच्चति "सम्पजञ्ञं ।" इति इमाय च सतिया इमिना च सम्पजञ्ञेन उपेतो होति· · · ·पे० समन्नागतो । एवं भिक्खु सतो सम्पजानो

*(contd. on p. 112)*

तत्र **कतमो[अ]भिक्रमः** । प्रतिक्रमः कतमः । अभिक्रमप्रतिक्रमे **सम्प्रजानद्विहारिता** [कतमा[1]] ।

**तत्राभिक्रमः** [।] यथापीहैकत्यो ग्रामम्वा उपक्रामति । ग्रामान्तरम्वा, कुलम्वा, [कुलान्तरम्वा, विहारम्वा[1]], विहारान्तरम्वा [।]

**तत्र प्रतिक्रमः ।** यथापीहैकत्यः ग्रामान्तराम्वा-(ग्रामाद्वा)प्रतिनिवर्त्तते । ग्रामा[6]न्तराद्वा, कुलाद्वा, कुलान्तराद्वा, विहाराद्वा, विहारान्तराद्वा [।]

**तत्र संप्रजानद्विहारिता** (**याः**[2]) ।। अभिक्रम[मा]णे-(णो)अभिक्रमामीति सम्यगेव प्रजान[ा]ति । अत्र मया अभिक्रमितव्यं । अत्र मया पुनर्नाभिक्रमितव्यमिति । सम्यगेव प्रजानति । अयम्वा मे अभिसंक्रमणकालः [7]अयं नाभिसंक्रमणकाल इति । सम्यगेव प्रजानाति । इदमस्योच्यते संप्रजन्यं [।]स चेत्तेन संप्रजन्येन

---

*(contd. from p. 111)*

अभिक्कमति, ····पटिक्कमति, ····आलोकेति, सतो सम्पजानो सम्मिञ्जेति, ····पसारेति, सतो सम्पजानकारी होति, सङ्घाटिपत्तचीवरधारणे, सतो सम्पजानकारी होति, असिते पीते खायिते सायिते सतो सम्पजानकारी होति, उच्चारपस्सावकम्मे सतो सम्पजानकारी होति, गते ठिते निसिन्ने सुत्ते जागरिते भासिते तुण्हीभावे सम्पजानकारी होति, cp. ibid, p. 300; AS, p. 45 : सम्पजानातीति सम्पजञ्ञं, for an elaborate account of सम्प्रजन्य according to Theravāda, see, SVA, pp. 357-68; see also BCA with Pañjikā, V; Ś S, p. 68.

1. MS. omits this.
2. This may be deleted.

समन्वागतः । अभिक्रममाणः प्रजानात्यभिक्रमामीति । यत्र चानेनाभिक्रमितव्यं भवति । तत्र चाभिक्रमति । कालेन चाभिक्रमति नाकालेन । यथा चाभिक्रमितव्यं । यद्रूपया[च[1]] य(यं)या आचारेणाक[8]ल्पेन ईर्यापथेन तथा अभिक्रमतीयमस्योच्यते संप्रजानाद्विहारिता यदुताभिक्रमप्रतिक्रमः (मयोः) ।

**तत्र कतमदालोकितं, कतमद् व्यवलोकितं ।** कतमा आलोकितव्यवलोकित संप्रजानाद्विहारितः (ता) । तस्यास्य पूर्वपरिकी[र्त्तितेषु धर्मेषु[2]]
6A—6// //[1] अभिक्रमतः, प्रतिक्रमतश्च यदबुद्धिपूर्वक-मच्छन्दपूर्वकं । अ[न्तरे[1]]ण चक्षुषा रूपदर्शनमिदमुच्यते आलोकितं ।

यत्पुनरुपसंक्रान्तस्य बुद्धिपूर्व्वकं प्रयत्नपूर्व्वकं, कृत्यपूर्व्वकं चक्षुषा रूपदर्शनं, तद्यथा राज्ञा(ज्ञां) राज्या(जा)मात्राणां, नैगमानां, जानपदानाम्वा, ब्राह्मणानाम्वा, धनिनां, श्रेष्ठिनां, सार्थवाहानां, तदन्येषाम्बाह्यकानां[2]लयनानां, मारुतानामवरकाणां, प्र(प्रा)सादानां, हर्म्यतलानामिति । यद्वा पुनरन्येषां लोकचित्राणां दर्शनमिदमुच्यते । व्यवलोकितं ।

यत्पुनरालोकितं च व्यवलोकितं च स्वलक्षणतः

---

1. Letter(s) lost by pin-hold.
2. Some portion of a line of the MS. leaf is overlapped by portions of another leaf so that it becomes illegible.

सम्यगेव प्रजानाति । यथा आलोकि(कयि)तव्यं, यथा व्यवलोकयितव्यं तदपि[3]सम्यगेव प्रजानाति । इदमस्योच्यते संप्रजन्यं[।] स तेन संप्रजन्येन समन्वागतः । सचेदवलोकयमानो जानात्यवलोकयामीति । यच्चावलोकयितव्यं व्यवलोकयितव्यं तदालोकयति व्यवलोकयति । यदा आलोकयितव्यं, व्यवलोकयितव्यं । तदा आलोकयति, व्यवलोकयति [।] यथा आलोकयितव्यं व्यवलोकयितव्यं[4] तथा आलोकयति, व्यवलोकयति । इयमस्योच्यते । संप्रजानद्विहारिता । यदुतालोकितव्यवलोकिते [।]

**तत्र कतमत् संमिजि(सम्मिञ्जि)तं, कतमत् प्रसारितं, कतमा संमिजि(सम्मिञ्जि)तप्रसारिते संप्रजानद्विहारिता ।** स तथा आलोकयमानो, व्यवलोकयमानश्च । अभिक्रमपूर्वकं, प्रतिक्रमपूर्वकञ्च, यत्पादौ वा सम्मिजयति, प्रसा[5]रयति । बाहू वा संमि(मिं)जयति । प्रसारयति । हस्तौ वा संमि(मिं)जयति, प्रसारयति । इत्यन्यतमान्यतमम्वा अंगप्रत्यंगं सम्मिञ्जियति । प्रसारयतीदमुच्यते । संमि(मिं)जित प्रसारितं[।]सचेत् संमि(मिं)जितप्रसारितं स्वलक्षणतः प्रजानाति संमि(मिं)जितव्यं । प्रसारितव्यञ्च । सम्यगेव प्रजानाति । यादि च संमि(मिं)जि(जयि)तव्यं, यदा प्रसा[6]रि(रयि)तव्यं तदपि सम्यगेव प्रजानाति । यथा च संमि(मिं)जि(जयि)तव्यं, यथा

प्रसारि(रयि)तव्यं, तदपि सम्यगेव प्रजानाति। इदमस्योच्यते संप्रजन्यं[1]।

स तेन संप्रजन्येन समन्वागतः। स चेत् संमिज-(सम्मिञ्ज)यमानः(यन्), प्रसारयमाणः(यन्)। जानाति। संमि(मिं)जयामि। प्रसारयामीति। यच्च संमि(मिं)जयितव्यं प्रसारयितव्यं संमि(मिं)जयति, प्रसारयति। [7] यदा च संमि(मिं)जयितव्यं, प्रसारयितव्यं तदा संमि(मिं)जयति, प्रसारयति। इयमस्योच्यते। संप्रजानद्विहारिता यदुत संमिजि-(सम्मिञ्जि)त प्रसारिते॥

तत्र कतमत् संघाटीधारणं। कतमच्चीवरधारणं, कतमत् पात्रधारणं, कतमा(मत्)सां(सं)घाटी-चीवरपात्रधारणं(णे)। संप्रजानद्विहारिता।

यत्तावदस्य ज्येष्ठं चीवरं षष्ठिखन्नम्वा(खण्डं वा)
6B—6// नव//[1]तिखन्नम्वा(खण्डं वा), द्विगुणसीवितम्वा, एकगुणसीवितम्वा इयमुच्यते सांघाटी (संघाटी) [।] तस्य प्रावरणं परिभोगः। सम्यगेव परिहरणं धारण-मित्युच्यते।

यत्पुनरस्य मध्यम्वा, कनीयो वा, आधिष्ठानिकम्वा ची[वरं[2]] अतिरेकचीवरं वा। आधिष्ठानिकं वा। चीवरं[2]अतिरेकचीवरम्वा विकल्पनार्हं विकल्पयति

1. cp., Ś S, p. 68.
2. Letters damaged by pin-hold.

तच्चीवरमित्युच्यते। तस्य प्रावरणं परिभोगः। सम्यगेव परिहरणं धारणमित्युच्यते। यत्पुनरस्याधिष्ठानानि कमा(र्मा)यसम्वा, मृन्मयम्वा भैक्षभोजनमिदमुच्यते। पात्रं, तस्य परिभोगः। सम्यगेव परिहरणं धारणमित्युच्यते।

स चेत्पुनरयं तां सां(सं)घाटीं, चीवरं, [3]पात्रं, धारणम्वा स्वलक्षणतः सम्यगेव प्रजानाति। यच्च सां(सं)घाटीचीवरपात्रधारणं। कल्पिकं, अकल्पिकं वा, तदपि सम्यगेव प्रजानति। यदा च सां(सं)घाटीचीवरपात्रधारणं धारयितव्यं(कर्त्तव्यं)। तदा सम्यगेव प्रजानाति। यथा च धारयितव्यं, तदपि सम्यगेव प्रजानाति। इदमस्योच्यते। संप्रजन्यं। स तेन संप्रजन्येन स[4]मन्वागतः। सचेत् सां(सं)घाटी(टीं), चीवरं, पात्रं धारयमाणो जानाति धारयामीति। यच्च धारयितव्यं तद्धारयति। यदा च धारयितव्यं तदा धारयति। यथा च धारयितव्यं तथा धारयतीयमस्योच्यते संप्रजानद्विहारिता। यदुत सां(सं)घाटीचीवरपात्रधारणे।

तत्र कतमदशितं। कतमत्पीतं। कतमत् खादितं। कतम[5]त्स्वादितं। कतमा अशितपीतखादितास्वादिते [षु]संप्रजानद्विहारिता। यः कश्चित् पिण्डपातपरिभोगः सर्व्वं तदशितमित्युच्यते। तस्य पुनर्द्विधा भेदः खादितं; स्वादितं च। तत्र खादितं। मन्था

वा, [अ]पूपा वा, ओदनकुल्माषम्वेति यद्वा पुनरन्यत-माभिसंस्कारिकमन्नं विकृतं भोज्यं प्राणसंधारणमिद-मुच्यते[6]खादितमशितमपीतं ।

**स्वादितं** कतमत् । तद्यथा क्षीरं, दधि, नवनीतं, सर्पिस्तैलं, मधु, शो(फा)णितं, मान्सं (मांसं), मन्स्या, वल्लूरा, लवणं, वनफलम्वा, भक्ष(क्ष्य)प्रकारं वा इदमुच्यते स्वादितमशितमपि(पी)तं ।

यत्पुनः पीयते खण्डरसं(सो)वा, शर्करारसम्वा (सो वा), कांचिकम्वा, दधिमण्डम्वा । शुक्तम्वा, तक्रम्वा, अन्ततः पानीयमपि [।] इदमुच्य[7]ते **पीतं** ।

स चेदशितपीतखादितास्वादितं स्वलक्षणतः सम्यगेव प्रजानाति । यच्चाशितव्यं, पातव्यं, खादि-तव्यं, स्वादि(दयि)तव्यं तदपि सम्यगेव प्रजानाति । यदा चाशितव्यं, पातव्यं खादितव्यं, स्वादि(दयि)तव्यं तदेव(तदपि) सम्यगेव प्रजानाति । यथा चाशितव्यं, पातव्यं, खादितव्यं । स्वादि(दयि)तव्यं । तदपि
6A—7// सम्यगेव//[1]प्रजानाति । इदमस्योच्यते संप्रजन्यं[।[1]]

स तेन संप्रजन्येन समन्वागतः अशमानः(अशन्), पिबमानः (पिबन्), खादमानः (खादन्), स्वादयमानः (स्वादयन्) स चेज्जानाति । अश्नामि, पिबामि, खादामीति । यच्चाशितव्यं, पातव्यं, खादितव्यं,

---

1. *Vide* Ś S, p. 68.

तदश्नाति यावत्स्वादयति । यदा चाशितव्यं [याव[1]]-त्स्वादयितव्यं । तदा अश्नाति, स्वादयति । यथा चाशितव्यं[2]यावत्स्वादयितव्यं तथा [अ]श्नाति । यावत्स्वादयितव्यमि (यावत्स्वादयती) यमस्योच्यते यावत् संप्रजानद्विहारिता । यदुताशितपीतखादितास्वादिते-[षु[2]] [।।[2]]

**तत्र कतमद्गतं, कतमत् स्थितं, कतमन्निषण्णं । कतमच्छयितं । कतमज्जागृतं । कतमद्भाषितं, कतमत्तू (मस्तू) ष्णीम्भावः । कतमा निद्राक्लमप्रति-विनोदना । कतमा गते, स्थिते, निषण्णे शयिते, जागृते, [3]भाषिते, तूष्णीम्भावे, निद्राक्लमविनोदना [यां[3]] संप्रजानद्विहारिता ।** यथापीहैकत्यश्चंक्रमे चंक्र-म्यते (मते), सहधर्मिकाणां चोपसंक्रामति । अध्वानं वा प्रतिपद्यते । इदमस्योच्यते **गतं** । यथापीहैकत्य-श्चंक्रमे वा तिष्ठति, सहधार्मिकाणां वा पुरतस्तिष्ठति । आचार्याणामुपाध्यायानां **गुरूणां** गुरुस्थानीयानां [4]इदमुच्यते **स्थितं** । यथापीहैकत्यो मंचे, वा, पीठे वा, तृणसंस्तरणे वा, सन्निविशति वा, सन्निषीदति वा । पर्यङ्कमाभुज्य, ऋजुं कायं प्रणिधाय, प्रतिमुखां-(खीं) स्मृतिमुपस्थाप्येदमुच्यते । **निषण्णं** । यथापी-

1. Letters damaged by pin-hold.
2. Omitted in the MS., supplied by us.
3. A separate hand adds this.

हैकत्यो बहिर्विहारस्य पादौ प्रक्षाल्य, विहारं प्रविश्य, दक्षि[5]णेन पार्श्वेन सिंहशय्यां कल्पयति। पादे पादमाधाय, **मञ्चे** वा, पीठे वा, तृणसंस्तरके(णे) वा, अरण्ये, वृक्षमूले वा, शून्यागारे वा [।] इदमुच्यते **शयितं।**

यथापीहैकत्यो दिवा चंक्रमनिषद्याभ्यामावरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयत्येवं रात्र्याः प्रथमे यामे, पश्चिमे यामे [।] इदमुच्यते **जागृतं।**

यथा[6]पीहैकत्यस्तथा जागरिकानुयुक्तः अनुद्दिष्टांश्च धर्मानुद्दिशति। पर्यवाप्नोति। तद्यथा सूत्रं, गेयं, व्याकरणमिति। विस्तरेण पूर्ववत्। उद्दिष्टेषु च धर्मेषु वचसा परिचयं करोति। यदुत
6B—7// विस्तरेण स्वाध्यायक्रियया, परेषां वा //[1] विस्तरेण संप्रकाशयति। कालेन कालमालपति। प्रतिसंमोदय[ति वि¹]ज्ञैः सब्रह्मचारिभिस्सार्द्धं, तदन्यैर्व्वा गृहस्थैर्यविदेवोद्योजनं परिष्कारार्थमिदमुच्यते। **भाषितं।**

यथापीहैकत्यो यथाश्रुतानां, यथा पर्य[वा²]-तप्तानान्धर्माणाम्मनसा परिजितानां, एकाकी रहोगतो [अ]र्थं चि[न्तय ¹]ति, तुलयत्युपपरीक्षते। प्रतिसंलीनो वा[2]पुनः भवत्यध्यात्ममेव चित्तं स्थापयति। दमयति[।]शमयति। व्युपशमयति। एकोतीकरोति।

---

1. Letters damaged by pin-hold.
2. A separate hand adds this.

समाधत्ते[।]विपश्यनायाम्वा योगं करोत्ययमुच्यते **तूष्णीम्भावः ।**

यथापीहैकत्यः ग्रीष्मसमये प्रत्युपस्थिते, उत्तप्त-ग्रीष्मपरिदाहे काले वर्तमाने, उष्णन वा बाध्यते । श्रान्तो वा भवति । क्लान्तस्योत्पद्यते । अकाले निद्राक्ल[3]मः स्वपितुकामतः (ता) । अयमुच्यते **निद्राक्लमः ।**

स चेत् पुनरयं गतं यावन्निद्राक्लमविनोदनं । तत्स्वलक्षणतः सम्यगेव प्रजानाति । यत्र च गन्तव्यं यावन्निद्राक्लमः प्रतिविनोदयितव्यः । तदपि सम्यगेव प्रजानाति । यदा च गन्तव्यं । यावद्यथा निद्राक्लमः । प्रतिविनोदयितव्यः । तदपि सम्यगेव प्रजानाति । [4]यथा च गन्तव्यं भवति । यत्र (यथा) च यावन्निद्राक्लमः । प्रतिविनोदयितव्यः तदपि सम्यगेव प्रजानाति । इदमस्योच्यते संप्रजन्यं [।]

स तेन संप्रजन्येन समन्वागतः । गच्छन् यावन्निद्राक्लमः(मं) प्रतिविनोदयन् स चेज्जानाति । (गच्छामि) गच्छामि यावत् (न्) निद्राक्लमं प्रति-विनोदयामि । यत्र च गन्तव्यं भवति । यत्र च [5]यावन्निद्राक्लमः प्रतिविनोदयितव्यो भवति । तदा गच्छति । तदा यावन्निद्राक्लमं प्रतिविनोदयति । यथा च गन्तव्यं भवति । यथा यावन्निद्राक्लमः । प्रतिविनोदयितव्यो भवति । तथा गच्छति । तथा

यावत् । निद्राक्लमं प्रतिविनोदयतीयमस्यो-च्यते (।) [ [1] ][।]

**संप्रजानद्विहारिताया**[:] कतमा **आनु**[6]**पूर्व्वी**, कतमा **च स्तुतिभावना**। यथापीहैकत्यो यं यमेव ग्रामं वा निगमम्वोप[नि[2]]श्रित्य विहरति । तस्यैवं भवति । मया खल्वयं ग्रामो वा, निगमो वा पिण्डायोप[सं[1]]क्रमितव्य: । पिण्डाय चरित्वा, पुनरेव विहारं[प्रति[3]]निष्क्रमितव्यं [।]

6A—8// सन्ति(।) पुन//[1]रत्र कुलानि ग्रामे वा, नगरे वा, यानि मया नोपसंक्रमितव्यानि । तानि पुन: कतमानि । तद्यथा । घोषं(ष:), पानागारं, वेश्यं, राजकुलं, चण्डालकठिनमिति । यानि वा पुन: कुलान्येकान्तेन प्रतिहतान्यप्रत्युदावर्त्तानि[।]सन्ति च पुन: कुलानि यानि मयोपसंक्रमितव्यानि । तद्यथा क्षत्रियमहा[2]सालकुलानि वा, ब्राह्मणमहासालकुलानि वा, नैगमकुलानि वा, जानपदकुलानि वा, धनिकुलानि वा, श्रेष्ठिकुलानि वा, सार्थवाहकुलानि वा मयोप-संक्रमितव्यानि. तानि नातिसायमुपसंक्रमितव्यानि । तानिविकालं, न च कार्यव्यग्रेषु दायकदानपतिषु, न

---

1. It seems that the portion within the square brackets is missing in the MS. It might be निद्राक्लमप्रतिविनोदना.
2. Letters damaged by pin-hold.
3. Omitted in the MS., supplied by us.

क्रीडारतिमंडनयोग[3]मनुयुक्तेषु, न ग्राम्यधर्माय प्रवृत्तेषु, न कुपितेषु [।] तथा चोपसंक्रमितव्यानि यथोप संक्रमन्नहन्न भ्रान्तेन हस्तिना सार्धं समागच्छेयं, न भ्रान्तेन रथेन, पुनः चण्डेनाश्वेन, न चण्डया गवा, न चण्डेन कुक्कुरेण, न गहनं, न कण्टकावाटं वा मर्दयं। न श्वभ्रे, पल्वले, प्रपाते प्रपतेयं। न स्यन्दिका-[4]यां, न गूथकठिल्लचन्द्रोपमश्च कुलान्युपसंक्रमेयं। ह्रीमानप्रगल्भः व्यवकृष्य कायं, व्यवकृष्य चित्तं, न लाभकामो न सत्कारकामः। यथा स्वेन लाभेन सुचित्तः, सुमनास्तथा परस्याविप्रलाभेन सुचित्तः, सुमनाः, अनन्योत्कर्षी, अपरपंसकः। अनुकम्पाचित्तो, द[5]याचित्तः। एवं च पुनरुपसंक्रमितव्यानि। तत्कुत एतल्लभ्यं प्रव्रजितेन परकुलेषु यद्ददतु मे परे, मा वा ददतु, यावत्त्वरितं मा धन्धमिति विस्तरेण [।] उपसंक्रम्य च मे[मया]प्रतिग्रहे मात्रा करणीया। न च लाभहेतोः कुहना करणीया। लपना, नैमित्तिकता, नैष्पेषिकता, लाभेन लाभनिश्चिकीर्षता कर[6]णीया(:)। स च लाभः अरक्तेन परिभोक्तव्य[:], असक्तेनागृद्धेनाग्रथितेनामूर्छितेन, अनध्यवसितेनाध्यव-सायमापन्नेन[।]यानि च रूपाणि तत्रोपसंक्रमता उप-संक्रान्तेन वा द्रष्टव्यानि भवन्ति। तान्येकत्यानि द्रष्टव्यानि। तत्र यानि न द्रष्टव्यानि तेषु उत्क्षिप्त-
6B—8// चक्षुषा भवितव्यं। सुसंहृतेन्द्रियेण, यानि पुन//[1]-

द्रष्टव्यानि तेषु सूपस्थितां स्मृतिमुपस्थाप्य [।]

कथं रूपाणि [पुना[1]] रूपाणि नावलोकयितव्यानि। तद्यथा न नर्त्तको, न हासको, न लासक इति [।] यद्वा पुनरन्यच्चावरणजातं नृत्ते वा, गीते वा, वादिते वा प्रवृत्तं [।] तथा मातृग्रामो विशेषेण पुनः शिशुरुदारवर्ण्णो र[ञ्जनी[1]]य इति यानि च पुना रूपाणि दृष्टानि ब्रह्मच[2]र्योपघातिभिः ब्रह्मचर्यान्तरायाय, पापकानां चाकुशलानाम्वितर्काणां समुदाचाराय सम्वर्त्तेरन्। तद्रूपाणि रूपाणि नावलोकयितव्यानि, न व्यवलोकयितव्यानि [।]

कथं रूपाणि पुना रूपाणि द्रष्टव्यानि। तद्यथा जीर्ण्णम्वा, वृद्धम्वा, महल्लकम्वा, खुरु खुरु प्रश्वासकायं, पुरतः प्राभो(भा)रकायं द[3]ण्डभवष्टभ्य, प्रवेपमानकायेन आबाधिकम्वा, दुःखितम्बाढग्लानं, आध्मातपादमाध्मातहस्तमाध्मातोदरमाध्मातमुखं, पाण्डुकविवर्ण्णं, दद्रूलम्वा, कच्छू(ण्डू)लम्वा, कुष्ठितम्वा. दुःखितहतगात्रं। पक्वगात्रमुपहतेन्द्रियं। मृतम्वा कालगतं, एकाहमृतम्वा, द्वाहमृतम्वा, सप्ताहमृतम्वा। [4]काकैः, कुररैः खाद्यमानं, गृद्धैः, श्वभिः, श्रृगालैर्व्विविधैर्व्वा तिर्यग्जातिगतैः प्राणिभिर्भक्ष्यमाणर्म्ह्रियमाणम्वा, मंचे आरोप्योपरि वितानेन प्रसारितेन. पुन(र)ः पृष्ठतश्च महाजनकायेन रोदमानेन, क्रन्दमानेन,

---

1. Letters damaged by pin-hold.

तस्मा(स्या)वकीर्णप्रमुक्तकेशेन, तथा शोकजातं, दुःख-जातं । [5]परिदेवजातं । दौर्मनस्यजातं, उपायास-जातं, यन्मया द्रष्टव्यमित्येवं रूपाणि चान्यानि चैवंभागीयानि रूपाणि द्रष्टव्यानि । यानि ब्रह्मचर्या-नुग्रहाय, कुशलानां च वितर्काणां समुदाचाराय (ं) सम्वर्त्तन्ते । न कायप्रचालकमुपसंक्रामितव्यं, न बाहुप्रचालकं, न शीर्षप्रचालकं, नोच्च[6]ग्मिकया न हस्तावलग्विकया, न सोड्ढक्किकया, नाननुज्ञातेन । ना (आ)सने निषत्तव्यं । ना[अ]प्रत्यवेक्ष्यासनं, न सर्व्वकायं समवधाय, न पादे पादमाधाय, न सक्थि सक्थिना, नाभिसंक्षिप्य पादौ, नाभिविक्षिप्य पादौ, नोद्गुण्ठिकया कृ(वृ)तेन, नोच्च(द्ध?)स्तिकया, न
6A—9// वितस्ति//[1]कया, न पर्यस्तिकया, परिमण्डलं चीवरं प्रावृत्य, नात्युत्कृष्टं, नात्य[पकृ[1]]ष्टं, न हुम्धी(स्ति)-शुण्डकं, न तालवृन्तकं, न नागफलकं । न कुल्माष-पिण्डिकं प्रावरितव्यं, नानागते खादनीये पात्रमुप-नामयितव्यं, न च खादनीयभोजनीयस्योपरि क[ा]र-[यितव्यं[1]] । ना[ऽ]नास्तीर्ण्णे पृथिवीप्रदेशे प्रपाते प्राभो(भा?)रे पात्रं स्थाप[2]यितव्यं, सावदानं(:) पिण्डपातं(तः) परिभोक्तव्यं(व्यः) । नो(न ओ)दनेन स्नापिकं प्रतिछा(च्छा)दयितव्यम् । न सूपिकेनोदेन-मतित्तिनिकायोगमनुयुक्तेन (सूपिकेन, न ओदनेन, न

1. Letters damaged by pin-hold.

तित्तिनिकायोगमनुयुक्तेन) परिभोक्तव्यं, नातिस्थूलं, नातिपरीत्तं परिमण्डलया[ऽऽ]लोपमालोपयितव्यं (आलोप आलोपयितव्यः) । न हस्तावलेहकं(कः) न पात्रावलेहकं(कः) । न हस्तसंधूनकं(कः), न पात्रसंधूनकं(कः) । न कबडच्छेद[3]कं(कः) पिण्डपातं(तः) परिभोक्तव्यं(व्यः) ।। विहारगतेनापि मे (मया) तेभ्यः कुलेभ्यः प्रत्यागतेन, (प्रत्यागतेन[1]) प्रतिनिष्क्रान्तेन, दिवा वा, रात्रौ वा, प्रातिपुद्गलिके चंक्रमे चंक्रमितव्यम् । न परक्ष्ये(परोक्षे) । अविश्वास्य, अप्रवारितेन, अनुद्दिष्टेन, श्रान्तकायेन, क्लान्तकायेन, नौद्धत्याभिनिगृहीते चित्ते कुशलपक्षप्र[4]युक्तेनामनसिकारानुगतेनान्तर्गतैरिन्द्रियैरबहिर्गतेन मानसेन, नातिद्रुतं, नातिचपलं, नैकान्तेन गमनप्रत्यागमनप्रतिसंयुक्तेन, कालेन कालं गच्छता, कालेन कालं तिष्ठता, तथा स्वे विहारे । स्वे परिगणे, स्वक्यां कुटिकायां, उद्देशिकायां, प्रातिपौद्गलिकायां, न परपक्ष्यायामविश्वास्या[5]यामप्रवारितायां, तथा मंचे वा, पीठे वा, तृणसंस्तरके(णे) वा, अरण्ये वा, वृक्षमूले वा, शून्यागारे वा, निषत्तव्यं । पय(र्य)-ङ्कमाभुज्य, ऋजुं कायं प्रणिधाय, प्रतिमुखां(खीं)स्मृतिमुपस्थाप्य, रात्र्या मध्समे यामे स्वपितव्यम् । दिवापूर्वकञ्च(श्च) यामं(मः)कुशलपक्षेणातिनामयितव्यं(व्यः) । एवं च पुनःस्वपि[6]तव्यं[।]

1. A repetition, may be deleted.

आलोकसंज्ञिना स्मृतेन संप्रजा[ना[1]]नेन, उत्थान-संज्ञामेव मनसि कुर्वता, रात्र्या[:]पश्चिमे यामे लघु-लघ्वेव प्रतिविबुध्य, भाष्ये वा, स्वाध्यायक्रियायां वा योगः करणीयः । प्रहाणे वा, प्रतिसंलयने, धर्मचिन्तायां, लोकायताश्च मंत्रा विवर्जयितव्याः (।) चित्राक्षर[-।]-श्चित्रपदव्यंजना, अनर्थोपसं[7]हिता ये नाभिज्ञायै, न सम्बोधाय, न निर्वाणाय सम्वर्तन्ते । ये वा पुनर्धर्मा-स्तथागतभाषिता, गंभीरा, गंभीराभासा[:], शून्यता-प्रतिसंयुक्ता, इदंप्रत्यया (यता) प्रतीत्यसमुत्पादानुलोमास्ते सत्कृत्योद्गृ (द्ग्र) हीतव्याः । दृढञ्च, स्थिरञ्च, सूद्गृ-हीताश्च, न नाशयितव्याः । प्रतिपत्त्या[:] सम्पादनार्थं,
6B—9// न लाभसत्कार //[1] हेतोः[।]ते च पुनर्धर्मा वचसा सुपरिजिताः कर्तव्याः । न च संगणिकया अतिनाम-यितव्यं, न कर्मारामतया, न भाष्यारामतया, कालेन च कालमुपस्थितया स्मृत्या विज्ञास्य (स्स) ब्रह्मचारिणः, आलपितव्याः, संलपितव्याः, प्रतिसंबोधयितव्याः, परि-पृच्छन[जाती[2]]येन च भवितव्यं, किंकुशलगवेषिणा ।। अनुपलंभ[2]चित्तेन, मितवादिना, युक्तभाणिना, प्रशान्तभाणिना च ।। परेषां धा (ध) र्म्या कथां कथयित्वा त्वकामेन तूष्णींभावेन च ये पापका अकुशला वितर्का नातितर्कयितव्याः । न चायोनिशो-

1. MS. omits this, added by us.
2. Letters damaged by pin-hold.

धर्मचिन्तायुक्तेन.........[1] ।

एवं[2] रूपा अनेन[3] बहवो धर्मा उद्गृहीता

1. The MS. breaks off here.
2. Sanskrit text of the portion on कल्याणमित्रता is retained here. The beginning of the portion is missing in Sanskrit but preserved in the Tibetan translation. The beginning of the discussion might be reconstructed after the Tibetan version preserved in the Derge Edition of the Tibetan Text, folios 52 a.b. to 53 b-6; for this information, see Wayman Analysis of the Śrāvakabhūmi MS., p. 74. The Sanskrit text might have been : कल्याणमित्रता कतमा । आह । अष्टाभिर्धर्मैः समन्वागतं कल्याणमित्रं वेदितव्यम् । कतमैरष्टाभिस्तद्यथा । शीलवान् भवति । बहुश्रुतो भवति । अधिगन्ता भवति । अनुकम्पको भवति । अपरिखिन्नमानसो भवति । क्षमावान् भवति । विशारदो भवति । वाक्करणेनोपेतो भवति । After this follows the explanation of कथं शीलवान् भवति and कथं बहुश्रुतो भवति. It is at the end of the explanation of the second aspect that the Sanskrit text preserved in the MS. begins, for detailed information, see Appendix I; *vide* also Tibetan Tripiṭaka, ed. by D. T. Suzuki, vol. 110 (1957, Tokyo-Kyoto), p. 61, leaf 1, line 4 sq.
3. cf. A. N., III.409 : कतमा च, भिक्खवे, कल्याणमित्तता ? इध, भिक्खवे, कुलपुत्तो यस्मिं गामे वा निगमे वा पटिवसति, तत्थ ये ते होन्ति गहपती वा गहपतिपुत्ता वा दहरा वुद्धा वा वुद्धसीलिनो सद्धासम्पन्ना सीलसम्पन्ना चागसम्पन्ना पञ्ञासम्पन्ना, तेहि सद्धिं सन्तिट्ठति सल्लपति साकच्छं समापज्जति, यथारूपानं सद्धासम्पन्नानं सद्धासम्पदं अनुसिक्खति····यथारूपानं सीलसम्पन्नानं सीलसम्पदं अनुसिक्खति····यथारूपानं चागसम्पन्नानं चागसम्पदं अनुसिक्खति····यथारूपानं पञ्ञासम्पन्नानं पञ्ञासम्पदं अनुसिक्खति, तेहि सद्धिं सन्तिट्ठति सल्लपति साकच्छं समापज्जति । अयं वुच्चति, भिक्खवे, कल्याणमित्तता ।; cf. also, ibid, pp. 375-6; see also, कल्याणमित्तसुत्तं in the S. N., I. 86 f.; cf. also, Dh. S., p. 287 : तत्थ कतमा कल्याणमित्तता ? ये ते

*(contd. on p. 128)*

भवन्ति। धृता, वचसा परिजिता, मनसा चान्वीक्षिता[:]। दृष्ट्या सुप्र[3]तिविष्टाः(विद्धाः)। **एवं बहुश्रुतो भवति।**

---

*(contd. from p. 127)*
पुग्गला सद्धा सीलवन्तो बहुस्सुता चागवन्तो पञ्ञावन्तो, या तेसं सेवना निसेवना संसेवना भजना सम्भजना भत्ति सम्पत्ति तं सम्पवङ्कता—अयं वुच्चति कल्याणमित्तता।; cf. A. N., III, 177-8 :

पियो गरु भावनीयो, वत्ता च वचनक्खमो।
गम्भीरं च कथं कत्ता, नो चट्ठाने नियोजको॥
यम्हि एतानि ठानानि संविज्जन्तीध पुग्गले।
सो मित्तो मित्तकामेन, अत्थकामानुकम्पतो।
अपि नासियमानेन, भजितब्बो तथाविधो॥;

cp. also, A. N. IV.208 : कल्याणमित्तता सीलानं आहारो; see also, Vsm. with Dīpikā III.61-5; AS, p. 44 (II.54), p. 279 (V. 17) योवे कतञ्ञू कतवेदिधीरो। कल्याणमित्तो दळ्हभत्ति च होति। दुक्खितस्स सक्कच्चं करोति किच्चं। तथाविधं सप्पुरिसं वदन्ती ति॥; Asaṅga enumerates the light aspects of कल्याणमित्रता in the Bodhi also : तत्राष्टाभिरंगैः समन्वागतं बोधिसत्त्वस्य कल्याणमित्रं वेदितव्यम्। वृत्तस्थो भवति बोधिसत्वसंवरशीलेषु व्यवस्थितोऽखण्डच्छिद्रकारी। बहुश्रुतो भवति नव्युत्पन्नबुद्धिः। अधिगमयुक्तश्च भवति लाभी भावनामयस्यान्यतमान्यतमस्य कुशलस्य लाभी शमथविपश्यनायाः। अनुकम्पकश्च भवति कारुणिकः सोऽभ्युपेक्ष्य स्वं दृष्टधर्मसेवाविहारं परेषामर्थाय प्रयुज्यते। विशारदो भवति न परेषामस्य धर्मं देशयतः स्मृतिः प्रतिभानं वा शारद्यभयात् प्रमुष्यते। क्षमश्च भवति परतोऽवमाननावहसनावस्पन्दनदुरुक्त-दुरागतादीनामनिष्टानां वचस्पथानां विविधानाञ्च सत्त्वविप्रतिपत्तीनाम्। अपरिखिन्नमानसश्च भवति बलवान् प्रतिसङ्ख्यानबहुलः अकिलासी चतसृणां परिषदां धर्मदेशनायै। कल्याणवाक्यश्च भवति वाक्करणेनोपेतो धर्मताप्रणष्टस्पष्टवाक्। Bodhi, pp. 163-4; see also कल्याणमित्तपरियेसना, The Path of Freedom, ch. V., pp. 48-53; Bapat, Comparative Study, pp. 32-3.

**कथमधिगन्ता भवति ।** लाभी भवत्यनित्यसंज्ञायाः, अनित्ये दुःखसंज्ञाया, दुःखेऽनात्मसंज्ञायाः, आहारे प्रतिकूलसंज्ञाया, विलोहितकसंज्ञाया, विक्षिप्तकसंज्ञाया, अस्थिसंज्ञायाः, शून्यताप्रत्यवेक्षणसंज्ञाया[।] लाभी भवति (।) प्रथमस्य ध्यानस्य, द्वितीयस्य, तृतीयस्य, चतुर्थस्याकाशानन्त्या[4]यतनविज्ञानानन्त्यायतना[ऽऽ]किंचन्यायतननैवसंज्ञानासंज्ञायतनस्य, मैत्र्याः, करुणाया, उपेक्षाया, मुदितायाः, स्रोत आपत्तिफलस्य, सकृदागामिफलस्यानागामिफलस्य च, द्विविषयस्य, पूर्व्वेनिवासस्य, दिव्यस्य श्रोत्रस्य, च्युत्युपपादस्य, चेतःपर्यायिस्यार्हत्त्वस्याष्टविमोक्षध्यायित्वस्य[।]शक्तो भवति । प्रतिब[5]लश्च परेषां त्रिभिः प्रातिहार्यैरववदितुं । ऋद्धिप्रातिहार्येण, आदेशनाप्रतिहार्येण, अनुशासनाप्रातिहार्येण[।] **एवमधिगन्ता भवति ।**

**कथमनुकम्पको भवति ।** परेषामन्तिके कारुणिको भवति । दयापन्नः, अर्थकामो भवति । हितकामः, सुखकामः, स्पर्शकामः, योगक्षेमकामः [।] **एवमनुकम्पको भवति ॥**

**क[6]थमप्रतिखिन्नमानसो भवति ।** व(र)तिसंदर्शको भवति । समादापकः, समुत्तेजकः, संप्रहर्षकः, आज्ञासी चतसृणाम्पर्षदां, धर्मदेशनायै दक्षो भवत्यनलस, उत्थानसम्पन्नः । आरब्धवीर्य, आरब्धवीर्य

जातीयः [।] **एवमपरिखिन्नमानसो भवति ।**

**कथं क्षमावान् भवति ।** आक्रुष्टो न प्रत्याक्रोशति । रोषितो न प्रति[7]रोषयति । वादितो न प्रतिवादयति । मण्डितो न प्रतिमण्डयति । [अनेन दानप्रत्यर्थादान(प्रत्यादान)समो भवति[1]] प्रगाढेष्वपि बन्धनेषु, रोधनेषु, ताडनेषु, तर्जनेषु, छे(च्छे)दनेषु, आत्मापराधी भवति । कर्मविपाकञ्च प्रतिसरति । न परेषामन्तिके कुप्यति । नाप्यनुशयं वहति । इति विमानितो[अ]पि, विवर्ण्णितो[अ]पि, विजुगुप्सितो
7A—1// [अ]पि, न विकृ//[1]मिमापद्यते । नान्यत्रार्थायैव चेतयते क्षमश्च भवति । शीत[स्यो[2]]ष्णस्य, जिघत्सायाः, पिपासायाः, दंशमशकवातातपसरीसृपसम्पन्नानां, परतो दुरुक्तानां, दुरागतानां(नां), पतनपक्षाणां, शारीरिकाणां वेदनानां, दुःखानां, तीव्राणां, खराणां, कटुकानां, अ[मन[2]]आपानां, प्राणहारिणीनां क्षमो भवत्यधिवासनजातीयः । एवं[2]क्षमावान् भवत्य[सा[3]]विति ॥

**कथं विशारदो भवति ।** असंलीनचित्तः [।] पर्षदि धर्मं देशयति । अगद्गदस्वरः, असंप्रमुषितस्मृतिप्रतिभानः । न चास्य शारद्यहेतोः, शारद्य-

---

1. MS. dim and illegible.
2. Letters damaged by pin-hold.
3. A separate hand adds this, too dim and illegible.

निदानं भयम्वा आजपति, समाविशति, नापि कम्पाभ्यां स्वेदो मुच्यते, रोगक्लमेभ्यो वा[।] **एवं विशारदो भवति ।**

**कथं वाक्करणेनोपेतो भवति ।** पौर्या(र्यया)-वाचा[3]समन्वागतो भवति । वल्गून्यविस्प (वल्गुन्या, विस्प)ष्टया, विज्ञेयया, श्रवणीयया, अप्रतिकूलया, अनिश्रितया, (अ)पर्याप्तया [।] एवम्वाक्करणेनोपेतो भवति । कल्याणवादी ।

स एभिरष्टाभिः कारणैः समन्वागतश्चोदको भवति । स्मारकः, अववादकः, अनुशासको, धर्मदेशकः[1] [।।]

**कथं चोदको भवति ।** यदुताधिशीले च शीलविप[4]त्त्या, अध्याचारे आचारविपत्त्या, दृष्टेन, श्रुतेन, परिशंकया चोदयति । भूतेन, नाभूतेन, कालेन नाकालेनार्थोपसंहितेन नाना(न)र्थोपसंहितेन, श्लक्ष्णेन, न परुषेण, मित्रवत्तया, न द्वेषान्तरेण [।] एवं **चोदको भवति ।**

**कथं स्मारको भवति ।** आपत्तिम्वा स्मारयति । धर्मं चा(वा)र्थम्वा [।]

**कथमापत्तिं स्मारयति ।** यथापि तदापत्ति[5] मध्यापद्यमानः स्मरति । तमेनं स्मारयति । आयुष्मन्नमुष्मिन्देशे, अमुष्मिन् वस्तुनि, अमुष्मिन्

1. cf. Bodhi., pp. 164, 78, 79.

काले, एवं रूपं, चैवं कालमापन्न इत्येवमापत्तिं स्मारयति ।

**कथं धर्मं स्मारयति ।** यथापि तच्छ्रुतानुद्गृहीतान् धर्मानेकाकी स्मरति । स्मर्तुमिच्छति । तद्यथा सूत्रं, गेयं, व्याकरणमिति विस्तरेण पूर्व्ववन्न स्मरति । तमे[6]न (नं) स्मारयति । उत्स्मारणिकाम्वास्यानुप्रयच्छति । आपृच्छनपरिपृच्छनिकां वा, एवं धर्मान स्मारयति ।

**कथं धर्मं (अर्थं) स्मारयति ।** यथापि नथां (चार्थान्) विस्मारयति (विस्मरति) । तमेनं स्मारयति । पुनरपि प्रतिनवीकरोति । उत्तानी करोति । देशयति, संप्रकाशयति । यच्चापि कुशलमर्थोपसंहितं, ब्रह्मचर्योपसंहितं । चिरक (कृ) तं, चिरभाषितमप्यनुस्मा[7]रयिता भवति । एवं स्मारको भवति ।।

**कथमववादको भवति ।** प्राविवेक्ये प्रतिसंलयने, योगे, मनसिकार (रे), शमथविपश्यनायां कालेन कालमानुलोमिकं अववादं प्रवर्त्तयति । कालेन च कालं
7B—1// तत्प्रतिसंयु//[1]क्तां कथां करोति । तद्यथा चेतोविनिवरणसांप्रेयगामिनीं शीलकथाम्वा, प्रज्ञाकथाम्वा, विमुक्तिकथाम्वा, अल्पेच्छकथाम्वा, विमुक्तिज्ञानदर्शनकथाम्वा, संतुष्टिकथाम्वा, प्रहाणकथां, विरागकथां, निरोधकथां, अपचयकथां, असंसर्गकथां, इदंप्रत्यय-

[ता प्र[1]]तीत्यसमुत्पादानुलोमान्(मां) कथां करोति । एवमववादको भव[2]ति ।

**कथमनुशासको भवति ।** धर्मेण, विनयेन, समनुशास्तुः शासने आचार्यो वा भवति । उपाध्यायो वा, सहधार्मिको वा, गुरुर्वा, गुरुस्थानीयो वा, अन्यतमान्यतमस्मिन्नधिकरणे अतिसृतं, व्यतिक्रान्तं विदित्वा । कालेन कालमवसादयति । दण्डकर्मम(र्मा)नुप्रयच्छति । प्रणामयति चैनं । पुनरपि च धर्मेण समये[3]प्रतिसंस्तरसामीचीसंज्ञप्ति प्रतिगृह्णाति । संरोहकश्च भवति । करणीये चाकरणीये भाव्या[2]चारानध्याचारान् अध्याचीर्णे (चरिते) अनध्याचीर्णे (चरिते) च शास्त्यनुशास्त्येवमनुशासको भवति ।

**कथं च धर्मदेशको भवति ।** कालेन कालं पूर्वकालकरणीयां कथां करोति । तद्यथा दानकथां, शीलकथां, स्वर्गकथां, कामेष्वादीनव[4]निःसरणं, व्यवदानपक्षान्धर्मान् विस्तरेण संप्रकाशयति । कालेन कालं चतुरार्यसत्यप्रतिसंयुक्तां कथां कथयति । दुःखं वा आरभ्य, समुदयम्वा, निरोधम्वा, फलम्वा, सपरिपाकाय(सत्त्वसंक्लेशाय ?)वा, सत्व(त्त्व)व्यवदानाय वा, सद्धर्मस्य वा चिरस्थितये, युक्तैः पदव्यंजनैः, सहितै-

1. Letters lost by pin-hold.
2. Letter indistinct.

रानुलोमिकैरानुच्छविकैरौप[1]यि[5]कै:, प्रतिरूपै:, प्रदक्षिणैर्निपकस्यांगसंभारैस्तां च पुन: कथां कालेन करोति । सत्कृत्यानुसन्धिमनुपतितं[1] । हर्षयन्, रोचयन्ननु(यन्नु)त्साहयन्ननवसादयंश्च युक्तां, सहितां, अव्यवकीर्ण्णां, यथाधार्मिकीं, यथापर्षन्मैत्रचित्तो, हितचित्त:, अनुकम्पाचित्त: । अनिश्रितो लाभसत्कार-श्लोकेन चात्मानमुत्कर्षयति । न परा[6]न्पंस(पंस)-यत्येवं धर्मदेशको भवति ।

यश्चैभिरष्टाभि(:[1]) (समन्वागतो[1]) रंगै: समन्वा-गतो भवति । एवं च कालेन कालं चोदको भवति, स्मारक: । अववादानुशासकस्तस्मात् कल्याणमित्र[म्]-इत्युच्यते[2] । अयं तावत् कल्याणमित्रताया विस्तरविभाग: [।]

समासार्थ: पुन: कतम: [।] स चेदयं मित्रसुहृदनु-
7A—2// कम्पक: आदित //[1] एव हितकामो भवति । सुख-कामश्च[।]तच्च पुनर्हितसुखं यथाभूतं प्रजानाति । अविपर्यस्तो भवत्यविपरीतदृष्टि:, प्रतिबलश्च भवत्यु-पायकुशल:[3] । यदुतास्यैव हितसुखस्य समुदागमायो-संहाराय दक्षश्च भवत्यनलस, उत्थानसम्पन्न, आरब्ध-वीर्यजातीय: । यदुत तमेव हितसुखोपसंहारमारभ्य[।]

1. May be deleted.
2. See Bodhi, pp. 163-5; cf., p. 109; Ś S, pp. 26, 23; GV, pp. 76, 99, 462-4; ASPP, pp. 243-4, cf., p. 197 sq.
3. On उपायकौशल्य, see, SRS, उपायकौशल्यपरिवर्तं; MSA.

[2] एभिश्चतुर्भिः कारणैः सर्व्वाकारपरिपूर्ण्णः(ं) । समासतः कल्याणमित्रो(त्रं) वेदितव्यः(व्यम्) । अयं च पुनः कल्याणमित्रतायाः समासार्थः ।। यश्च पूर्व्वो विस्तरविभागः, यश्चायं समासार्थ इयमुच्यते कल्याणमित्रता ।।

**सद्धर्मश्रवणचिन्तना कतमा । सद्धर्म उच्यते** बुद्धैश्च बुद्धश्रावकैश्च सद्भिः सम्य[3]ग्गतैः सत्पुरुषैराख्यातः । देशित उत्तानो विवृतः । संप्रकाशितः । स पुनः कतमः । तद्यथा सूत्रं, गेयं, व्याकरणमिति विस्तरेण पूर्व्ववत् । द्वादशांगवचोगतं[1] सद्धर्म इत्युच्यते [2]।

1. MS. seems to have omitted वैपुल्यं here.
2. In the Pali texts we come across the ninefold division of the Saddhaṁma, i.e., Sutta, Geyya, Veyyākaraṇa, gāthā, udāna, itivuttaka, jātaka, abbhutadhaṁma and vedalla, see Aṭṭhaśālinī I.66 (p. 22) : कथं नवङ्गवसेन नव-अङ्गानी ति सब्बमेव हि, दं 'सुत्तं गेय्यं वेय्याकरणं गाथा उदानं इतिवुत्तकं जातकं अब्भुतधम्मं वेदल्लं' ति नवङ्गप्पभेदं होति ।, but in Sanskrit texts twelve aṅgas have been enumerated, cp. Sārottamā (quoted in Aaa (p. 286) ad ASPP II. 5) :

सूत्रं गेयं व्याकरणं गाथोदानावदानकम् ।
इतिवृत्तकं निदानं वैपुल्यं च सजातकम् ।।
उपदेशाद्भुतौ धर्मौ द्वादशाङ्गमिदं वचः ।।

This list contains three more aṅgas, viz., avadāna, nidāna and upadeśa in addition to the nine enumerated in the older list; a similar list is found in the Asm.

*(contd. on p. 136)*

तत्र सूत्रं[1] कतमत् । यत्तत्र तत्र भगवता तांस्तान् (तानि तानि) विनेयाचरितानि चारभ्य स्कन्धप्रति-संयुक्ता वा कथा कृता, धातुप्रतिसंयुक्ता[4]वा कथा कृता, धातुसंगणसंयुक्ता[2] वा, आयतनप्रतिसंयुक्ता वा । प्रतीत्यसमुत्पादप्रतिसंयुक्ता वा, आहारसत्यस्थिति-[प्रति[3]] संयुक्ता वा, श्रावकप्रत्येकबुद्धतथागतप्रतिसंयुक्ता वा । स्मृत्युपस्थानसम्यक्प्रहाणधि (र्धि) पादेन्द्रियबल-बोध्यंगमार्गांगप्रतिसंयुक्ता । अशुभा, आनापानस्मृति-शिक्षा[ऽ]वेत्यप्रसादप्र[5]तिसंयुक्ता कथा कृता[।]सा च कथा संगीतिकारैः परिगृह्य शासनचिरस्थितये, यथा-योगमनुपूर्व्वेण रचिता, अनुपूर्व्वेण समायुक्ता । प्रति-रूपैर्नामकायपदव्यंजनकायैर्यदुत तेषां तेषामर्थानां सूच-

---

*(contd. from p. 135)*

of Ācārya Asaṅga, p. 78 : धर्मविनिश्चयः कतमः । आर्यशासनं द्वादशाङ्गधर्मः । कतमानि द्वादशाङ्गानि । सूत्रं गेयं व्याकरणं गाथा उदानं निदानम् अवदानम् इतिवृत्तकं जातकं वैपुल्यम् अद्भुतधर्मः उपदेशश्च ॥

1. cp. Aṭṭhaśālinī, p. 22 (I.66); Asaṅga remarks : सूत्रं कतमत् । यदभिप्रेतार्थं सूचनाकारेण गद्यभाषितम् । दशानुशंसान् संपश्यन् तथागतः सूचना-कारेण धर्मं देशयति । सुखं व्यवस्थापयति सुखं देशयति । श्रोतापि श्रुतमुद्गृह्णाति धर्मगौरवतया क्षिप्रं बोधिसंभारान् परिपूरयति आशुधर्मतां प्रतिविध्यति । बुद्धेऽवेत्य-प्रसादं लभते धर्मे संघे चावेत्य प्रसादं लभते । परामृष्टधर्मसुखविहारं स्पृशति । सांकथ्यविनिश्चयेन मतां चित्तमाराधयति । पण्डितः पण्डित इति संख्यां गच्छति । Asm., p. 78.
2. Wayman reads संगल; he remarks that this portion is an intrusion as Sino-Tibetan translations omit this, see AŚM, p. 75, para 3, note.
3. A separate hand adds this in a footnote.

नायं कुशलानामर्थोपसंहितानां बुद्धचर्योपसंहितानामिदमुच्यते सूत्रं [।]

**गेयं**[1] **कतमत्** । [6] यस्यान्ते पर्यवसाने गाथा अभिगीता, यच्च सूत्रं नेयार्थमिदमुच्यते[2] [गेयं[3]] ।

**व्याकरणं**[4] **कतमत्** । यस्मिछ्रावके (यस्मिञ्छ्रावके)-भ्यो [अ]भ्यतीतकालगतो (तौ) उपपत्तौ व्याक्रियते । यच्च सूत्रं नीतार्थमिदमुच्यते । व्याकरणं [।]

**गाथा कतमा** । या न गद्येन भाषिता । अपितु पादोपनिबन्धेन द्विपदा वा, त्रिपदा वा, चतुष्पदा वा, पंचपदा वा, षट्पदा वा[7]इयमुच्यते गाथा ।।

**उदाना कतमा** । यत्पुद्गलस्य नाम गोत्रमपरिकीर्तयित्वा (कीर्त्य), उद्दिश्य भाषितमायत्याम्वा सद्धर्म-

---

1. cp., ibid, loc. cit., सूत्राणां मध्ये वा अन्ते वा गाथया यद् गीयते । सूत्रेषु अनिरूपितोऽर्थो वा यद् व्याख्यायते । अतो गेयमित्युच्यते ।। cp. also AS, loc. cit., सब्बं पि सगाथकं सुत्तं गेय्यं ति वेदितब्बं ।
2. In the Mahāyāna Sūtras, teachings of Buddha have been classified under two heads : नेयार्थ or phenomenal and नीतार्थ or absolute, cp. SRS, VII.5 :

   नीतार्थसूत्रान्तविशेष जानति, यथोपदिष्टा सुगतेन शून्यता ।
   यस्मिन् पुनः पुद्गल सत्त्व पूरुषो, नेयार्थतां जानति सर्वधर्मान् ।।
3. A separate hand adds this in a footnote.
4. cp. तत्स्थानेषु समतिक्रान्तानामतीतानामार्यश्रावकाणां प्राप्त्युत्पत्तिप्रभेदव्याकरणं । अपि च सूत्रेषु निरूपितार्थस्य स्फुटीकरणम् । विवृत्याभिसंन्धिव्याकरणात् ।। Asm. loc. cit.; Buddhaghosa remarks : अभिधम्मपिटकं निग्गाथकसुत्तं, यञ्च अञ्ञं अट्ठहि अङ्गेहि असङ्गहितं बुद्धवचनं, तं वेय्याकरणं ति वेदितब्बं (ibid, I. 66).

स्थितये, शासन स्थितये च । इयमुच्यते उदाना[1] ॥

**निदानं कतमत्** । यत्पुद्गलस्य नामगोत्रम्परि-
7B—2// कीर्तयित्वा(कीर्त्य)उद्दिश्य भाषितम्[2] । //[1] यच्च विनयप्रतिसंयुक्तं सोत्पत्तिकं सनिदानं प्रातिमोक्षसूत्रमिदमुच्यते [निदानं[3]] [।]

**अवदानं कतमत्** । यत्सदृष्टान्तकमुदाहृतं । येन दृष्टान्तेन यस्य प्रकृतस्यार्थस्य व्यवदानं भवतीदमुच्यते । अवदानं ॥

**वृत्तं[4] कतमत्** । यत्किंचित्पूर्व्वयोगप्रतिसंयुक्तमिदमुच्यते वृत्तकं ॥

**जातकं[5]** [2]**कतमत्** । यदतीतमध्वानमुपादाय तत्र तत्र भगवतः च्युत्युपपादेषु बोधिसत्त्वचर्या दुष्करचर्या । आख्याता [।] इदमुच्यते जातकं ॥

**वैपुल्यं कतमत्** । यत्र बोधिसत्त्वानां मार्गो देश्यते । अनुत्तरायै सम्यक् संबोधये । दशबलानावरणज्ञानसमुदागमाय [।] इदमुच्यते वैपुल्यं[6] ॥

---

1. cp. Asm., p. 78 : सूत्रेषु कदाचित्तथागतेन आत्तमनस्केन यदुदाहृतम् ।
2. ibid, loc. cit., पृष्टेन यद् भाषितम् । सोत्पत्तिकं शिक्षाप्रज्ञप्तिकं वा । अतोऽपि निदानम् ।
3. Added by a separate hand.
4. cp. Asm., p. 78 : इतिवृत्तकं कतमत् । यदार्यश्रावकाणां पूर्वलौकिकं वृत्तं देशयति ।
5. ibid, loc. cit., यद्बोधिसत्त्वचरितपिटकसंप्रयुक्तं वृत्तं देशयति ।
6. Asaṅga remarks, ibid, p. 79 : वैपुल्यं कतमत् । बोधिसत्त्वपिटक-

*(contd. on p. 139)*

**अद्भुताधर्माः कतमे ।** यत्र बुद्धानाञ्च, बुद्धश्रावकाणां च, भिक्षूणाञ्च, भिक्षुणीनाञ्च, शिक्षमाणानां, श्रामणेकी(री)णामुपासिकानां, साधारणा[ऽ]साधारणाश्च तदन्यप्रतिविशिष्टाश्चा[ऽऽ]-श्चर्या[ऽ]द्भुतसम्मता गुणविशेषा आख्याता इमे उच्यन्ते अद्भुता धर्माः ॥

उपदेशाः कतमे [।] सर्व्वमातृका अभिधर्मः सूत्रान्तनिष्कर्षः । सूत्रान्तव्याख्यान[4]मुपदेश इत्युच्यते ।

**तच्चैतद् द्वादशांगवचोगतमस्ति सूत्रमस्ति विनयः, अस्त्यभिधर्मः** । तत्र यत्तावदाह । सूत्रं गेयं व्याकरणं गाथोदानावदानवृत्तकजातकवैपुल्याद्भुतधर्मा इति । इदं तावत्सूत्रं । यत्पुनराह । निदानमित्ययमुच्यते । विनयः । यत्पुनराह । उपदेशा इति । अयमुच्यते । [5] अभिधर्मः[1] ।

तच्चैतद् द्वादशां[गंश्रु[2]]तं पिटकत्रयसंगृहीतं । सद्भिः सम्यग्गतैर्देशितं । सद्धर्म इत्युच्यते । तस्य श्रवणं । **सद्धर्मश्रवणं** [।] **तत्पुनः कतमत्** । यथा-

---

*(contd. from p. 138)*

संप्रयुक्तं भाषितम् । यदुच्यते वैपुल्यं तद् वैदल्यमप्युच्यते वैतुल्यमप्युच्यते । किमर्थं वैपुल्यमुच्यते । सर्वसत्त्वानां हितसुखाधिष्ठानतः उदारगंभीरधर्मदेशनातश्च ॥ किमर्थमुच्यते वैदल्यम् । सर्वावरणविदलनतः ॥ किमर्थमुच्यते वैतुल्यं । उपमानधर्माणां तुलनाऽभावतः ॥

1. cp. Asm., p. 79, para 3; MSA and MSAB, XI.3 sq.
2. Added by a separate hand.

पीहैकत्यः सूत्रधरो वा भवति। विनयधरो वा। मातृकाधरो वा, सूत्रविनयधरो वा, सूत्राभिधर्मधरो वा, विनयमातृकाधरो वा। इदमुच्यते सद्धर्म[6]श्रवणं। तत्पुनः। **श्रवणं द्विविधं। व्यंजनश्रम(व)णमर्थश्रवणं च।**

**चिन्तना कतमा।** यथापीहैकत्यस्तानेव यथाश्रुतान्धर्मानेकाकी रहोगतः। षडचिन्त्यानि स्थानानि-तद्यथा, आत्मचिन्तां, सत्त्वचिन्तां, लोकचिन्तां, सत्वा-(त्त्वा)नां कर्मविपाकचिन्तां, ध्यायिनां ध्यायिविषयं, बुद्धानां बुद्धविषयं वर्जयित्वा स्वलक्षणतः। सा[7]-मान्यलक्षणतश्च चिन्तयति।

सा पुनः चिन्ता द्विविधा गणनाकार[ा]सह गणनायोगेन धर्मेण। तुलनाकारम(रा). युक्त्या गुणदोषपरीक्षणाकारा[च] [।] स चेत्स्कन्धप्रतिसंयुक्तां देशनां चिन्तयति। स चेदन्यतमान्यतमान्यतमां पूर्व्वनिविष्टां देशनां चिन्तयत्याभ्यां चिन्तयति। यथा पुनः
7A—3// कथमि //[1]तिरूपमुच्यते[1]। दश रूपीण्यायतनानीति। यच्च धर्मायतनपर्यापन्नं रूपं स च रूपस्कन्धः, तिस्रो[2]

1. cf. Ada, V.2, p. 32 : सर्वं चतुर्महाभूतकृतं द्वादशायतनेषु व्यपहाय मन आयतनं सर्वाण्यन्यान्यायतनानि धर्मायतनसंगृहीतमविज्ञप्तिरूपं चेति रूपस्कन्धः,· · · ·; cp. Abd, vs. 4 :

'रूपस्कन्धो हि नेत्राद्या दशायतनधातवः।
धर्मसंज्ञे त्रयस्कन्धाः साविज्ञप्तिर्ध्रुवत्रयाः।'

2. दुःखा-सुखा-अदुःखासुखा चेति।

वेदना वेदनास्कन्ध: । षट् संज्ञाकाया: संज्ञास्कन्ध:[1] । षट् चेतनाकाया: चेतनास्कन्ध: । षड् विज्ञानकाया विज्ञानस्कन्ध[1] इत्येवं गणनासंख्याकारां स्कन्ध [गणनां[2]] चिन्तयत्युत्तरोत्तरप्रभेदेन येन वा पुनरस्या: संख्या-गणना[2]कारायाश्चिन्ताया अप्रमाण: प्रवेशनयो वेदितव्य: ।

**कथं युक्त्युपपरीक्षाकारया चिन्तया स्कन्धदेशनां चिन्तयति । चतसृभिर्युक्तिभिरुपपरीक्षते ।**[3] **कतमा-भिश्चतसृभिर्यदुतापेक्षायुक्त्या, कार्यकारणयुक्त्या, उप-पत्तिसाधनयुक्त्या । धर्मतायुक्त्या ।।**

**अपेक्षायुक्ति: कतमा**[4] । द्विविधा अपेक्षा उत्पत्त्य-पेक्षा[3]प्रज्ञप्त्यपेक्षा च । तत्रोत्पत्त्यपेक्षा यैर्हेतुप्रत्ययै: स्कन्धानां प्रादुर्भावो भवति । तस्यां स्कन्धोत्पत्तौ ते हेतवस्ते, प्रत्यया अपेक्ष्यन्ते । यैर्नामकायपदकायव्यंजन-कायै: स्कन्धानां प्रज्ञप्तिर्भवति । तस्यां स्कन्धप्रज्ञप्तौ ते नामपदकायव्यंजनकाया अपेक्ष्यन्ते । इयमुच्यते **स्कन्धेषूत्पत्त्यपेक्षा । प्र[4]ज्ञप्त्यपेक्षता(क्षा)च ।** या चोत्पत्त्यपेक्षा । या च प्रज्ञप्त्यपेक्षा सा युक्तिर्योग

---

1. cf. Ada, p. 53.
2. ibid, p. 54.
3. cp. तत्र धर्ममीमांसाकामेन कतिभिर्युक्तिभिर्विचार्यते । चतसृभिर्युक्तिभि: । अपेक्षायुक्ति: कार्यकारणयुक्ति: उपपत्तिसाधनयुक्ति: धर्मतायुक्तिश्च ।।, Asm., p. 81.
4. cp., ibid, loc. cit., अपेक्षायुक्ति: कतमा । या संस्काराणामुत्पत्तौ प्रत्ययापेक्षा ।

उपायः । स्कन्धोत्पत्तये । स्कन्धप्रज्ञप्तये तस्मादपेक्षा-युक्तिरित्युच्यते ।

**कार्यकारणयुक्तिर्या**[1][त[2]]दुत्पन्नानां स्कन्धानां स्वेन हेतुना स्वेन प्रत्ययेन तस्मिंस्तस्मिन् स्वकार्यकरणे विनियोगस्तद्यथा । चक्षुषा रूपाणि द्रष्टव्यानि । श्रोत्रे[5]ण शब्दा[ः] श्रोतव्याः । यावन्मनसा धर्मा विज्ञेया इति । रूपेण चक्षुषो गोचरे अवस्थातव्यं । शब्देन श्रोत्रस्य, एवं याद्धर्मैर्मनस इति । यद्वा पुनरन्यदप्येवंभागीयं । तत्र तत्र धर्माणामन्यो[अ]न्यं कार्यकारणे प्रतियुक्तिर्योग उपाय इयमुच्यते । कार्यक[ा]रणयुक्तिः ।

**उपपत्तिसाधनयुक्तिः**[3] [6]**कतमा** [।] अनित्या[ः]-स्कन्धा इति, प्रतीत्यसमुत्पन्ना, दुःखा[ः], शून्या, अनात्मान इति **त्रिभिः प्रमाणैरुपपरीक्षते** यदु(त[4])-ताप्तागमेन, प्रत्यक्षेणानुमानेन[5] च[।]एभिस्त्रिभिः प्रमाणैरूपपत्तियुक्तैः सतां हृदयग्राहकैर्व्यवस्थापना

1. cp., ibid, loc. cit., कार्यकारणयुक्तिः कतमा । पृथग्लक्षणानां धर्माणां प्रत्येकं कार्यकारणानि ।
2. Omitted in the MS., supplied by us.
3. cf., ibid., p. 81 : उपपत्तिसाधनयुक्तिः कतमा । उपपत्तिसाधनार्थं साध्यस्यार्थस्य प्रमाणाविरुद्ध उपदेशः ॥
4. This may be deleted.
5. cp. प्रत्यक्षेणानुमानेन ध्यानाभ्यासरसेन च ।
   त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥ Y. B., I.5, see, MKV (V) I.3, 1-2 p. 25; NMRP, I, pp. 42-58.

साधना क्रियते । यदुत स्कन्धानित्यताया वा, प्रतीत्य-समुत्पन्नताया वा, दुःखताया[ः], [7]शून्यताया, इयमुच्यते उपपत्तिसाधनयुक्तिः ।

**धर्मतायुक्तिः कतमा**[1] । केन कारणेन तथाभूता एते स्कन्धा[ः], तथाभूतो लोकसन्निवेशः केन कारणेन खरलक्षणा पृथिवी, द्रवलक्षणा आपः, उष्णलक्षणं तेजः [ः], समुदीरणलक्षणो वायुः, (।) अनित्याः, स्कन्धा[ः], केन कारणेन शान्तं निर्व्वाणमिति । तथा

7B—3// रू//[1]पणलक्षणं रूपं । अनुभवलक्षणा वेदना, संजाननलक्षणा संज्ञा, अभिसंस्करणलक्षणाः संस्काराः, विजानननालक्षणं विज्ञानमिति । प्रकृतिरेषां धर्माणामियं स्वभाव एष ईदृशः । धर्मतैषा चैव चासौ धर्मता । सैवात्र युक्तिर्योग उपायः [।] एवं वा एतत् स्यात् । अन्यथा वा, नैव वा स्यात्, सर्व्वत्रैव च धर्मतैव प्रतिप्रस[2]रणधर्मतैव युक्तिः । चित्तनिध्य[ा]पनाय, चित्तसंज्ञापनाय इयमुच्यते धर्मतायुक्तिः ।

**एवं चतसृभिर्युक्तिभिः स्कन्धदेशना** उपपरीक्ष्यत इति । यावत्पुनरन्या काचिद्देशना इति या एवमाभ्यां द्वाभ्यामाकाराभ्यां गणनासंख्याकारा च युक्त्युपपरी-क्षणाकारा च सम्यगुपनिध्यायना तस्यास्तस्या देशनाया-[3]इयमुच्यते । सद्धर्मश्रवणचिन्त[न[2]]ा ।।

1. cf. Asm., p. 81 : धर्मतायुक्तिः कतमा । अनादिकालात् स्वलक्षण-सामान्यलक्षणस्थितधर्मेषु या धर्मतापरिनिष्पत्तिः सा धर्मता ।

2. MS. reads : सद्धर्मश्रवणचिन्ता.

**अनन्तरायः कतमः** [।] **अनन्तरायो द्विविधः । अध्यात्ममुपादाय बहिर्धा च** [।] तत्राध्यात्मं बहिर्धा चोपादायान्तराय(यं)वक्ष्यति । तद्विपर्ययेण[।]नन्तरायो वेदितव्यः ।

**अध्यात्ममुपादायान्तरायः कतमः ।** यथापीहैकत्यः पूर्व्वमेव कृतपुण्यो भवति । सौकृतत्वात् पुण्यानां[4]च लाभी भवति । कालेन कालमानुलोमिकां(कानां, केषु)जीवितपरिष्काराणां(रेषु) । यदुत चीवरपिण्डपात-शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां (रेषु)तीव्ररागो भवत्यायत(न[1])रागः । तीव्रद्वेषः आयत(न[1])द्वेषः । तीव्र-मोह आयत(न[1])मोहः । पूर्व्वं वानेना[ऽऽ]बाधसंवर्त्त-नीयानि कर्माणि कृतानि भवन्ति । यद्धेतोराबाध[5]-बहुलो भवति । दृष्ट एव धर्मे विषमचारी भवति । यो (ये)नास्याभीक्ष्णं वातो वा कुप्यति, पित्तम्वा, श्लेष्मम्वा, विषूचिका वा काये सन्तिष्ठते । भोजन-गुरुको भवति । बह्वर्थो, बहुकृत्यो, गणसन्निपातबहुलो भवति । कर्मारामो वा, भाष्यारामो वा, निद्रारागः (मः), संगणिकारामः । आत्मसंप्रग्रा[6]हकश्चपलः, प्रमत्तः कुदेशवासी वा । इत्येवंभागीया अन्तराया अध्यात्ममुपादाय वेदितव्याः ।

**बहिर्धोपादायान्तरायाः कतमे** [।] तथापि तद-सत्पुरुषापाश्रयः । यतो न लभते कालेन कालमानु-

1. This may be omitted.

लोमिकीमववादानुशासनीं [।]कुदेशे वा वसति । यत्रास्य वास(सं)कल्पयतो दिवा वाग्रविलोको(वोग्रो रवेरालोको) भवति । प्रभूतः, [7]रात्रौ वा [।] उच्च-शब्द[ो], महाशब्द[ो]महाजनकायस्य निर्घोषः । तीव्रकटुकश्च वातातपसंस्पर्शो, मनुष्यादपि भय-मयमेवंभागीयो बहिर्धापाया(र्धोपादाया)न्तरायो वेदितव्यः । अयं तावद्विस्तरविभागस्य(गः) ।।

**समासार्थः पुनः कतमः । समासतस्त्रिविधो-[अ]न्तरायः । प्रयोगान्तराय[ः], प्राविवेक्यान्त-**
7A—4// **राय[ः] । प्रतिसंलयना//[1]न्तरायश्च ।**

तत्र **प्रयोगान्तरायो** येनान्तरायेण समव[हितेन[1]] संमुखीभूतेनाशक्तो भवत्यप्रतिबलः सर्व्वेण सर्व्वं कुशलपक्षप्रयोगे[।]स पुनः कतमः । यदा[ऽऽ]बाधको भवति, बाढग्लानः, अभीक्ष्णमस्य वातो वा कुप्यते, पित्तम्वा, श्लेष्मम्वा(ष्म वा), विषूचिका वास्य काये सन्तिष्ठते [।] अपि त्वस्य दशति वृश्चिको वा, शत[2]पदी वा, मनुष्यो वैनं विहेठयत्यमनुष्यो वा[।]न च लाभी भवति चीवरपिण्डपातशयनासनग्लानप्रत्यय-भैषज्यपरिष्काराणामयमेवंभागीयः प्रयोगान्तरायो वेदितव्यः ।

**प्राविवेक्यान्तरायः कतमः** [।] यद्भोजनगुरुको भवति, बह्वर्थो, बहुकृत्यो, बहुकरणीयः, कर्मारामरतिं

1. Letters damaged by pin-hold.

रतो भवति । तेषु तेष्वि[3]तिकरणीयेषु प्रसृतमानसः । भाष्यारामो भवति । शक्तः प्रतिबलः सन् । प्राविवेक्य-प्रहाणे, प्रतिसंलयने, भावनायामुद्देशम्वाध्यायमात्र-केन(ण) संतुष्टो निद्रारामो भवति । स्त्यानमिद्ध-पर्यवस्थितः, कुसीदजातीयो निद्रासुखं, पार्श्वसुखं, शयनसुखं च स्वीकरोति । संगणिकारामो भवति सार्धं गृ[4]हस्थप्रव्रजितैः । राजकथाम्वा करोति । चोरकथां वा, अन्नकथां वा, पानकथां वा, वस्तुकथां वा, वेश्याकथां वा, वीथीकथाम्वा जनपदमहामात्राख्यानकथाम्वा, समुद्राख्यानकथाम्वा [।] इत्येवं भागीयया अनर्थोप-संहितया कथया कालमतिनामयति । तत्र चाभि र(म[1]) तो भवत्यभी[5]क्ष्णेण(न)गणसन्निपातबहुलो भवति । तेषु तेष्वधिकरणेषु व्याक्षिप्तमानसो भवति । व्याकुलमानसः । संसर्गारामो भवति । गृहस्थप्रव्र-जितानामसमवहितानां च वियोगं गच्छति । प्रपंचा-रामो भवति । प्रपंचरतः[2] अवक्रमणीयेषु पूर्व्वंगमः, प्राविवेक्येषु निक्षिप्तधुरः । इदमेवंभागीयो(इम एवं भागीया)[6]धर्माः प्रविवेकान्तरायो वेदितव्यः । यैः समवहितैः संमुखीभूतैर्न सुकरं भवत्यरण्यवनप्रस्थानि प्रान्तानि शयनासनान्यध्यावसितुं । अरण्यानि वा वृक्ष-

---

1. This may be deleted.

2. On प्रपञ्च, cp. MKV(V), p. 150 : ····अनादिमत्संसाराभ्यस्ताज् ज्ञानज्ञेयवाच्य-वाचक-कर्तृ-कर्म-करण-क्रिया-घट-पट-मुकुट-रथ-रूप-वेदना-स्त्री-पुरुष-लाभाऽलाभ-सुख-दुःख-यशोऽयशो-निन्दा-प्रशंसादिलक्षणात् विचित्रात् प्रपञ्चात्·· ।

मूलानि वा शून्यागाराणि वा [।]

**प्रतिसंलयनान्तरायः कतमः**[।] तद्यथा **प्रतिसंलयन-**
7B—4// **मुच्यते शमथो विपश्यना** च । तत्रास्ति **शम**//[1]-**थान्तरायः । अस्ति विपश्यनान्तरायः । तत्र शमथान्तरायः प्र[भिन्नः[1]]अदेशवासश्च ।** यथास्य प्रमत्तस्य स्त्यानमिद्धं वा चित्तं पर्यवनह्यति । शमथमात्रम्वा आस्वादयति । लीनत्वाय वा चित्तमुपनामयति । अन्धकारायितत्वं वा चेतसो भवति । यद्रूपेण चादेशवासेन । मनुष्यकृतो वा परतः संघट्टो भवति । ये[2]नास्य चित्तम्बहिर्धा विक्षिप्यते[।] अयं **शमथान्तरायः** । प्रतिसंलयनान्तरायो वेदितव्यः ।

**विपश्यनान्तरायः कतमः ।** यदुतात्मसंग्राहश्चापल्यश्च ।

**तत्रात्मसंग्रहो** यथापि तदहमस्म्युच्चकुलः प्रव्रजितः । अलीनः । अन्ये च न तथेत्यात्मानमुत्कर्षयति । संगृह्णाति । परांश्च पन्स-(पंस)यति । एवमा[3]ढ्यकुलप्रव्रजितः, अदीनः, एवमभिरूपो दर्शनीयः, प्रासादिक, एवं बहुश्रुतः, सन्निचयः । एवमहमस्मिन् कल्याणवाक्यो वाक्करणेनोपेतः, अन्ये च भिक्षवो न तथेति । आत्मानमुत्कर्षयति । संप्रगृह्णाति । परांश्च पन्स(पंस)यति । स आत्मानं संप्रगृह्ण[ा]त्येते भवन्ति । भिक्षवः, स्थविरा, र[4]तिज्ञा, अभ्यव-

1. Letters damaged by pin-hold.

तीर्ण्णब्रह्मचर्याः, ताञ्च कालेन कालं परिपृच्छति । परिप्रश्नीकरोति । ते चास्य न कालेन कालमविवृतानि च स्थानानि विवृण्वन्ति । विवृतानि च स्थानानि विवृण्वन्ति । न च गम्भीरमर्थपदं । साधु च सुष्ठु च प्रज्ञया प्रतिविध्य संप्रकाशयन्ति यावदेव ज्ञान-दर्शनस्य विशुद्धये । एवम[5]स्य स **आत्मसंग्रहः** ।

आन्तरायिको भवति । यदुत विपश्यनायाः [।] पुनरपरमल्पमात्रकस्यावरमात्रकस्य ज्ञानदर्शनमात्रकस्य स्पर्शविहारमात्रकस्य लाभी भवति । स तेन ज्ञानमात्र-केण । दर्शनमात्रकेणात्मानमुत्कर्षयति । संप्रगृह्णाति । स आत्मानं संप्रगृह्णंस्तावता संतुष्टो[6]भवति नोत्तरि व्यायच्छते । एवमस्यान्तरायः कृतो भवति । आत्म-संप्रग्रहेण यदुत विपश्यनायाः(नया) [।] चपलो वा पुनः अनुपशान्तेन्द्रियो भवति । उद्धतेन्द्रियः, उन्न-तेन्द्रियः । स दूषितचित्ती भवति । सुभाषितभाषी, दुष्कृतकर्मकारी, न स्थिरं धर्मांश्चिन्तयति । न दृढं
7A—5// चिन्तयति । येन विप//[1]श्यनां न पूरयति न विशोध-यत्येवमस्य चापल्यं । अन्तरायो भवति । यदुत विपश्यनाया इति ।

**द्वौ धर्मौ शमथान्तरायौ । यदुत प्रमादः, आदेशवासश्च** [।] **द्वौ धर्मौ विपश्यनान्तरायौ यदुतात्मसंप्रग्रहश्चापल्यञ्च ।** इति यश्च शमथान्तरायः । यश्च विपश्यनान्तरायः । अयमुच्यते

प्रतिसंल[2]यनान्तरायः ।

अयं च पुनरन्तरायस्य समासार्थं इति । यश्चायं समासार्थः । यश्च पूर्व्वको विस्तरविभागः । तदेकत्य-मभिसंक्षिप्यान्तराय इत्युच्यते । अस्य चान्तरायस्य विपर्ययेणा[न[1]]न्तरायो वेदितव्य इति । य एषामन्तरा-[या[2]]णामभावो विगमः असंगतिरसमवधार(चर)-[ण[1]]मयमुच्यते[अ][न[1]]न्तरा[3]यः ।।

**त्यागः** कतमः[3]। यद्दानमनवद्यं चित्तालंकारार्थं,

---

1. MS. omits this.
2. A separate hand adds this.
3. Tyāga has been regarded as the main feature leading to the purification of Citta and thereby emancipation from the worldly phenomena. According to the Nikāyas, suppression of desires, attachment, envy and sloth, various dogmatic view-points and ahaṁkāra and mama-kāra and tyāga thereof leads to Nibbāna, see, M. N., II.179; cf. A. N., I.280; S. N., I.216; II. 251, 261; D. N., III.126 sq.; it is the highest culmination of this concept and virtue that finds expression in the term दानपारमिता; Śāntideva says :

   आत्मभावस्य भोगानां त्र्यध्ववृत्तेः शुभस्य च ।
   उत्सर्गः सर्वसत्त्वेभ्यस्तद्रक्षा शुद्धिवर्धनम् ॥

   (Ś S, vs. 4); cf. Ś S, p. 16 : न तद्वस्तूपादातव्यं यस्मिन् वस्तुनि नास्य त्यागचित्तमुत्पद्यते । न त्यागबुद्धिः क्रमेत ।· · · ·न तत्किञ्चिद्वस्तू-पादातव्यं यस्मिन् वस्तुनि बोधिसत्त्वस्यापरित्यागबुद्धिरुत्पद्यते । cp., pp. 22. 17-8; BCA, Vs. 9-10 :

(contd. on p. 150)

चित्तपरिष्कारार्थं, योगसंभारार्थं, उत्तमार्थस्य प्राप्तये ददाति[1]।

तत्र को ददाति [कस्मै ददाति कुत्र ददाति[2]]केन च ददाति। कथं ददाति। कस्माद्ददाति। येनास्य

---

(contd. from p. 149)

अदरिद्रं जगत् कृत्वा दानपारमिता यदि।
जगद् दरिद्रमद्यापि सा कथं पूर्वतायिनां॥
फलेन सह सर्वस्वत्यागचित्ताज्जनेऽखिले।
दानपारमिता प्रोक्ता तस्मात् सा चित्तमेव तु॥

cp. p. 53: सर्वस्वं बाह्याध्यात्मिकं सर्वं वस्तु दानं दानफलं च सर्वसत्त्वेभ्यः परित्यजताऽभ्यासेन प्रकर्षगमनाद् यदा अपगतमात्सर्यमलं निरासङ्गतया चित्तमुत्पद्यते तदा दानपारमिता निष्पन्नेत्युच्यते। तस्मात् सा चित्तमेव नान्या दानपारमिता॥ See, regarding dānapāramitā, Hardayal, Bodhisattva Doctrine in Buddhist Sanskrit Literature, pp. 172-93; Asaṅga enumerates nine kinds of dāna: तत्र कतमा बोधिसत्त्वस्य दानपारमिता। नवाकारं दानं बोधिसत्त्वस्य दानपारमितेत्युच्यते। स्वभावदानं सर्वदानं दुष्करदानं सर्वतोमुखं दानं सत्पुरुषदानं सर्वाकारदानं विघातार्थिदानमिहामुत्रसुखं दानं विशुद्धदानं च। Bodhi, p. 80; see, pp. 80-95; for comments, see, Hardayal, ibid, pp. 173-4; cp. MSA, p. 98 sq.

1. cf. चागसम्पदा A. N., II.70: इद, गहपति, अरियसावको विगतमलमच्छेरेन चेतसा अगारं अज्झावसति मुत्तचागो पयतपाणि वोस्सग्गरतो याचयोगो दानसंविभागरतो। अयं वुच्चति, गहपति, चागसम्पदा।; cf. चागधनं, ibid p. 318; चागकथा, ibid, pp. 432-3; cp., Ada., pp. 1-2: कतमद् दानं स्वस्वामिकानां धनवस्तूनां वितरणं दानं तत् त्रिविधहेतोर्भवति। आत्महेतोः परहेतोः परात्महेतोश्च। चैत्यमन्दिराणां बुद्धप्रत्येकबुद्धार्हतां चोपस्थानमात्महेतोः। सत्त्वेभ्यो दानं परहेतोः। जनेभ्यो दानं परात्महेतोः।

2. A separate hand adds this in a footnote, photo indistinct and illegible.

दानम[न]वद्यं भवति ।। आह । **दाता, दानपतिर्ददाति ।** अयमुच्यते **दाता ।** यस्य स्वकं दीयते । तच्च दातुकामस्य, नादातुकामस्य, अयमुच्यते **दानपतिः ।**

**तत्र कुत्र ददाति ।** आह । चतुर्षु ददाति । **दुःखितायोग(प)कारिणे । इष्टाय, विशिष्टाय च ।**

**तत्र दुःखितायेति ।** कृपणा वा, अध्वगा वा, याचनका वा, अन्धा वा, [5]बधिरा वा, अनाथा वा, अप्रतिसरणा वा, उपकरणविकला इति । ये वा पुनरन्ये[अ]प्येवंभागीया[ः ।]

**उपकारिणः कतमे** तद्यथा मातापितरं(रौ)-आपायकपोषकं(कौ), सम्वर्धकमि(कावि)ति । ये वा पुनरटवीकान्तारादुत्तारयन्ति, दुर्भिक्षाद्वा, परचक्रभयाद्वा, बन्धनाद्वा । आबाधकाद्वा, हितोपदेशकाश्चास्य [6]भवन्ति । सुखोपदेशका, हितसुखोपसंहारका, उत्पन्नोत्पन्नेषु चाधिकरणेषु सहायकाः, सहनन्दिनः, सहशोका, आपत्सु चैवं न परित्यजन्ति इति ये वा पुनरन्ये[अ]प्येवंभागीया इम उपकारिणः ।

**इष्टाः कतमे** [।]ये संस्तुता[ः] । येषामस्यान्तिके भवति । प्रेम वा, गौरवम्वा, भक्तिवा[7]दो वा, आलप्तकाः, संस्तुतकाः, सप्रियकाश्च भवन्ति । इति वा पुनरन्ये[अ]प्येवंभागीया इम उच्यते इष्टाः ।।

**विशिष्टाः कतमे** [।] ते श्रव(म)णब्राह्मणा[ः]

साधुरूपसम्मताः । अव्याबाध्याः अव्याबाध्यरताः, विगतरागाः, रागविनयाय प्रतिपन्नाः, विगतद्वेषा द्वेष-
7B—5// विनयाय प्रतिपन्नाः । विगत[8]मोहा, मोह//[1]विनयाय प्रतिपन्ना इति । ये वा पुनरन्ये[अ]प्येवं भागीया इम उच्यन्ते विशिष्टाः ॥

**तत्र किं ददातीत्याह । समासतः सत्त्वसंख्यातमसत्व(त्त्व)संख्यातं च । वस्तु ददाति ।**

**तत्र सत्त्वसंख्यातम्वस्तु कतमत् ।** तद्यथा पुत्रदानं दासीदासकर्मकरपौ[रुषे[1]]यहस्त्यश्वगवेडककुक्कुटस्त्रीपुरुषदारकदा[2]रिकमिति । यद्वा पुनरन्यदप्येवंभागीयं वस्तु । अध्यात्मम्वा पुनरुपादाय करचरणशिरोमान्स(मांस)रुधिरवसादीन्यनुप्रयच्छति । इदमपि पुरुषसंख्यातं दानं यत्र बोधिसत्त्वबोधाः संदृश्यन्ते । अस्मित्वर्थे नेदं दानमभिप्रेतं । येषु तु सर्व्वेष्वस्यैश्वर्यं भवति । वशिता च [3] प्रभविष्णुता च । अर्हति च तान्सत्वा(त्त्वा)न् परेषां प्रतिपादयितुं । प्रतिपादयंश्चात्मानमनवद्यं करोति । न तद्धेतोस्तत्प्रत्ययं परे मनान्सि(नांसि) प्रदूषयन्ति । ये च सत्वा(त्त्वाः) परेषु प्रतिपादिता(:[2])स्तेन व्यापादिता भवन्तीदमुच्यते अनवद्यं सत्व(त्त्व)वस्तुदानं ॥

**असत्त्व[4]संख्यातम्वस्तु कतमत् ।** तद्यथा धन

1. Letters lost by pin-hold, constructed by us.
2. May be deleted.

वस्तु, धान्यवस्तु । देश वस्तु ।

**तत्र धनवस्तु** तद्यथा मणिमुक्तावैडूर्यशंखशिला-प्रवाडा (ला) श्मगर्त्तपुसारगण्वज [ा] तरूपरजतलोहितिकादक्षिणावर्त[1]मिति । यद्वा पुनरन्यदप्येवं भागीयं रत्नम्वा, हिरण्यम्वा, रूप्यम्वा, व[5]स्त्रम्वा, भाण्डोपस्करं वा, गन्धजातं वा, माल्यजातम्वा, इदमुच्यते धनं ।

**धान्यं कतमत्** । यत्किञ्चिद् भोज्यं वा, पेयम्वा, तद्यथा यवा वा, शालिर्वा, गोधूमा वा, कोला वा, कुलत्था वा, तिला वा, माषा वा, इक्षुरसम्वा (सो वा), मृद्वीकारसम्वा (सो वा), इति यद्वा पुनरप्येवंभागीय-[6]मिदमुच्यते धान्यं ।।

**देशवस्तु कतमत्** । तद्यथा क्षेत्रवस्तु, गृहवस्त्वापण-वस्तु, पुण्यशालाविहारप्रतिष्ठापनमिति । यद्वा पुनरन्यदप्येवंभागीयमिदमुच्यते देशवस्तु ।

तत्र यच्च सत्व (सत्त्व) संख्यातम्वस्तु इदं ददातीति ।।

**केन ददतीति** । या च अलोभसह[7]गता चेतना, चित्ताभिसंस्कारो मनस्कर्म । यच्च तत्समुत्थापितं काय-कर्म । वाक्कर्म दे[श[2]]वस्तुपरित्यागाय, स्वसंताने वा[।]अनेन ददाति ।

1. This is a kind of शङ्ख.
2. A separate hand adds this.

**तत्र कथं ददातीति**। श्रद्धया ददाति। आगम-
7A—6// दृष्टिः, फलदर्शी, सत्कृत्य ददाति। //[1] प्रणतचित्तः स्वहस्तं(हस्ताभ्यां) ददाति। अनपविद्ध[ः] कालेन ददाति। यदैतत्परेषामुपयोग्यं स्यात्परानुपहत्य ददाति। धर्मेण, समयेन, असाहसेन, समुदानयित्वा-(समुदानीय)शुचि ददाति। प्रणीतं कल्पिकं ददाति। येन न परे सावद्या भवन्ति। नात्मा[।]अभीक्ष्णं ददाति। विनीय सात्म[यन्मलं[1]] सन्निधिमलं च दानं ददाति। पूर्व्वमेव दानात्सुमना ददच्चि(दंश्चि)[2]त्तं प्रसादयति। दत्वा वा विप्रतिसारी भवति। एवं ददाति।

**कस्माद्ददाति**। आह। कारुण्याद्वा ददाति। यदुत दुःखितेषु कृतज्ञताया(तया)ददाति। यदुत उपकारिषु प्रेम्णा, गौरवेण, भक्त्या ददाति। यदुत इष्टेषु लौकिकलोकान्तरविशेषप्रार्थनया ददाति। यदुत विशिष्टेषु [।] तस्मात्। [3] ददातीत्युच्यते।

एभिराकारैरतो[ऽ]स्य गृहिणो वा, प्रव्रजितस्य वा चित्तालंकारार्थं, चित्तपरिष्कारार्थं। योगसंभारार्थ-मुत्तमार्थस्य प्राप्तये तद्दानमनवद्यं भवति[2]। अयमुच्यते त्यागः ॥

---

1. Letters lost by pin-hold.

2. A विशुद्ध दान has been described in the Mahāyānasūtras as (Ś S, p. 144) : यदुत अहंकारविशुद्धं तद्दानं ददाति। ममकारविशुद्धं तद्दानं ददाति। हेतुविशुद्धं तद्दानं ददाति। दृष्टिविशुद्धं तद्दानं ददाति॥ निमित्त-

(contd. on p. 155)

**श्रमणालंकारः कतमः** [।] तद्यथैकत्यः **श्राद्धो** भवति । **अशठः । अल्पाबाधः, आरब्ध[वीर्य**[1]]-**ज**[ा]**तीयः प्राज्ञ**[ो][अ]**ल्पेच्छः, संतुष्टः ।** [4] **सुपोषः, सुक(भ)रः, धुतगुणसमन्वागतः प्रासादिको, मात्रज्ञः । सत्पुरुषधर्मसमन्वागतः । पण्डितधर्मसमन्वागतः । पण्डितलिंगसमन्वागतः । क्षमः, सू(सु)रतः, पेशलश्च भवति ।**

**कथं श्राद्धो भवति ।** प्रसादबहुलो भवति । अर्थकल्पनाबहुलः । विमुक्तिबहुलः छन्दिकश्च कुशलेषु धर्मेषु [।] स शास्तरि प्र[5]सीदति । न कांक्षति । न विचिकित्सति । शास्तारं सत्करोति । गुरुकरोति । मानयति । पूजयति । सत्कृत्य, गुरुकृत्य, मानयित्वा, पूजयित्वा, निश्रित्य, विहरति । यथा शास्तर्येवं धर्मे । सब्रह्मचारिषु, शिक्षायामववादानुशासन्यां, प्रतिसंस्तरे अप्रमादे, समाधावेवं श्राद्धो भवति ।

**कथमशठो भवति ।** ऋजको भवति [6]ऋज-कज[ा]तीयः । यथाभूतमात्मानमाविष्कर्त्ता भवति ।

*(contd. from p. 154)*

विशुद्धं तद्दानं ददाति । नानात्वविशुद्धं तद्दानं ददाति । विपाकप्रतिकाङ्क्षणाविशुद्धं तद्दानं ददाति । यथा गगनं समविशुद्धं तद्दानं ददाति ।· ·यथा निर्मितो निर्मिताय ददाति, निर्विकल्पोऽनाभोगः चित्तमनोविज्ञानविगतः सर्वधर्मनिःप्रतिकाङ्क्षी, एवं द्वयविगमतया मायालक्षणस्वभावविशुद्धं बोधिसत्त्वस्तद्दानं ददाति । यस्येदृशो दान-परित्यागः, प्रज्ञाज्ञानेन च सर्वसत्त्वाक्लेशपरित्यागः, उपायज्ञानेन च सत्त्वापरित्यागः, एवं त्यागचित्तः कुलपुत्र बोधिसत्त्वो गगनसमदानो भवति ।

1. MS. omits this.

शास्तुरन्तिके, विज्ञ[ा]नाञ्च, सब्रह्मचारिणामेवमशठो भवति ।

**कथमल्पाबाधो भवति ।** अरोगज[ा]तीयः । समयासाधिन्या ग्रहण्या समन्वागतो भवति । नात्युष्णया, नातिशीतया, अव्याबाधा(ध)या, जातुसुखया ययास्याशितपीतखादितास्वादित[ानि[1]] सम्यक्सुखेन परि[7]पाकं गच्छन्त्येवमल्पाबाधो भवति ।

**कथमारब्धवीर्यजातीयो भवति ।** स्थामवान्विहरति । वीर्यवानुत्साही दृढपराक्रमः । निक्षिप्तधुरः कुशलेषु धर्मेषु दक्षश्च भवत्यनलस उत्थानसम्पन्नः [।] कर्त्ता भवति । विज्ञानां सब्रह्मचारिणां कायेन वैयापृत्यमेवमारब्धवीर्यो भवति ।

7B—6// //[1] **कथं प्राज्ञो भवति ।** द्विधा स्मृतिबुद्धिसम्पन्नो भवति । अधन्धे[न्द्रियः[1]], अमूढेन्द्रियः, अनेडकः, प्रतिबलः, सुभाषितदुर्भाषितानां धर्माणां अर्थमाज्ञातुमिति । सहजयापि बुद्ध्या समन्वागतो भवति । प्रायोगिकयापि बुद्ध्या समन्वागतो भवति । एवं प्राज्ञो भवति ।

**कथमल्पेच्छो भवति ।** यावद्भिर्गुणैः समन्वागतो भव[2]त्यल्पेच्छतामादिं कृत्वा तैः परतो ज्ञातुं न समन्वेषते । कश्चि(च्चि)न्मे(न्मां) परे न जानीयुः, अल्पेच्छ[ ] इति वा एवं गुणयुक्त इत्येवमल्पेछो भवति ।

---

1. Letters damaged by pin-hold.

**कथं संतुष्टो भवति ।** इतरेतरेषु चीवरपिण्डपातेन, शयनासनेन तुष्टो भवति, संतुष्टः स लब्ध्वा चीवरं लूहं वा, प्रणीतम्वा नोत्कण्ठति । न परित-स्यति । लब्ध्वा च पुनः अरक्तः [3] परिभुंक्ते । असक्त इति विस्तरेण पूर्व्ववत् । यथा चीवरमेवं पिण्ड-पातं(तः), शयनासनमेवं तुष्टो भवति ।

**कथं सुपोषो भवति ।** आत्मा अस्यैकः पोष्यो भवति । न तु परे तद्यथा दारका वा, मनुष्या वेति । ये वा पुनरन्ये[अ]पि केचिद्येषामर्थाय या (या य)म्पर्ये-ष्टिमापद्यते । परे चैवं दायकदानपतयो दुष्पोष्य[4]-मिति पश्ये(श्येयुः) (न् । र)एवं सुपोष्यो भवति ।

**कथं सुभरो भवति ।** अल्पेनापि यापयति । लूहे-नापि यापयत्येवं सुभरो भवति[1] ।

**कथं धुतगुणसमन्वागतो भवति । पिण्डपातिको भवति । सावदानपिण्डपातिकः । एकासनिकः, खलु पश्चाद्भक्तिकः । त्रैचीवरिको, नामतिकः, पान्सु-**

1. "Mvy. 1128-39 and Chinese Dh. S. (pp. 31, 118) give a list of twelve dhutaṅgas only. The former as well as Pug. P. (p. 69) omits Sapadanacarikanga and pattapiṇḍikaṅga (or bhojane mattaññutā of Vsm.), while the latter omits yathāsanthatikaṅga and patta-piṇḍikaṅga from the list of Buddha; but both these texts give a new aṅga called नामंतिक or नामतिक for पत्तपिण्डक of Buddhaghosa"····(Bapat, Comparative Study, p. 16, f.n. 2).

**(पांसु)कूलिक:। आरण्यको, वृक्ष मूलिक:**[5]-**आभ्यवकाशिक:। श्माशानिको, नैषद्यिक:। याथा-संस्तरिक:** [।] त एते पिण्डपातचीवरशयनासनमा-रभ्य द्वादशका[धुत] गुणा भवन्ति। त्रयोदशा-(श) वा [।]

**तत्र पिण्डपातिकत्वं भिद्यमानं द्विधा भवति। प्राप्तपिण्डपातिकश्च, सावदानपिण्डपातिक[त]या** वेश्यानुवेश्यकुलानि भिक्षित्वा, पर्यटित्वा(पर्यट्य), यथालब्धं यथोप[6]सम्पन्नं पिण्डपातं परिभुंक्ते, नो तु उच्चै: शुण्डां प्रणिधाय कुलानि उपसंक्रामति। अतो[अ]हं लप्स्ये, प्रणीतं खादनीयं, भोजनीयं, यावदाप्तं[।]तत्र पिण्डपातिकत्वमविशेषेणारभ्य द्वादश भवन्ति। प्रभेदं पुन: आरभ्य त्रयोदश(:[1]) [।]

**तत्रैकासनिकत्वं कथमत्।** एकस्मिन्नासने निषण्णो-[7]यावत्परिभोक्तव्यं। तावत्परिभुंक्ते। व्युत्थितश्च पुनस्तस्मादासनान्न परिभुंक्ते। इदमुच्यते। एकासनिकत्वं ॥

**खलु पश्चाद्भक्तिकत्वं कतमत्।** भोजनार्थं निषण्ण स्तावत्(न्) न परिभुंक्ते। यावत्सर्व्वभोजनं प्रतीच्छति। यावता जानाति शक्ष्यामि यापयितुं।
7A—7// यतश्च पुनर्जानीते न मे अत उत्तरि //[1] भोजनेन कृत्यं भविष्यतीति। तत: सर्व्वं परिहृत्यारभते।

---

1. See p. 157, f.n. 1.

प[रि[1]]भोक्तुं । एवं खलु पश्चाद्भक्तिको भवति ।

**कथं त्रैचीवरिको भवति ।** त्रिभिश्च चीवरैर्यापयति, सं(ा)घाटिना वा, उत्तरासंगेन, अंतर्वासेन च । त्रयाणां चीवराणामतिरेकमुत्तरं न धारयत्येवं त्रै[चीव[2]]रिको भवति ॥

**कथं नामतिको भवति ॥** यत्किंचिच्ची[2]वरं धारयति । त्रिचीवरम्वा, अतिरेकचीवरम्वा सर्व्वं तदौर्ण्णिकं धारयति । न त्वन्यं(न्यत्) [।] एवं नामतिकं धारयति ॥

**कथं पान्सु(पांसु)कूलिको भवति ।** यच्चीवरं परैर्मुक्तं भवति । उच्छिष्टं, रथ्यायाम्वा, वीथ्याम्वा, चत्वरे वा, शृंगाटके वा, पथि वा, उत्पथेवा, उच्चार-संसृष्टम्वा, प्रस्रावसंसृष्टम्वा, उच्चारप्रस्रावपूय[3]-रुधिरखेटाप्रक्षितं वा[।] ततो यदशुचि तदपीनय, सारमादाय, शोधयित्वा, सीवित्वा, विवर्ण्णीकृत्य धारयत्येवं पान्सु(पांसु)कूलिको भवति ।

**कथमारण्यको भवति ।** अरण्ये वनप्रस्थानि प्रान्तानि शयनासनानि अध्यावसति । यानि व्यव-कृष्टानि ग्रामनिगमानामेवमारण्यको भवति ॥

**कथं वृक्षमूलिको भवति ।** वृक्ष[4]मूले वासं

---

1. Letter damaged by pin-hold.
2. Photo indistinct and illegible, letters damaged by pin-hold.

कल्पयति । [वृक्ष[1]]मूलं निश्रित्य[।]एवं वृक्षमूलिको भवति ।

**कथमाभ्यवकाशिको भवति ।** अभ्यवकाशे वासं कल्पयति। अनवक[ा]शे विवृते द (दे)शे [।] एवमाभ्य-वकाशिको भवति ।

**कथं श्माशानिको भवति ।** श्मशाने वासं कल्पयति यत्र मृतमृतो जनकायः। अभिनिर्ह्रियत एवं श्माशानिको भवति ।।

**कथं नैषद्यिको भवति ।** मंचे वा, पीठे वा, तृणसंस्तरे वा निषद्यया कालमतिनामयति । नो तु मंचा(म चं)वा, पीठं वा, कुड्यम्वा, (वृक्षमूलं[2]) वृक्षमूलम्वा, तृणसंस्तरम्वा, पर्ण्णसंस्तरम्वा, निश्रित्य पृष्ठ वा (पृष्ठं वा), पार्श्वम्वा ददात्ये[5]वं नैषद्यिको भवति ।

**कथं याथासंस्तरिको भवति ।** यस्मिन् तृणसंस्तरे वा, पर्णसंस्तरे वा शय्यां कल्पयति । तृणसंस्तरम्वा, पर्ण्णसंस्तरम्वा सकृत्यञ्चैव संस्कृतं भवति । तथैव शय्यां कल्पयति । नो तु पुनर्विकोपयति । अभि-संस्करोति चैवं य(या)थासंस्तरिको भवति ।

7B—7// **केनैते धुतगुणा उच्यन्ते** तद्यथा ऊ//[1]र्ण्णा वा, कर्पासं वा, धुतं भवत्यसंवृत्तमिति । त[च्च त]स्मिन्

1. Added by a separate hand in a footnote, letters dim.
2. A repetition, may be deleted.

समये मृदुच भवति । लघु च, कर्मण्यं च, यदुत सूत्राभिनिर्हारे वा, तूलावहृदे(ते?) (तूलाभिनिर्हारे)-वा [।] एवमेव इहैकत्यस्य पिण्डपातरागेण पिण्डपाते चित्तं सक्तं भवति । संसक्तं चीवररागेण शयनासनरा-[गेण[1]]शयनासने चित्तं सक्तं भवति । संसक्तं । स एभि-[2]र्धुतगुणै[2]र्विशोधयति ऋजूकरोति । मृदुकर्मण्यमार्जव-मास्रवम्विधेयं यदुत ब्रह्मचर्यवासाय तेनोच्यन्ते धुतगुणा इति[3] ।।

तत्र पिण्डपातप्रहीणभोजनरागस्य प्रहाणाय एकासनिको भवति । प्रभूतभोजनरागस्य प्रहाणाय नामति[3]को भवति । प्रणीतचीवररागस्य प्रहाणाय नामति[3]को भवति । प्रणीतचीवररागस्य प्रहाणाय त्रैचीवरिको भवति । चीवरे मृदुसंस्पर्शरागस्य प्रहाणाय पान्सु(पांसु)कूलिको भवति । **शयनासनरागश्च-तुर्विधः । तद्यथा संस्पर्शरागः । प्रतिश्रयरागः । पार्श्वसुखशयनसुखरागः । आस्तरणप्रत्यास्तरणो-पच्छादनरागः** । तत्र संसर्गरागस्य प्रहाणाय आरण्यको भवति । प्रतिश्रय[4] रागस्य प्रहाणाय वृक्षमूलिकः

1. Photo indistinct and illegible, letters damaged by pin-hold.
2. For an elaborate account of the dhutaguṇas, see Vsm. II; The Path of Freedom, ch. III (p. 27 sq.); Bapat, Comparative Study, p. 16 sq. (ch. III).
3. cf. Vsm., II.1; The Path of Freedom, p. 27 (paras 1, 2).

अ[ा]भ्यवकाशिकः । श्माशानिको भवति । अपि च श्माशानिकत्वं मिद्धेन रागस्य प्रहाणाय भवति । पार्श्वसुखशयनासनसुखरागस्य प्रहाणाय नैषद्यिको भवति । आस्तरणप्रत्यास्तरणोपच्छाद[न]रागस्य प्रहाणाय याथासांस्तरिको भवत्येवं धुतगुण[5]समन्वागतो भवति ।

**कथं प्रासादिको भवति ।** प्रासादिकेनाति(भि)क्रमप्रतिक्रमेण समन्वागतो भवत्यालोकितव्यलोकितेन संजिमित (सांमिजित) प्रसारितेन सांघाटीचीवरपात्रधारणेनैवं प्रासादिको भवति ।

**कथं मात्रज्ञो भवति ।** इह श्राद्धा ब्राह्मणगृहपतयो
7A—8// व्यर्थं प्रचारयति । यदुत चीवर पिण्डपात//[1] शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैस्तत्र प्रतिग्र[हेण[1]] मात्रां जानाति । एवं मात्रज्ञो भवति ।

**कथं सत्पुरुषधर्मसमन्वागतो भवति ।** उच्चकुलप्रव्रजितो वा सन्नाढ्यकुलप्रव्रजितो वा, अभिरूपो वा, दर्शनीयः, प्रासादिको, बहुश्रुतोपकरणेनोपेतः । अन्यतमान्यतमस्य वा ज्ञानमात्रस्य दर्शनमात्रकस्पर्शविहार[2]सार्थकस्य लाभी सन्नेतेनात्मानमुत्कर्षयति । परांश्च पन्स(पंस)यति । धर्मानुधर्मप्रतिपन्नो भवत्येवं सत्पुरुषधर्मसमन्वागतो भवति ।

**कथं पण्डितलिंगसमन्वागतो भवति ।** कर्मलक्षणो

1. Added by a separate hand in a footnote, letters dim.

बालः, कर्मलक्षणः पण्डितः। यथाकथमिति बालो दुश्चिन्तितचिन्ती भवति। दुर्भाषितभाषी, दुष्कृत-कर्मकारी, [3] पण्डितः पुनः सुचिन्तितचिन्ती भवति। सुभाषितभाषी, सुकृतकर्मकारी [।] एवं पण्डितलिंगसमन्वागतो भवति।

**कथं क्षमो भवति।** आक्रुष्टो न प्रत्याक्रोशति। रोषितो न प्रतिरोषयति। वादितो न प्रतिवादयति। भण्डितो न प्रतिभण्डयति। स चायुष्मान् क्षमो भवति। शीतस्योष्णस्य जिघत्साया[ः], पिपा[4]सायाः, दंशकमशकवातातपसरीसृपसंस्पर्शानां(णां), परतो दुरुक्तानां, दुरागतानां, वचनपथानां। शारीरिकाणां वेदनानां, दुःखानां, तीव्राणां, खराणां, कटुकानां, अमन आपानां, प्राणहारिणीनां क्षमो भवत्यधिवासनजातीयः। **एवं क्षमो भवति।**

**कथं (सू)सुरतो भवति।** यथापि तन्मैत्रेण काय-कर्म्मणा समन्वागतो भवति। मैत्रेण वाक्कर्म्मणा, [5]मैत्रेण मनस्कर्मणा, शास्तुरन्तिके विज्ञानां च, सब्रह्म-चारिणां, साधारणपरिभोगी च भवत्यपरिभोगी च। भवत्यप्रतिगुप्तभोजी। लाभैर्धार्म्मिकैर्धर्म्मप्रतिलब्धैः, पात्रगतैः, पात्रपर्यापन्नैः शीलसामान्यगतश्च भवति। दृष्टिसामान्य[6]गतश्च। स एभिः षड्भिः संरजनीयै-र्धर्मैः(संरंजनीयैर्धर्मैः) समन्वागतः प्रियकरणैर्गुरुकर-णैरर्थवादकरणैः सुखसंवास्यो भवति। अविहेठनजा-

तीयः । अभिनन्दन्ति चैनं विज्ञाः । सब्रह्मचारिणः । एकव्यवसायः । एवं सू(सु)रतो भवति ।

**कथं पेशलो भवति** । विगतभृकुटिर्भवत्युत्तानमुख-वर्ण्णः, स्मितसाद्धंग[7]मः । पूर्व्वाभिभाषी । प्रियवादी । संग्रहशीलः । आत्तसन्तानः [: ।] एवं पेशलो भवति ।

स एभिधर्मैः समन्वागतो धर्म्मकामो भवति । गुणकामः । न लाभसत्कारकीर्तिश्लोककामः ।

7B—8// न स//[1]मारोपिकया मिथ्यादृष्ट्या समन्वागतो भवति । नाप्यप[वादि]कया[1][।] असन्तं धर्मं न समारोपयति । सन्तं धर्मं नापवदति । स यत्तद्भवति । कथितं काथेयं, चिवा(त्रा)क्षरं, चित्रपदव्यंजनं, लोकायतप्रतिसंयुक्तं । तन्निरर्थकमिति । विदित्वा आरात्परिवर्जयति । [न ते[1]]न दयते, न तेन प्रीयते, तेन चात्मदं[वा[2]] न्यी(ची)वरं धार[2]यति । गृहस्थैः सार्धं, संसर्गं परिवर्जयन्ति(यति) । क्लेशवर्द्धनं [।] आर्यैः सह[सं[2]]सर्गं करोति । ज्ञानविशोधकं [।] न च मित्रकुलानि करोति । प्रतिगृह्णाति । स(ा)मे ततो निदानं भविष्यत्यनेकपर्यायेण व्याक्षेपाद् व्यापारो वा, तेषाम्वा पुर्नाविपरिणामादन्यथीभावादुत्पत्स्यन्ते शोकपरिदेवदुःखदौर्मनस्योपायासा इति । [3] उत्पन्नोत्पन्नांश्च क्लेशोपक्लेशान्नाधिवासयति । प्रजह[ा]ति,

1. Letters damaged by pin-hold, illegible.
2. A separate hand adds this.

विनोदयति, व्यन्तीकरोति। सा (तन्)मे अतो निदानमुत्पद्यते दृष्टधार्मिकं वा दुःखं, साम्परायिकं वेति। श्रद्धोदयं च न विनिपातयति। अच्युतशीलः। अभ्रष्टव्रतः, श्रद्धादेयं परिभुङ्क्ते। न च श्रद्धादेयं प्रतिक्षिपति[1]। न शिक्षां प्रत्याख्याति। आत्मदोषा[4]न्तरस्खलितगवेषी वा भवति। प्रतिच्छन्नकल्याणो विवृतपापकः। परदोषान्तस्खलितेषु नाभोगः संविद्य[ते[2]] चापत्तिर्नापद्यते। जीवितहेतोरपि। आपन्नश्च लघु लघ्वेव यथाधर्मं प्रतिकरोति। इतिकरणीयेषु च दक्षो भवत्यनलसः, स्वयंकारी, न परतः कायपरिचर्यां पर्येषते। बुद्धानां च [5] बुद्धश्रावकाणां च, अचिन्त्यमनुभावं, गंभीरां च देशनामधिमुच्यते। न प्रतिक्षिपति। तथागता एव जनकाः पश्यका (द्रष्टारो) नाहमिति। दृष्ट्वा न च स्वयं दृष्टिपरामर्शस्थायी भवत्यसमंजसग्राही, दुःप्रतिनिःसर्गमंन्त्री[।]स एभिर्गुणैर्युक्त, एवं विहारी, एवं शिक्षमाणः, श्रमणालंकारेणालंकृतः [6]शोभते, तद्यथा कश्चिदेव पुरुषः युवा, मननजातीयः, कामोपभोगी, स्नातानुलिप्तः। अववादवस्तुप्रावृतः। विविधैर्भूषणैरलंकृतः शोभते। तद्यथा हर्षैर्व्वा, केयूरैर्व्वा, अंगुलिमुद्रिकया वा, जातरूपरजत-

1. cp. Ś S, p. 168.
2. MS. omits this.

मालया[वा ।]एवमेव स विविधैः श्रमणालंकारैर्गुणैरलं-
कृतो । भासते, [7]तपति, विरोचते । तस्माच्छ्रमणा-
लंकार इत्युच्यते । अयमुच्यते श्रमणालंकारः ॥

॥ उद्दानं ॥

*स्यादात्मपरसम्पत्तिच्छन्दः शीलेन्द्रियस्तथा ।*
*भोजनं चैव जागर्या संप्रजानद्विहारिता ॥*
*चैव तथा श्रवणचिन्तना (सद्धर्मश्रवणचिन्तना) ।*
*अनन्तरायस्त्यागश्च अलंकारेण पश्चिमः ॥*

*श्रद्धा अशठः अल्पाबाधवीर्यं प्रज्ञा अल्पेच्छता संतुष्टिः सुपोषता [॥]*
*सुभरता धुतप्राणादिकमात्रता क्षान्ति[:] सौरभ्यपेशला ॥*

॥ योगाचारभूमौ श्रावकभूमिसंगृहीतायां
प्रथमं योगस्थानं ॥

# द्वितीयं योगस्थानम्

7A—9// //[2] *लौकिकं चैव वैराग्यं तथा लोकोत्तरेण च।*
*तयोश्चैव हि सम्भारो भूमिर्नैष्कम्यसंश्रिता ॥*

तत्र कति पुद्गला येस्यां नैष्क्रम्यभूमौ यथादेशितायां यथापरिकीर्त्तितायां निष्क्रामन्ति । कथं च पुद्गलानां व्यवस्थानं भवति । कतमदालम्बनं । कतमोववादः । कतमा शिक्षा । कतमे शिक्षानुलोमि[3]का धर्माः । कतमो योगभ्रंशः । कतमे योगाः [।] कतमो मनस्कारः । कति योगाचाराः । कतमद्योगकरणीयं । कतमा योगभावना [।] कतमद्भावनाफलं । कति पुद्गलपर्यायाः । कति माराः । कति मारकर्माणि । कथमारम्भो विफलो भवति ।

तत्र **पुद्गलाः अष्टाविंशतिः**। कतमे अष्टाविंशतिः । तद्यथा मृद्विन्द्रियः । तीक्ष्णेन्द्रिय[4]यः । उन्मदरागः । उन्मेदद्वेषः । उन्मदमोहः । उन्मदमानः । उन्मदवितर्कः । समप्राप्तो, मन्दरजस्कजातीयः । प्रतिपन्नकः[।]फलस्थः । श्रद्धानुसारी । धर्मानुसारी ।

बुद्धाधिमुक्तो, दृष्टिप्राप्तः । कायसाक्षी । सकृद्भव-परमः । कुलंकुलः [।] एकवीचिकः । अन्तरा(य[1]) परिनिर्व्वायी । उपपद्यपरिनिर्व्वायी । साभिसंस्कार-परिनिर्व्वायी । [5] ऊर्ध्वं(र्ध्वं)स्रोता[: ।]समय-विमुक्तः । अकोप्यधर्मा(:[1])प्रज्ञाधिमुक्तः । उभयतो-भागविमुक्तश्चेति ।

**तत्र मृद्विन्द्रियः पुद्गलः कतमः ।** यस्य पुद्गलस्य मृदूनीन्द्रियाणि । धन्धवाहीनि । मन्दवाहीनि । ज्ञेये वस्तुनीति पूर्व्ववत् । स पुनर्द्विविधो वेदितव्यः । आदित एव मृद्विन्द्रियगोत्रः । अपरिभाषि(वि)तेन्द्रि-[6]यश्च ।

**तीक्ष्णेन्द्रियः पुद्गलः कतमः ।** यस्य पुद्गल-स्येन्द्रियाणि अधन्धवाहीनि भवन्ति । अमन्दवाहीनि । ज्ञेये वस्तुनीति पूर्व्ववत् । स पुनर्द्विविधो वेदि-तव्यः । आदित एव तीक्ष्णेन्द्रियगोत्रः । परिभा-वितेन्द्रियश्च ॥

**रागोन्मदः पुद्गलः कतमः ।** येन पुद्-गलेन पूर्व्वमन्यासु जातिषु राग आसेवितो, भावितो, बहुलीकृतः [7]स तेन हेतुना तेन प्रत्ययेनैर्तर्हि रंजनीये वस्तुनि तीव्ररागश्च, भव-त्यायत(न[1])रागश्च । अयमुच्यते रागोन्मदः पुद्गलः ।

---

1. May be deleted.

**द्वेषोन्मदः पुद्गलः** कतमः । येन पुद्गलेन द्वेषः पूर्व्वमन्यासु जातिषु आसेवितो, भावितो, बहुलीकृतः । तेन हेतुना तेन प्रत्ययेनैतर्हि द्वेषणीये वस्तुनि तीव्रद्वेषश्च भवत्यायतद्वेष[8]श्च । अयमुच्यते । द्वेषोन्मदः पुद्गलः ।

**मोहोन्मदः पुद्गलः** कतमः । येन पुद्गलेन पूर्व्वमन्यासु जातिषु मोह आसेवितो, भावितो, बहुलीकृतः । तेन च हेतुना तेन प्रत्ययेन[।]एतर्हि मोहनीये वस्तुनि
7B—9// तीव्रमोहश्च भवत्यायत //[1] मोहश्चायमुच्यते मोहोन्मदः पुद्गलः ।

**मानोन्मदः पुद्गलः** कतमः । येन पुद्गलेन पूर्व्वमन्यासु जातिषु मान आसेवितो, भावितो, बहुलीकृतस्तेन हेतुना तेन प्रत्ययेन[।]एतर्हि मन्यनीये (माननीये)-वस्तुनि तीव्रमानश्च भवत्यायतमानश्च ॥ अयमुच्यते मानोन्मदः पुद्गलः ।

**वितर्कोन्मदः पुद्गलः** कतमः । [2] येन पुद्गलेन पूर्व्वमन्यासु जातिषु वितर्क आसेवितो, भावितो, बहुलीकृतस्तेन च हेतुना तेन च प्रत्ययेन एतर्हि वितर्कस्थानीये वस्तुनि तीव्रवितर्कश्च भवत्यायतवितर्कश्च[।] अयमुच्यते वितर्कोन्मदः । पुद्गलः ॥

**समप्राप्तः पुद्गलः** कतमः । येन पुद्गलेन पूर्व्वमन्यासु जातिषु रागो, द्वेषो, मोहो, मा[3]नो, वितर्को नासेवितो, भावितो, बहुलीकृतो, न चैते धर्मा

आदीनवतो दृष्टाः । विदूषिताः, सन्तीरिताः [।] स तेन हेतुना, तेन च प्रत्ययेन रंजनीये वा वस्तुनि, द्वेषणीये वा वस्तुनि, मन्यनीये (माननीये), वितर्कणीये [वा वस्तुनि][1] न तीव्ररागो भवति । नाप्यायतरागः । न चास्य समुदाचरति रागो, यदुत तेन वस्तु[4]ना[।] यथा राग एवं द्वेषो, मोहो, मानो, वितर्कः । अयमुच्यते समप्राप्तः पुद्गलः ।

**मन्दरजस्कः पुद्गलः** कतमः । येन पुद्गलेन पूर्व्व-मन्यासु जातिषु न राग आसेवितो भवति, बहुलीकृतः । आदीनवतश्च बहुलं दृष्टो भवति । विदूषितः सन्तीरितः । स तेन हेतुना तेन प्रत्ययेनैतर्हि रंजनीये व[5]स्तुनि समवहिते, संमुखीभूते, अधिमात्रे, प्रचुरे, उद्व(उल्ब)णे रज्यं रागमुत्पादयति । मध्ये परीत्ते नैवोत्पादयति । यथा राग एवं द्वेषो, मोहो, मानो, वितर्का(र्को), वेदितव्याः(व्यः) । अयमुच्यते मन्दरजस्कः पुद्गलः ॥

**प्रतिपन्नकः पुद्गलः** [6] कतमः [।] आह । प्रति-पन्नकाः पुद्गलाश्चत्वारः । तद्यथा स्रोत आपत्तिफल-प्रतिपन्नकः । सकृदागामिफलप्रतिपन्नकः । अनागामि-फलप्रतिपन्नकः । अर्हत्त्वफलप्रतिपन्नकः । अयमुच्यते

1. MS. omits this; this has been improvised by us and presumed on the basis of a uniform pattern of the preceding description.

प्रतिपन्नक: पुद्गल:[1] ।।

**फलस्थ पुद्गल:** कतम: । आह । स्रोत आपन्न:[2], सकृदागामी[3],

---

1. cf. Pu. P., p. 22 : कतमो च पुग्गलो पटिपन्नको? चत्तारो मग्गसमङ्गिनो पुग्गला पटिपन्नका, चत्तारो फलसमङ्गिनो पुग्गला फले ठिता ।; cp. Asm., pp. 88-9 : स्रोतापत्तिफल प्रतिपन्नक: कतम: । निर्वेधभागीयेषु पञ्चदशसु दर्शनमार्गचित्तक्षणेषु य: पुद्गल ।· · · ·सकृदागामिफलप्रतिपन्नक: कतम: । भावनामार्गे कामावचराणां पञ्चप्रकाराणां क्लेशानां प्रहाणमार्गे य: पुद्गल: ।।· · · ·अनागामिफलप्रतिपन्नक: कतम: । भावनामार्गे कामावचराणां सप्तमाष्टमानां क्लेशप्रकाराणां प्रहाणमार्गे य: पुद्गल: ।।· · · ·अर्हत्त्वफलप्रतिपन्नक: कतम: । यावद्भावाग्रिकाणामष्टप्रकाराणां क्लेशानां प्रहाणमार्गे य: पुद्गल: ।।; Yaśomitra defines प्रतिपन्नकमार्ग as प्रयोगानन्तर्यविमुक्तिमार्गस्वभाव: प्रतिपन्नकमार्ग:, AKV, p. 388; cp. Pu. P., pp. 27-8; cp. AKV., p. 568; Adv., p. 349 (अर्हत्-); *vide* also, MKV (V), pp. 221-2 sq.
2. cp. Pu. P., p. 27 : तिण्णं संयोजनानं पहानाय पटिपन्नो पुग्गलो सोतापत्ति फलसच्छिकिरियाय पटिपन्नो । यस्स पुग्गलस्स तीणि संयोजनानि पहीनानि— अयं वुच्चति पुग्गलो सोतापन्नो ।; cf. Asm., pp. 88-9 : स्रोत आपन्न: कतम: । षोडशे दर्शनमार्गचित्तक्षणे य: पुद्गल: । दर्शनमार्ग: सम्यक्त्वनियामावक्रान्ति: । धर्माभिसमयेपि स: । कामेष्ववीतराग: पुद्गल: सम्यक्त्वनियाममवक्रामन् स्रोत आपन्नो भवति; see also, Adv., p. 329 sq.; cp. MKV(V), p. 211.31.
3. cf. Pu. P., p. 25 : इधेकच्चो पुग्गलो तिण्णं संयोजनानं परिक्खया रागदोसमोहानं तनुत्ता सकदागामी होति, सकिदेव इमं लोकं आगन्त्वा दुक्खस्सन्तं करोति । अयं वुच्चति पुग्गलो 'सकदागामी'; Asm., p. 89 : यद्भूयो वीतराग: सम्यक्त्वनियाममवक्रामन् सकृदागामी भवति ।· · · ·सकृदागामी कतम: । भावनामार्गे कामावचरस्य षष्ठस्य क्लेश प्रकारस्य प्रहाणमार्गे य: पुद्गल ।· · · · See AK with Vyākhyā and Bhāṣya, VI; MKV(V), p. 212.10 sq.

अनागामी[1], अर्हन्[2] । अयमुच्यते फलस्थः पुद्गलः[3] ॥

1. cf. Pu. P., p. 26 : इधेकच्चो पुग्गलो पञ्चन्नं ओरम्भागियानं संयोजनानं परिक्खया ओपपातिको होति तत्थ परिनिब्बायी अनावत्तिधम्मो तस्मा लोका । अयं वुच्चति पुग्गलो 'अनागामी'; Asm., p. 89 : अनागामी पुद्गलः कतमः । भावनामार्गे कामावचरस्य नवमस्य क्लेशप्रकारस्य प्रहाणमार्गे यः पुद्गलः ॥ यदा सर्वेषां कामावचराणां भावनाप्रहातव्यानां प्रहाणादनागामी भवति ॥ केन कारणेन पञ्चानामवरभागीयानां संयोजनानां प्रहाणादनागामीत्युच्यते । प्रधानसंग्रहमुपादाय ॥ प्राधान्यं किमुपादाय । गत्यवरकारणतां चोपादाय ॥ cf. Pu. P. A., p. 36; AKB, VI.36 d : अनागामी ···कामधात्वनागमनात् । पञ्चानामवरभागीयानां संयोजनानां प्रहाणादित्युच्यते । प्रहाणसंकलनात् ।' अवश्यं द्वे त्रीणि वा पूर्वं प्रहीणानि भवन्ति; cp. also, AKV, p. 564; see, AKB, VI.43 for different kinds of anāgāmins; cp. MKV (V), p. 212-4 sq.
2. cp. Pu. P., p. 28 : यस्स पुग्गलस्स रूपरागो मानो उद्धच्चं अविज्जा अनवसेसा पहीना—अयं वुच्चति पुग्गलो 'अरहा' see, Vsm., VII.22 sq.; VII.24-5 :

   यस्मा नत्थि रहो नाम पापकम्मेसु तादिनो ।
   रहाभावेन तेनेस अरहं ति विस्सुतो ॥ (24) ॥
   आरकत्ता हतत्ता च किलेसारीन सो मुनि ।
   हतसंसारचक्कारो पच्चयादीन चारहो ।
   न रहो करोति पापानि, अरहं तेन वुच्चती ति ॥ (25) ॥;

   cf. Asm., pp. 89-90 : अर्हन् कतमः । भवाग्रिकस्य नवमस्य क्लेशप्रकारस्य प्रहाणमार्गे यः पुद्गलः ॥ यदा त्रैधातुकानां कामावचराणां सर्वक्लेशानां प्रहाणादर्हन् भवति ॥ केन कारणेनोर्ध्वभागीयानां प्रहाणादर्हन्नित्युच्यते । प्रधानसंग्रहमुपादाय । प्रधानसंग्रहः किमुपादाय । विमोक्षोपादानकारणतामुपादाय । उर्ध्वापरित्यागकारणतां चोपादाय ॥, see also, Ada., p. 89 : पंचोर्ध्वभागीयानां संयोजनानां प्रहाणे प्राप्नोत्यर्हत्त्वम्, for different kinds of अर्हन्, see Asm., p. 91, para 1.; cp. also, MKV(V), p. 212.8 sq.
3. See, JPŚ, pp. 139-42; Ada., p. 86; Adv., p. 57 sq.

**श्रद्धानुसारी पुद्गलः कतमः**[1] । यः पुद्गलः परत अव(तोऽव)वादानुशासनीं पर्येषते । तद्बलेन च प्रतिपद्यते । यदुत फलस्याधिगमाय । नो तूद्गृहीतेषु धर्मेषु । पर्यवाप्तेषु, चिन्तितेषु, तुलितेषूपपरीक्षितेषु स्वयमेव[8]शक्तो भवति । प्रतिबलः । तान् धर्मान् भावनाकारेणानुसर्त्तु । नान्यत्र पुद्गलानुसारिण्या प्रज्ञया प्रतिपद्यते । तस्माच्छ्रद्धानुसारीत्युच्यते ॥

**धर्मानुसारी पुद्गलः कतमः** । यत्पु(यः पु)द्गलो यथाश्रुतेषु धर्मेषु, पर्यवाप्तेषु, चिन्तितेषु । तुलितेषूप-
8A—1// परीक्षितेषु, स्वयमेव शक्तो भवति । प्रति//[1]-बलस्तान्धर्मान्भावनाकारेणानुसर्त्तम् ॥ नो . तु परतो[ऽ]ववादानुशासनीम्पर्येषते । यदुत फलस्याधि-गमायायमुच्यते धर्मानुसारी[2] पुद्गलः ।

**श्रद्धाधिमुक्तः[3] पुद्गलः कतमः** । स श्रद्धानुसारी

---

1. cp. Pu. P., p. 25 : यस्स पुग्गलस्स सोतापत्तिफलसच्छिकिरियाय पटिपन्नस्स सद्धिन्द्रियं अधिमत्तं होति, सद्धावाहिं सद्धापुब्बङ्गमं अरियमग्गं भावेति । अयं वुच्चति पुग्गलो सद्धानुसारी ।; Asm., p. 88 : श्रद्धानुसारी पुद्गलः कतमः । संभृतसम्भारो मृद्विन्द्रियः परोपदेशमनुस्मृत्य यः सत्याभिसमयाय प्रयुज्यते ॥

2. cp. यस्स पुग्गलस्स सोतापत्तिफलसच्छिकिरियाय पटिपन्नस्स पञ्ञिन्द्रियं अधिमत्तं होति, पञ्ञावाहिं पञ्ञापुब्बङ्गमं अरियमग्गं भावेति । अयं वुच्चति पुग्गलो धम्मानुसारी । Pu. P., p. 24; Asm., p. 88 : धर्मानुसारी कतमः । संभृतसंभारस्तीक्ष्णेन्द्रियः स्वयमेव सत्याधिपतेयं धर्ममनुस्मृत्य यः सत्याभिसमयाय प्रयुज्यते ॥

3. cp. इधेकच्चो पुग्गलो 'इदं दुक्खं' ति यथाभूतं पजानाति, 'अयं दुक्खसमुदयो' ति यथाभूतं पजानाति, 'अयं दुक्खनिरोधो' ति · · · , 'अयं दुक्खनिरोधगामिनी पटि-

*(contd. on p. 176)*

पुद्गलः । यस्मिन्समये श्रामण्य [भाव[1]]मधिगच्छति । स्पर्शयति (स्पृशति) । साक्षीकरोति । परतोववादानु-[2]शासनीमार्गस्य तस्मिन्समये श्रद्धाधिमुक्त इत्युच्यते ॥

**दृष्टिप्राप्तः[2] पुद्गलः** कतमः । आह [।] स एव धर्मानुसारी पुद्गलो यस्मिन् समये श्रामण्यफलमधि-गच्छति । स्पर्शयति (स्पृशति) । साक्षीकरोति ।

---

*(contd. from p. 175)*

पदा' ति यथाभूतं पजानाति । तथागतप्पवेदिता चस्स धम्मा पञ्ञाय वोदिट्ठा होन्ति वोचरिता । पञ्ञाय चस्स दिस्वा एकच्चे आसवा परिक्खीणा होन्ति, नो च खो यथा दिट्ठिप्पत्तस्स । अयं वुच्चति पुग्गलो 'सद्धाविमुत्तो' । Pu. P., p. 24; cf. also, ibid, सोतापत्तिफलसच्छिकिरियाय पटिपन्नो पुग्गलो सद्धानुसारी फले ठितो सद्धाविमुत्तो (p. 24); cp. Asm., p. 88 : श्रद्धाधिमुक्तः कतमः । फलकाले श्रद्धानुसारी यः पुद्गलः ।; cp. also, Pu. P. A., p. 32 : सद्धाविमुत्तनिद्देसे नो च यथा दिट्ठिप्पत्तस्सा ति यथा दिट्ठिप्पत्तस्स आसवा परिक्खीणा, न एवं सद्धाविमुत्तस्सा ति अत्थो । किं पन नेसं किलेसप्पहाने नानत्तं अत्थीति ? अथ कस्मा सद्धाविमुक्तो दिट्ठिप्पत्तं न पापुणाती ति ? अनागमनीयनानत्तेन । दिट्ठिप्पत्तो···अप्पदुक्खेन अप्पकसिरेन···सद्धाविमुत्तो पन दुक्खेन कसिरेन···किलेसे विक्खम्भेतुं सक्कोति । तस्मा दिट्ठिप्पत्तं न पापुणाति । अपि च नेसं पञ्ञाय पि नानत्तं अत्थि येव । दिट्ठिप्पत्तस्स हि उपरितिण्णं मग्गानं विपस्सनाञाणं तिक्खं···सद्धाविमुत्तस्स···नो तिक्खं···· ।

1. Letters damaged by pin-hold, restored by us.
2. Pu. P., p. 24 : कतमो च पुग्गलो दिट्ठिप्पत्तो ? इधेकच्चो पुग्गलो इदं दुक्खं ति···समुदयो ति···निरोधोति···पटिपदा ति यथाभूतं पजानाति, तथागतप्पवेदिता च' स्स धम्मा पञ्ञाय वोदिट्ठा होन्ति वोचरिता, पञ्ञाय च'स्स दिस्वा एकच्चे आसवा परिक्खीणा होन्ति···अयं वुच्चति पुग्गलो दिट्ठिप्पत्तो ।; see above, f.n. 3; Asm., p. 88 : दृष्टिप्राप्तः कतमः । फलकाले धर्मानुसारी यः पुद्गलः ॥; Adv., p. 345 : तत्र दृष्टिप्राप्तः उपपत्त्यभिलाष-समापत्तिप्रियताभ्याम् ॥

परतोववादानुशासनीमार्गस्य तस्मिन्समये दृष्टिप्राप्त इत्युच्यते ॥

**कायसाक्षी पुद्गलः**[1] कतमः [।] [3]योयं पुद्गलः । अनुलोमप्रतिलोममष्टौ विमोक्षान्समापद्यते । व्युत्तिष्ठते च, कायेन च साक्षात्कृत्य[बहुलं[2]] विहरति, न च सर्व्वेण सर्व्वमास्रवक्षयमनुप्राप्नोत्ययमुच्यते कायसाक्षी पुद्गलः ॥

**सप्तकृद्भवपरमः**[3] **पुद्गलः** कतमः । योयं पुद्गलस्त्रयाणां संयोजनानां प्रहाणात्सत्कायदृष्टेः, शीलव्र[4]तपरामर्शस्य, विचिकित्सायाः स्रोत आपन्नो भवति । अविनिपातधर्मा, नियतः संबोधिपरायणः । सप्तकृद्भवपरमः । सप्तकृत्वा देवांश्च, मनुष्यांश्च,

---

1. इधेकच्चो पुग्गलो अट्ठविमोक्खे कायेन फुसित्वा विहरति, पञ्ञाय चस्स दिस्वा एकच्चे आसवा परिक्खीणा होन्ति । अयं वुच्चति पुग्गलो 'कायसक्खी' ।, Pu. P., p. 24; Asm., p. 88 : कायसाक्षी कतमः । शैक्षः अष्टविमोक्षध्यायी यः पुद्गलः ।; Ad., Vs. 432ab : यो निरोधसमापत्तिमश्नुते कायसाक्ष्यसौ ।; Adv., p. 348 : यः खलुनिरोधसमापत्तिलाभ्यनागामी स कायसाक्षीत्युच्यते; see also, p. 349; Aaa., p. 493 : कायसाक्षीति अर्हत्त्वप्रतिपन्नकोऽनागामी निरोधलामी कायसाक्षी । तद्वत् बुद्धत्वप्रतिपन्नकत्वेनार्यमैत्रेयः कायसाक्षी ।; Ada, p. 86 : अष्टभूमिषु वैराग्याल्लभते निरोधसमापत्तिमित्युच्यते कायसाक्षी अनागामी ।; see A. N., IV.85 sq. (Kāyasakkhisutta); A. N. A., IV.206; AKV and AKB ad A. K. VI.43.
2. Added by a separate hand in a footnote.
3. cf. Asm., p. 90 : सप्तकृद्भवपरमः कतमः । स्रोत आपन्न एव पुद्गलः सप्तकृत्वोऽपि मिश्रोमिश्रदेवमनुष्येषु भवात् संसृत्य यो दुःखस्यान्तमनुप्राप्नोति ।

संबाध्य, संसृत्य दुःखस्यान्तं करोति । उभावपि स्रोत आपन्नौ पुद्गलौ वेदितव्यौ ।

**तत्रैकवीचिकः**[1] **पुद्गलः** कतमः । यस्य सकृदागामिनः [5]पुद्गलस्य अनागामिफलप्रतिपन्नकस्य कामावचराणां क्लेशानामधिमात्रमध्यदेशाः प्रहीणा भवन्ति । मृदुकाश्चैकावशिष्टा (चैका अवशिष्टा) भवन्ति । सकृच्च कामावचरमेव भवमभिनिर्वृत्य तत्रैव परिनिर्वाति । स पुनः सकृदागच्छतीमं लोकमयमुच्यते एकवीचिकः ।।

**अन्तरापरिनिर्वायी**[2] **पुद्गलः** कतमः । आह ।

---

1. एकवीचिकः कतमः । सकृदागामी देवेष्वेव यो देवेष्वेव दुःखस्यान्तमनुप्राप्नोति । ibid, p. 90.

2. अन्तरापरिनिर्वायी कतमः । उपपत्तिसंयोजने प्रहीणे अभिनिर्वृत्तिसंयोजने अप्रहीणे अन्तराभवमभिनिर्वर्त्तयन्नेव यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति अभिनिर्वृत्तो वा अन्तराभवे उपपत्तिभवगमनाय चेतयन्नेव यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । अभिसंचेतयित्वा उपपत्तिभवमभिप्रस्थितः भवानुपपत्तिच्छन्दं यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । Asm., p. 90; cp. Adv., p. 341; AK. VI.38, AKV, p. 561 sq.; for the three kinds of antarāparinirvāyin, a kind of the anāgāmin pudgala, see AKV, p. 563; AK. VI.40; Yasomitra remarks (AKV, III.12, p. 24) : देवानामन्तिकं देवसमीपं गतस्यान्तरे यः क्लेशान् प्रजहाति सोऽन्तरापरिनिर्वायी । स पुनर्धातुगतो वा परिनिर्वाति यः क्लेशबीजावस्थायामुपपन्नमात्रः असमुदाचारक्लेश इत्यर्थः । संज्ञागतो विषयसंज्ञासमुदाचारावस्थायां यः परिनिर्वाति । अयमपि संज्ञागतान्चिरतरेण परिनिर्वाति । तेन त्रिविधो भवत्यन्तरापरिनिर्वायी यथोक्तेन दृष्टान्तत्रयेण । प्रथमो वा निकायसभागपरिग्रहं कृत्वा जातमात्र इत्यर्थः । यं प्रत्येष परीत्तः शकलिकाग्निरिति दृष्टान्तः । द्वितीयो देवसमृद्धिं चानुभूय

(contd. on p. 179)

[6]अन्तरापरिनिर्व्वायिण: पुद्गलास्त्रय: । एकोन्तरापरिनिर्व्वायी पुद्गल: । च्युतमात्र एवान्तराभवाभिनिर्वृत्तिकाले अन्तराभवमभिनिर्व्वंतयत्यभिनिर्वृत्ते[:]समकालमेव परिनिर्व्वाति । तद्यथा परीत्त: शकलिकाग्निरुत्पन्नैव(न्न एव)परिनिर्व्वाति । द्वितीयोन्तरापरिनिर्व्वायी पुद्गल: । अन्तरा[1]भवमभि

---

(contd. from p. 178)
परिनिर्वातीति । यं प्रत्येषं दृष्टान्त: । तद्यथाऽयस्प्रपाटिकेति । तृतीयो धर्मसंगीतिमनुप्रविश्य धर्मसांकथ्यमनुप्रविश्य परिनिर्वाति । यं प्रत्येष दृष्टान्त: । तद्यथाऽयस्प्रपाटिका उत्प्लुत्य पृथिव्यामपतितैव परिनिर्वायात् । तदेवं विनाप्यन्तराभवेन · · · · अन्तरापरिनिर्वायी भवति । · · · ·; see also, pp. 22-3; p. 562 sq.; for other references, see Adv., pp. 341-2.

1. Asaṅga remarks : अन्तराभव: कामधातौ रूपधातौ चोपपद्यमानस्यारूप्यधातोश्च्यवमानस्य । स च मनोमयो गन्धर्व इत्यपि । परं सप्ताहं तिष्ठत्यन्तरेण च्यवते । एकदा च व्यावर्त्तते । तत्रस्थश्च कर्मोपचिनोति सूभागांश्च सत्त्वान् पश्यति । तत्र चोपपद्यते तदाकृतिरप्रतिहतगतिश्च । ऋद्धिमानिव चाशुगामी उपपत्यायतने प्रतिहन्यते । उपपत्त्यायतने तुलावनामोन्नामयोगेन च्यवते प्रतिसन्धि च बध्नाति । अन्तरा भवस्थश्चोपपत्यायतने रागमुत्पादयति यदन्यश्च क्लेश: प्रत्ययो भवति । सह रागेणान्तराभवो निरुध्यते कललं च सविज्ञानकमुत्पद्यते ।। स च विपाकस्तत ऊर्ध्वमिन्द्रियाभिनिर्वृत्ति: यथा प्रतीत्यसमुत्पादे चतसृष्वायोनिषु । अण्डजायां जरायुजानां संस्वेदजायामुपपादुकाया च ।। Asm., pp. 42-3; see also YBŚ, (I, pp. 18-21) for further details; Kathāvatthu with commentary, VIII.2; Ada., p. 42; AK, III.10 :

मृत्यूपपत्तिभवयोरन्तरा भवतीह य: ।
गम्यदेशानुपेतत्वान्नोपपन्नोऽन्तराभव: ।।

Milinda, p. 132; AK, III.11-5, 40; IV.53; VI.34; cp. also Bodhi, p. 269.

[7] निर्व्वर्त्तयत्यभिनिर्वृत्तेः समकाला(कालम)न्तरा भवेत्तत्रस्थ एव कालान्तरेण परिनिर्व्वाति। नो तु येनोपपत्तिभवस्तेनास्याप्युपरतो भवति। तद्यथा अशु-
8B—1// भानाम्वा //[1] अयःस्थालानाम्वा, दीप्ताग्निसं-
प्रतप्तानामयोघनैर्हन्यमानानामयःप्रपाटिका उत्पतत्येव- (वं)परिनिर्व्वाति। तृतीयोन्तरापरिनिर्व्वायि(यी)- पुद्गलः अन्तराभवमभिनिर्व्वर्त्त्य येनोपपत्ति भवस्तेनोपनमति। उपनतश्च पुनरनुपपन्न एव परिनिर्व्वाति। तद्यथा। अयस्प्रपाटिका उत्पत्य पृथिव्याम्। अपतितैवम[2]भिनिर्व्वाति। त इमे त्रयोऽन्तराभवपरिनिर्व्वायिणः पुद्गलाः एकत्यमभि संक्षिप्य अन्तरापरिनिर्व्वायी पुद्गल इत्युच्यते।

**उपपद्यपरिनिर्व्वायी पुद्गलः** कतमः[1]। य उप- पन्नमात्र एव परिनिर्व्वाति॥

**अनभिसंस्कारपरिनिर्व्वायी पुद्गलः कतमः।** योनभिसंस्कारेणाप्रयत्नेनाखेदेन मार्गं संमुखीकृत्य

---

1. cp. उपपद्यपरिनिर्वायी कतमः। उभयसंयोजने अप्रहीणे रूपधातावुपपन्नमात्र एव यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति।, Asm., p. 90; AKV, III, p. 24 : ····उपपद्यपरिनिर्वायी पुनः प्रकर्षयुक्तां सङ्गीतिमनुप्रविश्य परिनिर्वातीति। प्रकर्षयोगादुत्पत्त्यर्थो भवतीत्यभिप्रायः।····आयुषो बहु क्षयित्वा परिनिर्वातीति।, see also, p. 23 : पञ्चानामवरभागीयानां संयोजनानां प्रहाणादुपपद्यपरिनिर्वायी भवति; there are three kinds of Upapadyaparinirvāyī-pudgala, see AKV, p. 563; AKB, VI.37 : उपपद्यपरिनिर्वायी य उपपन्नमात्रो न चिरात् परिनिर्वात्यभियुक्तवाहिमार्गत्वात्।

तत्रोपपन्नः परिनिर्व्वात्ययमुच्यते अनभिसंस्कारपरिनिर्व्वायी पुद्गलः[1] ।

**साभिसंस्कारपरिनिर्व्वायी पुद्गलः**[2] कतमः । योभिसंस्कारेण प्रयत्नेन खेदमार्गं संमुखीकृत्य तत्रोपपन्नः परिनिर्व्वात्ययमुच्यते साभिसंस्कारपरिनिर्व्वायी पुद्गलः ॥

**ऊर्ध्वस्रोताः पुद्गलः कतमः**[3] । यः पुद्गलो-

1. अनभिसंस्कारपरिनिर्वायी कतमः । उपपन्नः अनभिसंस्कारेण यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । Asm., p. 90; cf. AKB, VI.37 : अनभिसंस्कारपरिनिर्वायी त्वनभिसंस्कारेणाभियोगवाहिमार्गाभावात्; cf. Pu. P., p. 26 : इधेकच्चो पुग्गलो पञ्चन्नं ओरम्भागियानं संयोजनानं परिक्खया ओपपातिको होति तत्थ परिनिब्बायी अनावत्तिधम्मो तस्मा लोका । सो असङ्खारेन अरियमग्गं सञ्जनेति उपरिट्ठिमानं संयोजनानं पहानाय । अयं वुच्चति पुग्गलो 'असङ्खारपरिनिब्बायी ।'; see, Pu. P. A., p. 36.
2. Pu. P., p. 26; AKB, VI.37 : साभिसंस्कारं परिनिर्वात्यभियुक्तावाहिमार्गत्वात्; cp., AKV, p. 559; अभिसंस्कारपरिनिर्वायी कतमः । उपपन्नोभिसंस्कारेण यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । Asm., p. 90.
3. ऊर्ध्वस्रोताः कतमः । उपपन्नो रूपावचराणां भूमौ भूमौ यावदकनिष्ठगान् प्रविश्य तत्रानास्रवमार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । पुनः कश्चिद्यावद् भवाग्रान्मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । अपि च व्यवकीर्णभावितस्य चतुर्थस्य ध्यानस्य पञ्चप्रकाराः प्रभेदाः । मृदुपरिभावितं मध्यपरिभावितमधिमात्रपरिभावितमधिमात्राधिमात्रपरिभावितमध्याधिमात्राधिमात्रपरिभावितं च । तैः व्यवकीर्णभावितस्य चतुर्थध्यानस्य पञ्चप्रभेदैः यथाक्रमं पञ्चसु शुद्धावासेषूपपत्तिः ॥ Asm., pp. 90-1; इधेकच्चो पुग्गलो पञ्चन्नं ओरम्भागियानं संयोजनानं परिक्खया ओपपातिको होति तत्थ परिनिब्बायी अनावत्तिधम्मो तस्मा लोका । सो अविहा चुतो अतप्पं गच्छति, अतप्पा चुतो सुदस्सं

*(contd. on p. 182)*

नागा[4]मी । प्रथमे ध्याने उपपन्नः स न तत्रस्थ एव परिनिर्व्वाति । अपितु तस्माच्च्यवित्वा उत्तरोत्तरमभिनिर्व्वर्त्तयभ्य(न्या)वदकनिष्ठान्वा देवान्गच्छति । नैव संज्ञा ।(।) नासंज्ञायतनाद्वा । अयमुच्यते उर्ध्वस्रोताः पुद्गलः ।

**समयविमुक्तः**[1] **पुद्गलः** कतमः । यो मृद्विन्द्रियगात्रः (गोत्रः) पुद्गलः लौकिकेभ्यो[5]दृष्टधर्मसुखविहारेभ्यः परिहीयते । चेतयति वा मरणाय । अनुरक्षते वा विमुक्तिमत्यर्थप्रमादभयापन्नयुक्तो भवति । यदुत एतामेव परिहाणिमधिपर्ति कृत्वा तन्मात्रो वास्य कुशलपक्षो भवति । नो तु तेषां तेषां रात्रिंदिवसानां क्षणलवमुहूर्त्ताना(णा)मत्ययादत्यर्थं विशेषाय परैति । [6] यावन्न तीव्रमभियोगं करोति । अयमुच्यते समयविमुक्तः पुद्गलः ।।

---

*(contd. from p. 181)*

गच्छति, सुदस्सा चुतो सुदस्सि गच्छति, सुदस्सिया चुतो अकनिट्ठं गच्छति, अकनिट्ठे अरियमग्गं सञ्जनेति । उपरिट्ठिमानं संयोजनानं पहानाय । अयं वुच्चति पुग्गलो 'उद्धं सोतो अकनिट्ठगामी ।' Pu. P., p. 27; see, AKB, VI.37 (quoted in Adv., p. 339, f.n. 2).

1. cf., Pu. P., p. 19 : इधेकच्चो पुग्गलो कालेन कालं समयेन समयं अट्ठ विमोक्खे कायेन फुसित्वा विहरति, पञ्ञाय चस्स दिस्वा एकच्चे आसवा परिक्खीणा होन्ति । अयं वुच्चति पुग्गलो 'समयविमुत्तो' ।; cf. Adv., p. 59; according to Buddhaghosa, the srotāpanna, sakṛdāgāmī and the anāgāmī pudgalas are named as "Samayavimukta", Pu. P. A., p. 21.

**अकोप्यधर्मा**[1] **पुद्गलः** कतमः । एतद्विपर्ययेणा[को[2]]प्यधर्मा पुद्गलो वेदितव्यः ॥

**प्रज्ञाविमुक्तः पुद्गल** कतमः[3] । यः पुद्गलः सर्व्वेण सर्व्वमास्रवक्षयमनुप्राप्नोति । नो त्वष्टौ विमोक्षान् कायेन साक्षात्कृत्योपसम्पद्य विहरति । [7] अयमुच्यते प्रज्ञाविमुक्ति(क्तः) पुद्गलः [।]

[**उभयतोभागविमुक्तः पुद्गलः**[4]] कतमः । यः पुद्गल सर्व्वेण सर्व्वमास्रवक्षयमनु प्राप्नोति । अष्टौ
8A—2// विमोक्षान्कायेनोपसम्पद्य विहरति । //[1] तस्य क्लेशावरणाच्च चित्तं मुक्तं भवति । विमोक्षावरणाच्च[ायमुच्य[5]]ते उभयतोभागविमुक्तः पुद्गलः ॥[6]

---

1. cf. कतमो च पुग्गलो अकुप्पधम्मो ? इधेकच्चो पुग्गलो लाभी होति रूपसहगतानं वा समापत्तीनं । सो च खो निकामलाभी होति अकिच्छलाभी अकसिरलाभी, यत्थिच्छकं यदिच्छकं यावतिच्छकं समापज्जति पि वुट्ठाति पि । अट्ठानमेतं अनवकासो यं तस्स पुग्गलस्स पमादमागम्म ता समापत्तियो कुप्पेय्युं । अयं वुच्चति पुग्गलो 'अकुप्पधम्मो' । सब्बेपि अरियपुग्गला अरिये विमोक्खे अकुप्पधम्मा । Pu. Pa., pp. 19-20.
2. Added by a separate hand, illegible.
3. cf. कतमो पुग्गलो पञ्ञाविमुत्तो ? इधेकच्चो पुग्गलो न हेव खो अट्ठविमोक्खे कायेन फुसित्वा विहरति, पञ्ञाय चस्स दिस्वा आसवा परिक्खीणा होन्ति । अयं वुच्चति पुग्गलो 'पञ्ञाविमुत्तो', ibid, pp. 23, 110, 108.
4. Missing in the MS., reconstructed by us.
5. Letters damaged by pin-hold.
6. कतमो च पुग्गलो उभतोभागविमुत्तो ? इधेकच्चो पुग्गलो अट्ठविमोक्खे कायेन फुसित्वा विहरति पञ्ञाय चस्स दिस्वा आसवा परिक्खीणा होन्ति । अयं वुच्चति पुग्गलो उभतोभागविमुत्तो ।, ibid, p. 108.

**पुद्गलव्यवस्थानं कतमत्** ।[1] एकादशभिः प्रभेदैः पुद्गलव्यवस्थानं वेदितव्यम् । कतमैरेकादशभिस्तद्यथा— इन्द्रियप्रभेदेन, निकायप्रभेदेन, चरितप्रभेदेन [प्रणिधान-प्रभेदेन प्रप्रिपत्प्रभेदेन मार्गफल प्रभेदेन[2]] प्रयोगप्रभेदेन । समापत्तिप्रभेदेन उपपत्तिप्रभेदेन परिहाणि[2]प्रभेदेना-वरणप्रभेदेन च ॥

**इन्द्रियप्रभेदेन तावत्** । **मृद्विन्द्रियस्ती (यती) क्ष्णे-न्द्रियपुद्गलयोर्व्यवस्थानं ॥**

**निकायप्रभेदेन** सप्तविधपुद्गलव्यवस्थानं । भिक्षु[र्]भिक्षुणी, शिक्षमाणा[श्रामणेरः[2]]श्रामणेरी उपासक उपासिका च ॥

तत्र **चरितप्रभेदेन** सप्तानां पुद्गलानां व्यवस्थानं । योयं रागोन्मदः पुद्गलः स रागचरितः [।] यो द्वेषोन्मदः स द्वेषच[3]रितः । यो मोहोन्मदः स मोह-चरितः । यो मानोन्मदः स मानचरितः । यो वितर्कोन्मदः स वितर्कचरितः । यः समप्राप्तः सम-भागचरितः । यो मन्दरजस्कः सो[मन्दचरितो[2]] वेदितव्यः ।[3]

---

1. In the Asm. (p. 86), Asaṅga enumerates only seven kinds of pudgalavyavasthāna, i.e., according to राग-चरितप्रभेद, निर्याणप्रभेद, आधारप्रभेद, प्रयोगप्रभेद, फलप्रभेद, धातुप्रभेद and चर्याप्रभेद.

2. Added by a separate hand in a footnote.

3. See, Asm., pp. 86-7.

**तत्र रागचरितस्य पुद्गलस्य कतमानि लिंगानि ।** इह रागचरितः पुद्गलः परीत्ते सर्व्वनिहीने रंजनीये वस्तुनि । [4]घनमधिमात्रं रागपर्यवस्थानमुत्पादयति । कः पुनर्वादो मध्यप्रणीते [।] तच्च पुन[र]रागपर्यवस्थानं संतत्या चिरकालमवस्थापयति । दीर्घकालमनुबद्धो भवति(।) तेन पर्यवस्थानेन, रंजनीयैर्धर्मैरभिभूयते । नो तु शक्तो[अ]तिरंजनीयान्धर्मानभिभवितुं [।] स्निग्धेन्द्रियश्च भवत्यखरेन्द्रियः । कर्कशेन्द्रियः, अपरुद्धेन्द्रियः । नात्यर्थं परेषां[5]विहेठनजातीयो यदुत कायेन, वाचा दुर्विवेज्यश्च भवति, दुःसंवेज्यश्च । हीनाधिमुक्तिकश्च भवति । दृढकर्मान्तः । स्थिरकर्मान्तः । दृढव्रतः । स्थिरव्रतः । महिष्ठश्च भवत्युपकरणेषु परिष्कारेषु लोलुपजातीयस्तद्गुरुकश्च, सौमनस्यबहुलश्च भवत्यानन्दीबहुलो विगतभृकुटिरुत्तानमुखवर्ण्णः, स्मितपूर्व्वंगम इत्येवंभागीयानि रागचारि[6]तस्य पुद्गलस्य लिंगानि वेदितव्यानि ।

**द्वेषचरितस्य पुद्गलस्य लिंगानि कतमानि ।** इह द्वेषचरितः पुद्गलः । द्वेषणीये वस्तुनि परीत्तेन प्रतिघवस्तुनिमित्तेन घनं, प्रभूतं प्रतिघपर्यवस्थानमुत्पादयति । कः पुनर्व्वादो मध्य[ा]धिमात्रे(ण) [।] तस्य च प्रतिघपर्यवस्थानस्य दीर्घकालं सन्ततिमवस्थापयति । चिरकालमनुबद्धो भवति । प्र[7]तिघपर्यवस्थानेन । स द्वेषणीयैर्धर्मैरभिभूयते । नो तु द्वेषणीयान्धर्मान्छक्नो-

(ञ्छक्नो)ति अभिभवितुं। रुक्षेन्द्रियश्च भवति। खरेन्द्रियः, कर्कशेन्द्रियः परुषेन्द्रियश्च भवत्यत्यर्थं परेषां विहेठनजातीयो भवति। यदुत कायेन, वाचा। सुवि-वेन्य(ज्य)श्च भवति। सुसंवेज्यः। ध्वाङ्क्षो भवति मुखरः। प्रगल्भः अनधिमुक्तिबहुलः। न दृढकर्मान्तो, न[8]स्थिरकर्मान्तः। न दृढव्रतो, न स्थिरव्रतः। दौर्मनस्यबहुलश्च भवत्युपायासबहुलः। अक्षमो भवत्य-महिष्ठः। विलोमनजातीयः। अप्रदक्षिणग्राही
8B—2// दुःप्रत्यानेय //[1] जातीय उपनाहबहुलः। क्रूराशंस-श्चण्डश्च भवत्यादा[यी[1]] प्रत्यक्षरवादी सोऽल्पमात्र-मप्युक्तः सन्नभिषज्यते। कुप्यति। व्यापद्यते। मद्गु[:]प्रतितिष्ठति। कोपं संज[न[2]]यति। [वि]-कृतभृकुटिश्च भवति। अनुत्तानमुखवर्ण्ण[:]परसम्प-त्तिद्वेष्टा, ईर्ष्याबहुल इत्येवंभागीयानि[द्वेष[1]]चरितस्य पुद्गलस्य लिङ्गानि वेदितव्यानि॥

तत्र कतमानि मोह[2]चरितस्य पुद्गलस्य लिङ्गानि। इह [मोह[3]]चरितः पुद्गलः मोहस्थानीये वस्तुनि परीत्तं, घनं, प्रभूतं मोहपर्यवस्थानमुत्पादयति। प्रागेव मध्याधिमात्रे, दृढं च कालं तस्य मोहपर्यव-स्थानस्य सन्ततिमवस्थापयति। तेन चानुबद्धो भवति।

---

1. Letter(s) damaged by pin-hold, restored by us.
2. MS. omits this.
3. Added by a separate hand.

स मोहनीयैर्धर्मैरभिभूयते । नो तु मोहनीयान् धर्मांच्छ-क्नोत्यभिभवितुं (धर्माञ्छक्नोत्यभिभवितुं) । व्द्धे-(धन्धे?)न्द्रियश्च भवति । जडे[3]न्द्रियश्च भवति । मत्तेन्द्रियश्च, शिथिलकायकर्यान्त (न्तो) दुश्चिन्तित-चिन्ती, दुर्भाषितभाषी, दुष्कृतकर्मकारी, अलसो[ ऽ ]-नुत्थानसम्पन्नः । मन्दभागी, दुर्मेधो (धः) । मुषित-स्मृतिः । असंप्रजानद्विहारी । वामग्राही, दुर्विवेज्यो, दुःसंवेज्यो, हीनाधिमुक्तिकः । जात एडमूको हस्त-संबाधिकः । अप्रतिबलः । सुभाषितदुर्भाषितानाम-र्थमा[4]ज्ञातुं प्रत्यय (प?) हायश्च भवति । परहायः परप्रणेय इत्येवं भागीयानि मोहचरितस्य पुद्गलस्य लिंगानि वेदितव्यानि ॥

**तत्र कतमानि मानचरितस्य पुद्गलस्य लिंगानि ।** इह मानचरितः पुद्गलो मानस्थानीये वस्तुनि परीत्तेपि घनं मानपर्यवस्थानमुत्पादयति । कः पुनर्व्वादो मध्याधिमात्रे [।] तस्य च मानपर्यवस्थानस्य [5]दीर्घकालं सन्ततिमवस्थापयति । तेन चानुबद्धो भवति । [कत-मानि मानचरितस्य पुद्गलस्य लिंगानि [।] इह मानचरितः पुद्गलः मानस्थानीये वस्तुनि परीत्तेपि घनं मानपर्यवस्थानमुत्पादयति कः पुनर्व्वादो मध्याधि-मात्रे । तस्य मानपर्यवस्थानस्य दीर्घकालं सन्ततिमव-स्थापयति । तेन चानुबद्धो भवति[1]] स मानस्थानी[6]-

1. Repetition, should be omitted.

यैर्धर्मैरभिभूयते । नो तु मानस्थानीयान्धर्माञ्छक्नोत्य-भिभवितुं । उद्धतेन्द्रियश्च भवत्युन्नतेन्द्रियश्चो[न्नतेन्द्रि-यश्च[1]] कायमण्डनानुयुक्तश्च भवत्यधिमात्रमुन्नताञ्च वाचं भाषते, नावनतां, सातापिकगुरुस्थानीयानां च न कालेन कालं यथारूपामपचितिं कर्ता भवति । स्तब्धो भवति । अप्रणतकायो नाभि[7] वादनवन्दन-प्रत्युत्थानानां जालिसामीचीकर्मशील, आत्मप्रग्राहको भवत्यात्मोत्कर्षो परपंसकः । लाभकामः सत्कारकामः कीर्तिशब्दश्लोककामः । उत्प्लावनाभाण्डोनुविवेध्यश्च-(ज्यश्च) भवति । दुःसंवेज्य उदाराधिमुक्तिश्च भवति। मन्दकारुण्यः [।]अधिमात्रं चात्मसत्त्वजीवपो[षपु[2]]-रुषपुद्गलदृष्टिमन्युबहलो भवति । उपनाही चेत्येवं[8]-भागीयानि मानचरितस्य पुद्गलस्य लिंगानि वेदितव्यानि ॥

**तत्र कतमानि वितर्कचरितस्य पुद्गलस्य**
8A—3// **लिंगानि ।** इह वितर्कचरितः पुद्गलः वितर्क//[1] स्थानीये वस्तुनि परीत्तेपि घनपर्यवस्थानमुत्पादयति । तच्च पर्यवस्थानं दीर्घकालमवस्थापयति । तेन चानुबद्धो भवति । स वितर्कस्थानीयैर्धर्मैरभिभूयते । नो तु वितर्कस्थानीयान् धर्मां(र्माञ्)छक्नोत्यभि-भवितुं । अस्थिरेन्द्रियश्च भवति । चपलेन्द्रियः ।

1. Repetition, should be omitted.
2. Added by a separate hand.

त्रं (चं) चलेन्द्रियः । व्याकुलेन्द्रियः । [अस्थिर[1]] कायकर्मान्तः [।] छ (दु) रितवाक्कर्मान्ती, दुर्विवेज्यो दुःसं [2] वेज्यः, प्रपंचारामः प्रपंचरतः । कांक्षाबहुलो, विचिकित्साबहुलः । छन्दिकश्च भवत्यस्थिरव्रतः । अनिश्चितव्रतः । अस्थिरकर्मान्तः [।] अनिश्चितकर्मान्तः [।] शंकाबहुलः, प्रमुषितस्मृतिः । विवेकानभिरतो, विक्षेपबहुलः । लोकचित्रेषु छन्दरागानुसृतः [।] दक्षोनलस इत्येवं भागीयानि वितर्कचरितस्य पुद्गलस्य लिंगा [3] नि वेदितव्यानि ॥ इदं चरितप्रभेदेन पुद्गलव्यवस्थानं वेदितव्यम् ॥

**तत्र प्रणिधानप्रभेदेन पुद्गलव्यवस्थानं ।** अस्ति पुद्गलः श्रावकयाने कृतप्रणिधानः [।] अस्ति प्रत्येकबुद्धयाने [।] अस्ति महायाने [।] तत्र योयं पुद्गलः । श्रावकयाने कृतप्रणिधानः सम्यक्छ्रावकगोत्रः स्यात्प्रत्येकबुद्धगोत्रः । स्यान्महायानगोत्रः । तत्र [4]-योयं पुद्गलः प्रत्येकायां बोधौ कृतप्रणिधानः सोपि स्यात्प्रत्येकबुद्धगोत्रः, स्याच्छ्रावकगोत्रः, स्यान्महायानगोत्रः [।] तत्र योयं पुद्गलो महायाने कृतप्रणिधानः सोपि स्याछ्रावकगोत्रः, स्यात्प्रत्येकबुद्धगोत्रः, स्यान्महायानगोत्रः । तत्र योयं श्रावकगोत्रः पुद्गलः प्रत्येकयाम्बोधौ, अनुत्तरायाम्वा सम्यक्संबोधौ कृ [5] तप्रणिधानः । स श्रावकगोत्रत्वादवश्यमन्ते काले तत्प्रणिधानं

1. Letters damaged by pin-hold, reconstructed by us.

व्यावर्त्य श्रावकयानप्रणिधान एवावतिष्ठते। एवं प्रत्येकबुद्धयानगोत्रो महायानगोत्रो वेदितव्यः।

तत्र भवत्येषां पुद्गलानां प्रणिधानसंभारः प्रणिधानव्यतिकरः। नो तु गोत्रसंभारो, गोत्रव्यतिकरः। अस्मिस्त्वर्थे श्रावकयानप्रणिधाना[:]श्रावकगोत्राश्चै-[7]ते पुद्गला वेदितव्याः॥ एवं प्रणिधानप्रभेदेन पुद्गलव्यवस्थानं भवति॥

**कथं प्रतिपत्प्रभेदेन पुद्गलव्यवस्थानं भवति।** एषां यथोद्दिष्टानां यथापरिकीर्तितानां पुद्गलानां चतसृभिः प्रतिपद्भिर्निर्याणं भवति। कतमाभिश्चतसृभिः [।] अस्ति प्रतिपद् दुःखा धन्धाभिज्ञा। [अस्ति प्रतिपद् दुःखा क्षिप्राभिज्ञा[1]]। अस्ति प्रतिपत्सुखा धन्धाभिज्ञा। अस्ति[7]प्रतिपत्सुखा क्षिप्राभिज्ञा॥ तस्य मृद्विन्द्रियस्य पुद्गलस्य मौलध्यानलाभिनो या प्रतिपदियमुच्यते दुःखा धन्धाभिज्ञा। तत्र तीक्ष्णेन्द्रियस्य पुद्गलस्य मौलध्यानलाभिनो या प्रतिपदियमुच्यते दुःखा क्षिप्राभिज्ञा। तत्र मृद्विन्द्रियस्य पुद्गलस्य मौलध्यानलाभिनो या प्रतिपदियमुच्यते सुखा धन्धाभिज्ञा। तत्र तीक्ष्णेन्द्रिस्य पुद्गलस्य मौ[8]लध्यानलाभिनो या प्रतिपदियमुच्यते सुखा क्षिप्राभिज्ञा॥ एवं प्रतिपत्प्रभेदेन पुद्गलव्यवस्थानं वेदितव्यं॥

**तत्र कथं मार्गफलप्रभेदेन पुद्गलव्यवस्थानं**

1. MS. omits this.

**वेदितव्यं ।** तद्यथा । चतुर्ण्णां प्रतिपन्नकानां स्रोत आपत्तिफलप्रतिपन्नकस्य सकृदागामिफलप्रतिपन्नकस्य
8B—3// //[1]अनागामिफलप्रतिपन्नकस्य, अर्हत्त(अर्हत्त्व) फलप्रतिपन्नकस्य, चतुर्ण्णां फलस्थानां स्रोत आपन्नस्य, सकृदागामिनः । अनागामिनोर्हतश्च ये प्रतिपन्नकमार्गा वर्तन्ते । ते प्रतिपन्नकास्तेषां प्रतिपन्नकमार्गेण व्यवस्थानं । येर्हत्फलश्रामण्यफलव्यवस्थितास्तेषां [मार्गफ[1]]लव्यवस्थानमेवं मार्गफलप्रभेदेन पुद्गलव्यवस्थानं भवति ।।

**कथं**[2]**प्रयोगप्रभेदेन पुद्गलव्यवस्थानं भवति ।** तद्यथा श्रद्धानुसारिधर्मानुसारिणा [।] यः पुद्गलः श्रद्धानुसारेण प्रयुक्तः । स श्रद्धानुसारी, यो धर्मेषु परप्रत्ययविनयानुसारेण प्रयुक्तः स धर्मानुसारी । एवं प्रयोगप्रभेदेन पुद्गलव्यवस्थानं भवति ।।

**तत्र कथं समापत्तिप्रभेदेन पुद्गलव्यवस्थानं भवति ।** तद्यथा कायसाक्षिणः (साक्षी) अष्टौ वि[3]मोक्षान् कायेन साक्षात्कृत्योपसम्पद्य विहरति । न च सर्व्वेण सर्व्वमास्रवक्षयमनुप्राप्तो भवति । रूपी रूपाणि पश्यति । अध्यात्ममरूपसंज्ञां बहिर्धा रूपाणि पश्यति । शुभविमोक्षं कायेन साक्षात्कृत्योपसम्पद्य विहरति । आकाशानन्त्यायतनं, विज्ञानानन्त्यायतनं, आकिञ्चन्यायतनं, नैव संज्ञा नासंज्ञायतनं, संज्ञावेदयि-

1. Letters damaged by pin-hold.

तनि[4]रोधमनुलोमप्रतिलोमं समापद्यते च, व्युत्तिष्ठते च । एवं समापत्तिप्रभेदेन पुद्गलव्यवस्थानं भवति ।

**कथमुपपत्तिप्रभेदेन । पुद्गलव्यवस्थानं भवति ।** तद्यथा सप्तकृद्भवपरमस्य, कुलंकुलस्य, एकवीचिकस्यान्तरापरिनिर्व्वायिणः उपपद्यपरिनिर्व्वायिणः, ऊ[5]र्ध्वंस्रोतसश्च । एवमुपपत्तिप्रभेदेन पुद्गलव्यवस्थानं भवति।

**कथमपरिहाणिप्रभेदेन । पुद्गलव्यवस्थानं भवति ।** तद्यथा समयविमुक्तस्यार्हतः यो भव्यो दृष्टधर्मसुखविहारेभ्यः परिहाणाय, अपरिहाणिप्रभेदेन पुनर्व्यवस्थानं ॥ अकोप्यधर्मकस्यार्हतः यो न भव्यो दृष्टधर्मसुखविहारेभ्यः परिहाणाय [।]एव[6]मपरिहाणिप्रभेदेन पुद्गलव्यवस्थानं भवति ।

**तत्र कथमावरणप्रभेदेन पुद्गलव्यवस्थानं भवति ।** तद्यथा प्रज्ञाविमुक्तस्योभयतोभागविमुक्तस्यार्हतः । तत्र प्रज्ञाविमुक्तोर्हन् क्लेशावरणविमुक्तो, न समापत्त्यावरणात् । उभयतोभागविमुक्तस्तु । अर्हन् क्लेशावरणाच्च विमुक्तः, समापत्त्यावरणाच्च तस्मादुभयतोभागविमुक्त[7]इत्युच्यते । एवमावरणप्रभेदेन पुद्गलव्यवस्थानं भवत्येभिस्त्रिभिर्भेदैर्यथोद्दिष्टैर्यथोद्दिष्टानां पुद्गलानां यथाक्रमं व्यवस्थानं वेदितव्यम् ॥

**तत्रालम्बनं कतमत्**[1] । आह [।]चत्वार्यार्यालम्बन-

1. cp. Asm., p. 80 : धर्मे आलम्बनप्रभेदः कतमः । संक्षेपेण चतुर्विध आख्यातः । व्याप्यालम्बनं चरितविशोधनालम्बनं कौशल्यालम्बनं क्लेशविशोधनालम्बनं च ।

वस्तूनि । कतमानि चत्वारि । **व्याप्यालम्बनं, चरित-विशोधमालम्बनं, कौशल्यालम्बनं, क्लेशविशोधनं चालम्बनं ।**

**तत्र व्याप्यालम्बनं** [8]**कतमत्**[1] । आह् । तदपि चतुर्विधं । तद्यथा **सविकल्पं प्रतिबिम्बं, निर्विकल्पं प्रतिबिम्बं, वस्तुपरीत्तता । कार्यपरिनिष्पत्तिश्च ।**

तत्र **सविकल्पं प्रतिबिम्बं** कतमत्[2] । यथापीहैकत्य: सद्धर्मश्रवणं वा अववादानुशासनीम्वा[3] निश्रित्य, दृष्टम्वा, श्रुतम्वा, परिकल्पितं वोपादाय ज्ञेयवस्तु-
**8A—4**// सभागं स विकल्पं प्रतिबिम्बं समाहितभूमिकैं//[**1**]-र्विपश्यनाकारैर्विपश्यति । विचिनोति । प्रविचिनोति । परिवितर्कयति । परिमीमान्स[ा] (मांसा) मापद्यते ।

तत्र ज्ञेयम्वस्तु [।] तद्यथा अशुभा वा, मैत्री वा,

1. cp., ibid, loc. cit. : व्याप्यालम्बनं पुनश्चतुर्विधम् । सविकल्पप्रतिबिम्बालम्बनं निर्विकल्पप्रतिबिम्बालम्बनं वस्तुपर्यन्तालम्बनं कार्यपरिनिष्पत्त्यालम्बनं च ।।, ŚBM has वस्तुपरीत्तता in place of वस्तुपर्यन्त[ता] ।
2. cp., ibid, p. 80 : सविकल्पप्रतिबिम्बालम्बनं कतमत् । अधिमुक्तिमनस्कारेण यत् शमथविपश्यनाविषयालम्बनम् ।
3. On avavāda, *vide infra*, p. 258 sq.; Bodhi, p. 78; Asaṅga explains anuśāsana in five-fold way : तत्रानुशासनं कतमत् । तत्पञ्चविधं वेदितव्यम् । सावद्यसमुदाचारप्रतिषेधः अनवद्यसमुदाचाराभ्यनुज्ञा-प्रतिषिद्धाभ्यनुज्ञातेषु धर्मेषु स्खलितसमाचारसंचोदना पुनः पुनरनादरजातस्य स्खलतः अवसादनया स्मृतिकरणानुप्रदानमकलुषेणाविपरिणतेन स्निग्धेनाशयेन । सम्यक्प्रतिपन्नस्य च प्रतिषिद्धाभ्यनुज्ञातेषु धर्मेषु भूतगुणप्रियाख्यानतया संप्रहर्षणा ।, ibid, p. 79, both avavāda and anuśāsana (instruction) thereof taken together are called अववादानुशासनी.

इदंप्रत्ययताप्रतीत्यसमुत्पादो वा, धातुप्रभेदो वा, आनापानस्मृतिर्व्वा[1] । स्कन्धकौशल्यम्वा, धातुकौशल्यमायतनकौशल्यं, प्रतीत्यसमुत्पादकौशल्यं, स्थानास्थानकौशल्यं । अधोभूमीनामौदारिकत्वं । उप[2]रि-भूमीनां सातत्यं, समुदयसत्यं, निरोधसत्यं, मार्गसत्यमिदमुच्यते । ज्ञेयम्वस्तु ।

तस्यास्य ज्ञेयवस्तुनः अववादानुशासनीम्वा आगम्य, सद्धर्मप्र(श्र)वणं वा, तन्निश्रयेण समाहितभूमिकं मनस्कारं संमुखीकृत्य, तानेव धर्मानधिमुच्यते । तदेवं ज्ञेयम्वस्तुनि (स्त्वधि)मुच्यते । स तस्मिन् समये प्रत्यक्षानुभाविक इतिवा[धि]मोक्षः प्रवर्त्तते । ज्ञेयं-[3]वस्तुनि(स्त्विति) च । तज्ज्ञेयम्वस्तु प्रत्यक्षीभूतं भवति । समवहितं, संमुखीभूतं, न पुनरन्यत्तज्जातीयं द्रव्यमपि त्वधिमोक्षानुभवः । स तादृशा(शो) मनस्कारानुभवः समाहितभूमिको, येन तस्य ज्ञेयस्य वस्तुनः अनुसदृशं तद् भवति (।) प्रतिभासं, येन तदुच्यते । ज्ञेयवस्तुभावं(-सभागं) प्रतिबिम्बिमिति । यदयं(दिमं)योग[ ]सन्तीरयंस्तस्मिन् प्रकृते, ज्ञेये व[4]स्तुनि परीक्ष्य गुणदोषावधारणं करोति । इदमुच्यते सविकल्पं प्रतिबिम्बं [।]

**निर्विकल्पं (।) प्रतिबिम्बं कतमत्** । इहायं योगी प्रतिबिम्बान्निमित्तमुद्गृह्य न पुनः विचिनोति । प्रति-

1. See Bodhi., p. 78, para 1.

विचिनोति । परिवितर्कयति । परिमीमान्सा(मांसा)-मापद्यते । अपि तु तदेवालम्बनमसक्तश्चार्थाकारेण तन्निमित्तं शमयति । अपि तु नवाकारया चित्त[5] स्थित्या अध्यात्ममेव चित्तं स्थापयति । संस्थापयति । अवस्थापयत्युपस्थापयति । दमयति । शमयति । [व्युपशमयति[1]] । एकोतीकरोति । समाधत्ते [।] तस्य तस्मिन्समये निर्विकल्पं तत्प्रतिबिम्बं आलम्बनं भवति । यत्रासावेकांशेनैकाग्रां स्मृतिमवस्थापयति (।) तदालम्बनं, नो तु विचिनोति । परिवितर्कयति । परिसीमान्सा(मांसा)मापद्यते । तच्च प्रतिबिम्बं प्रतिबिम्ब[6]मित्युच्यते ।[2] इतीमानि तस्य ज्ञेयवस्तु-सभागस्य प्रतिबिम्बस्य पर्यायनामानि वेदितव्यानि ।

वस्तुपपन्नता(वस्तुपर्यन्तता[3]) कतमा । यदा-लम्बनस्य यद्भाविकता यथावद्भाविकता । यथावद्भा-विकता च[4] ।

**तत्र यावद्भाविकता कतमा ।** यस्मात्परेण रूप-

---

1. Letters damaged by pin-hold.
2. Asm., p. 80 : निर्विकल्पप्रतिबिम्बालम्बनं कतमत् । तत्त्वमनस्कारेण यत् शमथविपश्यनाविषयालम्बनम् ।
3. Asaṅga uses वस्तुपरीत्तता on p. 193 and वस्तुपर्यन्तता in Asm., p. 80.
4. Asm., ibid : वस्तुपर्यन्तालम्बनं कतमत् । सर्वधर्माणां क्षयभाविकता यथा-वद्भाविकता च । क्षयभाविकता····स्कन्धधात्वायतनानि । यथावद्भा-विकता····चत्वार्यार्यसत्यानि षोडशाकाराः तथता सर्वे अनित्याः संस्काराः सर्वे दुःखाः संस्काराः सर्वेऽनात्मानो धर्माः निर्वाणं शान्तं शून्यमप्रणिहितमनिमित्तं च ॥

स्कन्धो वा, वेदनास्कन्धो वा, संज्ञास्कन्धो[वा[1]], संस्का[र[1]]स्कन्धो वा, विज्ञानस्कन्धो वा, विज्ञानस्कन्धो वेति । सर्वसंस्कृतवस्तुसंग्रहः पंचभि[7]र्धर्मैः सर्वधर्मसंग्रहो धातुभिरायतनैश्च सर्वज्ञेयवस्तुसंग्रहश्च । आर्यसत्यैरियमुच्यते यावद्भाविकता ॥

**तत्र यथावद्भाविकता कतमा ।** या आलम्बनस्य
8B—4// भूतता । तथता च //[1] तसृभिर्युक्तिभिः । युक्त्युपेतता । यदुतापेक्षा(।)युक्त्या, कार्यकारणयुक्त्या । उपपत्तिसाधनयुक्त्या । धर्मतायुक्त्या च[2] । इति या चालम्बनस्य यावद्भाविकता, या च यथावद्भावि[क]ता तदेकत्यमभिसंक्षिप्य वस्तुपर्यन्ततेत्युच्यते ।

**तत्र कार्यपरिनिष्पत्तिः कतमा[3] ।** यदस्य[योगिन[4]] आसेवनान्वया[द्]भावनान्वयाद् बहुलीकारान्वयाच्छमथविपश्यनाया[:] **प्रतिबिम्बालम्बनो मनस्कारः ।** स परिपूर्यते, तत्परिपूर्या प्रतिबिम्बालम्बनो मनस्कारः । स परिपूर्यते । तत्परिपूर्या(श्)चाश्रयः परिवर्त्तते । सर्वदौष्ठुल्यानि च प्रतिप्रश्रभ्यन्ते । आश्रयपरिवृत्तेश्च प्रतिबिम्बमतिक्रम्य तस्मिन्नेव ज्ञेये वस्तुनि निर्विकल्पं प्रत्यक्षं ज्ञानदर्शनमुत्पद्यते । प्रथम-

1. A separate hand adds this.
2. See, Asm., p. 81.
3. ibid, loc. cit. : कार्यपरिनिष्पत्त्यालम्बनं कतमत् । आश्रयपरिवृत्तिः । इयमाश्रयपरिवृत्तिरचिन्त्या ।; cp. MSAB, pp. 190-1.
4. Letters damaged by pin-hold.

ध्यानसमाप[3]त्तुः, प्रथमध्यानलाभिनः प्रथमध्यान-गोचरे, द्वितीयतृतीयचतुर्थध्यानसमापत्तुः। चतुर्थध्यान-लाभिनः। चतुर्थध्यानगोचरे, आकाशानन्त्यायतन-विज्ञानानन्त्यायतनाकिंचन्यायतन—नैवसंज्ञानासंज्ञायतन-समापत्तुस्तल्लाभिनस्तद्गोचरे[।]इयमुच्यते कार्य-परिनिष्पत्तिः॥

तान्येतानि भवति। चत्वार्यालम्ब[4]नवस्तूनि। सर्वत्रगानि सर्वेष्वालम्बनेष्वनुगतानि अतीतानाग-प्रत्युत्पन्नैस्सम्यक्संबुद्धैर्देशितानि। तेनैतद्बाह्यालम्बन-मित्युच्यते। अपि चैतदालम्बनं शमथपक्ष्यं, विपश्यना-पक्ष्यं, सर्ववस्तुकं, भूतवस्तुकं, हेतुफलवस्तुकं च। तेन तद्व्यापीत्युच्यते।

यत्तावदाह। सविकल्पं प्रतिबिम्बमिति। इदमत्र विपश्य[5]नापक्ष्यस्य[।]यत्पुनराह। वस्तुपर्यन्ततेति। इदमत्र सर्ववस्तुकताया भूतवस्तुकतायाश्च। यदाह। कार्यपरिनिष्पत्तिरिति। इदमत्र हेतुफलसम्बन्धस्य।

**यथोक्तम्भगवता। आयुष्मन्तं रेवतमारभ्य** [।] एवमनुश्रूयते।[1] आयुष्मान् रेवतो भगवन्तं प्र[6]श्न-

1. This dialogue is not traced in the Pāli canons, the Mahāyāna Sūtras, the Prajñāpāramitās and other canons of the Buddhists extant in Sanskrit and Pāli. It seems that this forms part of the Sanskrit Tripiṭaka of the Mahāsāṁghikas or of any other sect of the Buddhist order, whose canonical literature is not extant.

मप्राक्षीत् । कियता, भदन्त, भिक्षुर्योगा[(गी)योगा[1]]-
चार आलम्बने चित्तमुपनिबद्धः, कतमस्मिन्नालम्बने
चित्तमुपनिबघ्नातीति । कथं पुनरालम्बनं(ने)चित्तमुप-
निबद्धं सूपनिबद्धं भवति । साधु, साधु, रेवत, साधु
खलु त्वं रेवत । एतमर्थं पृच्छति(सि) । तेन हि श्रृणु
च, साधु च, मनसि कुरु, भाषिष्ये [।] इह, रेवत,
8A—5// भिक्षुर्योगी यो//[1]गाचारः चरितम्वा विशोधयितु-
कामः, कौशल्यम्वा कर्तुकामः । आस्रवेभ्यो वा चित्तं
विमोचयितुकामः । अनुरूपे चालम्बने चित्तमुपनि-
बघ्नाति । प्रतिरूपे च सम्यगेव चोपनिबघ्नाति । तत्र
चानिराकृतध्यायी भवति ।

**कथमनुरूपे आलम्बने चित्तमुपनिबघ्नाति ।**
[स चे[2]] द्रेवत, भिक्षुर्योगी योगाचारः(रो) रागचरित
एव, [2]स न शुभालम्बने चित्तमुपनिबघ्नाति । एव-
मनुरूपे आलम्बने चित्तमुपनिबघ्नाति । द्वेषचरितो वा
पुनर्मैत्र्यां, मोहचरितो वा इदं प्रत्ययताप्रतीत्यसमुत्पादे,
मानचरितो धातुप्रभेदे । स चेद्रेवत, स भिक्षुर्योगी
योगाचारे[ा]वितर्कचरित एव आनापानस्मृतौ चित्त-
मुपनिवघ्नाति । एवं सोनुरूपे आलम्बने [3]चित्तमुप-
निबघ्नाति । स चेत्स, रेवत, भिक्षुः संस्काराणां
स्वलक्षणे संमूढः, किन्तु कौशल्ये चित्तमुपनिबघ्नाति ।

---

1. MS. omits योगी.
2. Letters damaged by pin-hold.

हेतुसंमूढो धातुकौशल्ये, प्रत्ययसंमूढ आयतनकौशल्ये, कामधातोर्व्वा[4]वैराग्यं कर्त्तुकामः, कामानामौदारिकत्वे, रूपाणां शान्तत्वे, रूपेभ्यो वा वैराग्यं कर्त्तुकामः। रूपाणामौदारिकत्वे आरूप्यशान्ततायां च चित्तमुपनिबघ्नाति। सर्व्वत्र वा सत्कायान्निर्वेक्षुकामो, निमोक्तुकामः, दुःखसत्ये (षु[1]) समु[5]दयसत्ये, निरोधसत्ये, मार्गसत्ये चित्तमुपनिबघ्नाति। एवं हि, रेवत, भिक्षुर्योगी योगाचारः। अनुरूपे आलम्बने चित्तमुपनिबघ्नाति। इह रेवत, भिक्षुर्यद्यदेव ज्ञेयं वस्तु निचेत्तुकामो भवति, प्रचेत्तुकामः। परिवितर्कयितु[6]कामः। परिमीमान्स(मांस)यितुकामः। तच्च तेन पूर्व्वमेव दृष्टम्वा भवति। श्रुतम्वा। मतम्वा। विज्ञातम्वा[।]स तदेव दृष्टमधिपतिं कृत्वा, श्रुतं, मतं, विज्ञातमधिपतिं कृत्वा, समाहितभूमिकेन मनस्कारेण मनसिकरोति। विकल्पयत्यधिमुच्यते। स न तदेव ज्ञेयम्वस्तु समाहितं सम्मुखीभूतं पश्यत्यपि तु तत्प्रतिरूपकमस्योत्प[7]द्यते। तत्प्रतिभासम्वा, ज्ञानमात्रम्वा, दर्शनमात्रम्वा, प्रतिस्मृतमात्रम्वा यदालम्बनमयं भिक्षुर्योगी योगाचा[8]रः सम्यगेवालम्बने चित्तमुपनिबघ्नाति। स चेदयं, रेवत, भिक्षुर्योगी योगाचार आलम्बने चित्तमुपनिबघ्नात्या(ति या) वद्(ज्) ज्ञेयं ज्ञातव्यं भवति। तच्च यथाभूत[मविपरीतचित्तं(त)मेवं हि, रेवत,

1. This may be deleted.

भिक्षुर्योगी योगाचा[1]]र: । सम्यगेवालम्बने चित्तमुप-निबध्नाति । कथं च, रेवत, भिक्षुर्योगी योगाचार[:] अनिराकृतध्यासी(यी) भवति । स चेत्स, रेवत, भिक्षुरेवमालम्बने सम्यक्प्रयुज्यमान[:]सातत्यप्रयोगी
8B—5// च भवति । //[1] सत्कृत्यप्रयोगी च । कालेन च कालं शमथनिमित्तं भावयति । प्रग्रहनिमित्तमुपेक्षानि-मित्तमासेवनान्वयाद् भावनान्वयाद्बहुलीकारान्वयात्सर्व-दौष्ठुल्यानां प्रतिप्रश्रब्धेराश्रयपरिशुद्धिमनुप्राप्नोति । स्पर्शयति (स्पृशति) । साक्षात्करोति । ज्ञेयवस्तुप्रत्य-वेक्षतया च आलम्बनपरिशुद्धिं, रागविरागाच्चित्त-[2]परिशुद्धिमविद्या[वि[2]]रागात् (।) ज्ञानपरि-शुद्धिमधिगच्छति । स्पर्शयति (स्पृशति), साक्षात्करोति । एवं हि स, रेवत, भिक्षुर्योगी योगाचार: अनिराकृतध्यायी भवति । यतश्च रेवत, भिक्षुरस्मिन्नालम्बने चित्तमुपनिबध्नात्येवं चालम्बने चित्तमुपनिबध्नात्येवमस्य तच्चित्तमालम्बने सूपनिबद्धं भवति ।

॥ तत्र गाथा ॥

*निमित्तेषु चरन्योगी सर्वभूतार्थवेदक: ।*
*बिम्बध्यायी साततिक: परिशुद्धिं विगच्छति ॥[3]*

---

1. Added by a separate hand in a footnote, letters dim and faint.
2. MS. omits this.
3. Original source of this gāthā is untraced.

तत्र यत्तावदाह ।। निमित्तेषु चरन्योगी अनेन तावच्छमथनिमित्ते, प्रग्रहनिमित्ते, उपेक्षानिमित्ते सततकारिता चाख्याता ।। यत्पुनराह । सर्वभूतार्थवेदक इति । अनेन वस्तुपर्यन्तता आख्याता ।। [4]यत्पुनराह । बिम्बध्यायी सातितिकः । इत्यनेन सविकल्पं निर्विकल्पञ्च प्रतिबिम्बमाख्यातम् । यत्पुनराह । पारिशुद्धिं विगच्छतीत्यनेन कार्य[परि[1]]निष्पत्तिराख्याता ।। **पुनरपि चोक्तं[2] भगवता ।।**

चित्तनिमित्तस्य कोविदः

प्रविवेकस्य (प्राविवेक्यस्य?)च विदन्ते रसं ।

ध्यायी निपकः प्रतिस्मृतो

भुंक्ते प्रीतिसुखं निरामिषं [।।]

[5]तत्र यत्तावदाह, चित्तनिमित्तस्य कोविद इत्यनेन सविकल्पं निर्विकल्पं च प्रतिबिम्ब[ं] निमित्तशब्देनाख्यातं । वस्तुपपर्यन्तता कोविदशब्देन । यत्पुनराह । प्राविवेक्यस्य च विदन्ते रसमित्यनेनालम्बने सम्यक्प्रयुक्तस्य प्रहाणारामता भावनारामता चाख्याता । यत्पुनराह । ध्यायी निपक[:] प्रति[6]स्मृत इत्यनेन शमथविपश्यनाया भावनासातत्यमाख्यातम् ।। यत्पुनराह । भुंक्ते प्रीतिसुखं निरामिषमित्यनेन कायपरिनिष्पत्तिराख्याता ।। तदेवं सत्येतद्-

1. A separate hand adds this.
2. Original source of this gāthā is also not traceable.

व्याप्यालम्बनमाप्तागमविशुद्धं वेदितव्यं ।। युक्तिपतितं च ।। इदमुच्यते व्याप्यालम्बनं ।।

**तत्र चरितविशोधनमालम्बनं कतमत्** ।। तद्यथा [7]अशुभा[।]मैत्री । इदं प्रत्ययताप्रतीत्यसमुत्पादः । धातुप्रभेदः । आनापानस्मृतिश्च ।

**तत्राशुभा कतमा ।** आह [।] षड्विधा अशुभा[1] । तद्यथा प्रत्यशुभता । दुःखाशुभता । अवराशुभता । आपेक्षिकी अशुभता । क्लेशाशुभता । प्रभंगुराशुभता च ।[2]

---

1. Asaṅga uses both forms aśubhā and aśubhatā, see also, Bodhi, p. 78; aśubhatā has been used here in the sense of aśubha saṁjñā and aśucisaṁjñā, one of the ten saṁjñās enumerated in the Pāli canons, see A. N., III.268, IV.183; *infra*, under संज्ञाभावना(अशुभा); cp. Adv., pp. 371-2; cp. also *infra*, under शिक्षानुलोमिक धर्मs where ten saṁjñās have been enumerated, see also, Ada., XII.11, pp. 97-8.

2. Asaṅga explains the caritaviśodhana-alaṁbana in the Asm. (p. 81) in the following way : चरितविशोधनालम्बनं पञ्चविधम् । भूयोरागचरितानामशुभविषयालम्बनम् । भूयो द्वेषचरितानां करुणा-भावनाविषयालम्बनम् । भूयो मोहचरितानां निकायप्रत्ययता प्रतीत्यसमुत्पादविषया-लम्बनम् । मदमानचरितानां धातुप्रभेदविषयालम्बनम् ।; it seems that मैत्री in the text above and करुणा in the Asm. represent the four apramāṇas (चत्वारि अप्रमाणानि) or brahma-vihāras, viz., maitrī, karuṇā, muditā and upekṣā; these two have been used as उपलक्षणs of the four brahma-vihāras.

8A--6// //[1] **तत्र प्रत्यशुभता कतमा।** आह। **प्रत्यशुभता अध्यात्मं चोपादाय, बहिर्धा चोपादाय वेदितव्या॥**

**तत्राध्यात्ममुपादाय।** तद्यथा— केशा, रोमाणि, नखा, दन्ता, रजो, मलं, त्वङ्मान्स(मांस)मस्थि, स्नायु[:], सिरा, वृक्का(क्कं), हृदयं, प्लीहकं, क्लोमं, अन्त्रान्यण्त्रगुणा, आमाशयं(यः), पक्वाशयं(यः), मूत्रं, पुरीषमश्रु, स्वेदः, खेटा, शिंघाणकं, वसा, लसीका, मज्जा[2]मेदः, पित्तं, श्लेष्मा, पूयः, शोणितमस्तकं, मस्तकलुंगं, प्रस्रावः।

तत्र **बहिर्धा चोपादाय** अशुभा (अशुभता) कतमा। तद्यथा विनीलकम्वा, विपूयकम्वा, विभद्रात्मकम्वा, व्याध्मात्म(त)कम्वा, विखादित(क)म्वा। विलोहितकम्वा। विक्षिप्तकम्वा। अस्थि वा। शंकलिकां(का)वा। उच्चारकृतम्वा, प्रस्रावकृतम्वा, खेटाकृतम्वा, शिंघाणककृतम्वा, रुधिर[3]म्रक्षितम्वा, पूयम्रक्षितम्वा, गूथकठिल्लम्वा, स्यन्दनिका वा। इत्येवं भागीया बहिर्धोपादाय प्रत्यशुभता वेदितव्या[1]।

---

1. It seems to be identical with Kāyānupaśyanā and Kāyānusmṛti, see SVA, pp. 225-64; Vsm., I.103 (pp. 24-5); III.105 (pp. 74-5) : दस असुभा-उद्धुमातकं, विनीलकं, विपुब्बकं, विच्छिद्दकं, विक्खायितकं, विक्खित्तकं, हतविक्खित्तकं, लोहितकं, पुळुवकं, अट्ठिकं; see also, VI.1-10 (p. 119); VI.81, 84-94; pp. 162-4, 169-80; cp. also, p. 242 sq. (under पटवी धातु); cp. Ada., XII.11.

या चाध्यात्ममुपादाय । या च बहिर्धोपादायाशुभता । इयमुच्यते । प्रत्यशुभता ।

**तत्र दुःखाशुभता कतमा ।** यद्दुःखवेदनीयं स्पर्शं प्रतीत्योत्पद्यते । कायिकचैतसिकमसातं वेदयितं वेदनागत[4]मियमुच्यते । दुःखाशुभता ।[1]

**तत्रावराशुभता कतमा ।** यत्सर्वनिहीनम्वस्तु, सर्वनिहीनो धातुस्तद्यथा कामधातुः, यस्मात्पुनर्हीनतरश्चावरतरश्च, प्रतिक्रुष्टतरश्चासौ धातुर्नास्ति । इयमुच्यते अवराशुभता ।

**आपेक्षिकी अशुभता कतमा ।** तद्यथा तदेकत्यम्वस्तु शुभमपि सदन्यच्छुभतरमपेक्ष्याशुभतः ख्याति । [5] तद्यथा । आरूप्यानपेक्ष्य रूपधातुरशुभतः ख्याति । सत्कायनिरोधनिर्वाणमपेक्ष्य यावद्भवाग्रमशुभश्च (भ इति) संख्यां गच्छति । इयमेवं भागीयापेक्षिकी अशुभता [।]

त्रैधातुकावचराणि (।) सर्वाणि संयोजन(।)-बन्धना[न्य]नुशयोपक्लेशाशुभतेत्युच्यते (-शा अशुभतेत्युच्यते) ।।

**तत्र प्रभंगुराशुभता कतमा ।** या पंचानामुपा[6]-दानस्कन्धानामनित्यता, अध्रुवानाश्वासिकता, विपरिणामधर्मता इतीयमशुभता रागचरितस्य विशुद्धये । आलम्बनं तत्र रागस्तद्यथा । अध्यात्मं कामेषु

1. It is identical to दुःखा वेदना.

कामछन्दः (च्छन्दः), कामरागः, बहिर्धा कामेषु मैथुनछन्दः (च्छन्दः), मैथुनरागः। विषयछन्दः- (च्छन्दः)। विषयरागः। रूपछन्दो (च्छन्दो) रूपरागः सत्कायछ(च्छ)न्दः सत्कायरागश्चे[7]ति। **अयं पञ्चविधो रागः**। तस्य पञ्चविधस्य रागस्य प्रहाणाय, प्रतिविनोदनाय। असमुदाचाराय। षड्विधा अशुभता आलम्बनं।[1] तत्राध्यात्ममुपादाय। प्रत्यशुभतालम्बनेन अध्यात्मं कामेषु काम[च्]छन्दात् कामरागाच्चित्तम्वि- शोधयति। बहिर्धोपादाय प्रत्यशुभतालम्बनेन बहिर्धा तैः रागाच्चतुर्विधा[द्] [8]रागप्रतिसंयु- क्ताद्वर्ण्णरागसंस्थानरागस्पर्शरागोपचाररागप्रतिसंयुक्ता- च्चित्तं विशोधयति।

तत्र यदा विनीलकम्वा, विपूयकम्वा, विमद्राम- कम्वा, व्याध्मातमकम्वा, विखादितकं वा मनसि
8B—6// करोति। तदा वर्ण्णरागाच्चित्तं विशोधयति। //[1] यदा पुनर्विलोहितकं वा मनसि करोति। तदा संस्थान- रागाच्चित्तं विशोधयति। यदा पुनरस्थि वा शंकलि- काम्वा मनसि करोति। तदा स्पर्शरागाच्चित्तं विशोध- यति। यदा विक्षिप्तकं मनसि करोति तदा उपचार- रागाच्चित्तं विशोधयति। अतएव भगवता बहिर्धो[2]- पादाय प्रत्यशुभता सा चतसृषु शिव पथिका[सु व्य[2]]-

1. cp. *supra*, p. 202, f.n. 2.
2. Letters damaged by pin-hold.

वस्थापिता। या यैवानेन शिवपथिका दृष्टा भवति। एकाहमृता वा, सप्ताहमृता वा, काकैः कुररैः खाद्यमाना, गृध्रैः, श्वभिः, शृगालैः। तत्र तत्रेममेच(व) कायमुपसंहरति। अयमपि मे काय एवं भावी, एवं भूत, एवं धर्मतामनतीत इति। अनेन तावद्विनी[3]लकमुपादाय यावद्विखादितकमाख्यातं।

यत्पुनराह। या अनेन शिवपथिका दृष्टा भवति। अपगतत्वङ्मान्स(मांस)शोणितम्वा सूपनिबद्धेत्यनेन विलोहितकमाख्यातं।

यत्पुनराह। यान्येव शिवपथिकास्थानानि पृष्ठीवंशो, हनुनक्रं, दन्तमाला, शिरःकपालं तथा भिन्नप्रतिभिन्नानि एकव[ा]र्षिकानि द्विव[ा]र्षिकानि(र्षिकाणि)। [4] यावत्सप्तव[ा]र्षि(र्षि)कानि(णि) श्वेतानि शंखनिभानि। कपोतवर्णानि पान्सु(पांसु)वर्णव्यतिमिश्राणि दृष्टानि भवन्तीत्यनेन विक्षिप्तकमाख्यातं।

एवं प्रत्यशुभतालंबनेन बहिर्धा प्रतिसंयुक्तेन मैत्रेन(ण) रागाच्चित्तं विशोधयति। तत्र दुःखताशुभतालम्बनेनावराशुभतालम्बनेन च। विषयप्रतिसंयुक्तात्कामरागा[5]च्चित्तं विशोधयति। तत्रापेक्षाशुभतालम्बनेन रूपरागाच्चित्तं विशोधयति। तत्र क्लेशाशुभतालम्बनेन प्रभंगुराशुभतालम्बनेन च

का[म[1]] भवाग्रमुपादाय सर्वस्मात्काय(म)रागाच्चित्तं विशोधयति । इदं तावद्रागचरितस्य चरितविशोधनेन सालम्बनं संभवं प्रत्येतदुच्यते । सर्व्वं सर्व्वाकारमशुभतालम्बनं । [6]संगृहीतं भवत्यस्मिंस्त्वर्थे प्रत्यशुभतैवाभिप्रेता । तदन्या त्वशुभता तदन्यस्यापि चरितस्य विशुद्धये । आलम्बनं ॥[2]

तत्र[3] **मैत्री कतमा** । यो मित्रपक्षे वा, अमित्रपक्षे वा । उदासीनपक्षे वा । हिता[ध्या[1]]शयमुपस्थाप्य मृदुमध्याधिमात्रस्य सुखस्योपसंहारायाधिमोक्षः ।

1. MS. omits this.
2. cp. Asm., p. 81.
3. It is one of the four apramāṇas or brahma-vihāras, D. N., III.175 : चतस्सो अप्पमञ्ञा । इधावुसो, भिक्खु, मेत्तासहगतेन चेतसा एकं दिसं फरित्वा विहरति, तथा दुतियं, तथा ततियं, तथा चतुत्थं । इति उद्धमधो तिरियं सब्बधि सब्बत्तताय सब्बावन्तं लोकं मेत्तासहगतेन च चेतसा विपुलेन । महग्गतेन अप्पमाणेन अवेरेन अब्यापज्जेन फरित्वा विहरति । करुणासहगतेन चेतसा· · · · मुदितासहगतेन चेतसा· · · · उपेक्खा सहगतेन चेतसा· · · · विहरति; cp. Vbh., p. 332 sq.; Vsm., IX, (pp. 200-21); AS, III.399-416; SVA, pp. 380-3; AK. VIII.29 sq.; Adv., pp. 427-9 :

   चतुर्णामप्रमाणानां मैत्र्यद्वेषस्तथा कृपा ।
   मुदिता प्रीतिरेकेषामुपेक्षा लोभ इष्यते ॥

   (Vs. 588, p. 427); Ada., pp. 99-100; Y. S. and Y.B., III.23; I.33; Bodhi, p. 63 : चत्वार्यप्रमाणानि ब्राह्मो विहार इत्युच्यते; p. 166 : इह बोधिसत्त्वः समासतस्त्रिविधानि चत्वार्यप्रमाणानि भावयति । सत्त्वालम्बनानि, धर्मालम्बनानि, अन्यालम्बनानि च । · · · · Asm., pp. 94-5; on apramāṇas, see Śānti Bhikṣu, Ada., p. 99, f.n. 3.

समाहितभूमिकः । तत्र [7] योयं मित्रपक्षः । अमित्रपक्ष उदासीनपक्षश्च [।]इदमालम्बनं । तत्र यो हिताध्याशयः, सुखोपसंहाराय चाधिमोक्षः समाहित-भूमिकः अयमालम्बक इति (।) यच्चालम्बनं । यश्चालम्बकस्तदेकत्यमभिसंक्षिप्य मैत्रीत्युच्यते ।[1]

8A—7// तत्र यत्तावदाह मैत्रीसहगतेन चित्तेनेत्यनेन त्रिषु पक्षेषु मित्रपक्षे, अ//[1]मित्र पक्षे, उदासीनपक्षे हितध्याशय आख्यातः ।

यत्पुनराह । अवैरेणासम्पन्नेनाव्याबाधेनेत्यनेन तस्यैव हिताध्याशयस्य त्रिविधं लक्षणमाख्यातं ॥

तत्रावैरतया हिताध्याशयः सा पुनरवैरता द्वाभ्यां पदाभ्यामाख्याता(:) । असमर्थतया अव्याबाधत[या च[2]] तत्राप्रत्यनीकभावस्थानार्थेनासमर्थता । अप-

1. Letters damaged by pin-hold, illegible.

2. cp. Vbh. pp. 332-3 : इध भिक्खु यस्मि समये रूपूपपत्तिया मग्गं भावेति विविच्चेव कामेहि····पठमं ज्ञानं····दुतियं····ततियं····चतुत्थं ज्ञानं उपसम्पज्ज विहरति मेत्तासहगतं, या तस्मि समये मेत्ति मेत्तायना मेत्तयितत्तं मेत्ताचेतोविमुत्ति—अयं वुच्चति मेत्ता ।; अद्वेषस्वभावा मैत्री, Adv., p. 427; मैत्री कतमा । ध्यानं निश्रित्य सत्त्वाः सुखेन सम्प्रयुज्येरन्निति विहारसमृद्धौ समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः । Asm., p. 94; cp. Bodhi, p. 166.3-9; Ada., p. 99 : तदिदं चित्तं त्रिविधं भवति । आद्यं स्वजनेभ्यो मध्यमं परेभ्यश्चरमं शत्रुतस्करादिभ्यः । समाहितो भावयति सर्वे त्रिधातुसत्त्वाः वयं शत्र्वाद्याश्च न भिन्ना इति । विजहात्यान्तरिकद्वेषमिति मैत्री नामाप्रमाणं वेदनासंज्ञासंस्कारविज्ञानसंप्रयुक्तं सम्यग्वाचः सम्यक्कर्मान्तस्योत्थापकमपि न सर्वसंस्कारसंप्रयुक्तमिति मैत्र्यप्रमाणं ।; for details, see AKB, VIII. 29 sq.; Adv., pp. 427-8; Vsm., IX.1-90; Psm., pp. 379-91.

कारा[2]विषष्टनार्थेन अव्यावाध्यता (अव्याबाधता) ।

यत्पुनराह । विपुलेन महद्गतेन प्रमाणेनेत्यनेन मृदुमध्याधिमात्रस्य सुखस्योपसंहार आख्यातः । कामावचरस्य, प्रथमद्वितीयध्यानभूमिकस्य वा, तृतीयध्यानभूमिकस्य वा [।[1]] यत्पुनराह । [2]अधिमुच्यस्यानिर्व्वो( )पसम्पद्य विहरतीत्यनेन सुखोपसंहाराधिमोक्षः[2] । समाहितभूमिक आ[3]ख्यातः । स पुनरेष सुखोपसंहारो हिताध्याशयपरिगृहीतः । आधिमोक्षिकः । मनस्कारानुगतः । अदुःखासुखिते मित्रपक्षे, अमित्रपक्षे, उदासीनपक्षे, सुखकामे वेदितव्यः । यस्तु दुःखितो वा, अदुःखितो वा पुनर्मित्रपक्षः । अमित्रपक्ष उदासीनपक्षो वा [।]तत्र यो दुःखितः स करुणाया[3] आलम्बनं । [4] यः सुखितः स मुदिताया[4] आलम्बनमियमुच्यते मैत्री [।] तत्र व्यापादचरितः पुद्गलः

---

1. cp. Vbh., ibid; Ada. XIII.19 (p. 110).
2. MS. dim and illegible.
3. See, Vbh., ibid; *supra*, p. 207, f.n. 3; Ada., XIII.3 : समाहितो भावयति त्रिधातुसत्त्वा विविधकार्यचित्तदुःखभाज इति तानुद्धर्तुकाम एवं भावयन् तेषां बाह्यक्लेशान् व्यपनेतु प्रतिबलो भवतीति करुणा नामाप्रमाणं वेदनासंज्ञासंस्कारसंप्रयुक्तं सम्यग्वाचः सम्यक्कर्मान्तस्योत्थापकमपि न सर्वसंस्कारसंप्रयुक्तमिति करुणाप्रमाणं ।; Asm., loc. cit. : करुणाध्यानं निश्रित्य सत्त्वा दुःखेन वियुज्येरन्निति विहारसमृद्धौ समाधिः प्रज्ञा ।····
4. Asm., op. cit. : मुदिता ध्यानं निश्रित्य सत्त्वाः सुखेन न वियुज्येरन्निति विहारसमृद्धौ समाधिः प्रज्ञा ।····; Ada., loc. cit. : अहो मुदितास्त्रिधातुसत्त्वाः इति प्राप्तसुखसौमनस्यो दुःखदौर्मनस्यापनयनप्रतिबलो भवतीति मुदिता नामाप्रमाणं····।; See ŚS, pp. 102, 117, 138, 119.

मैत्रीं भावयन् सत्त्वेषु यो व्यापादस्तं प्रतनु करोति । व्यापादाच्चित्तं परिशोधयति ॥

**तत्रेदंप्रत्ययताप्रतीत्यसमुत्पादः[1] कतमः ।** यत्त्रिष्वध्वसु संस्कारमात्रं, धर्ममात्रं, वस्तुमात्रं, हेतुमात्रं, फलमात्रं, युक्तिपतितं, यदुतापेक्षा[5]युक्त्या, कार्यकारणयुक्त्या । उपपत्तिसाधनयुक्त्या च । धर्माणामेव धर्माहारकत्वं । निष्कारकवेदकत्वं च । इदमुच्यते । इदंप्रत्ययताप्रतीत्यसमुत्पादालम्बनं । यदालम्बनं मनसि कुर्व्वन् मोहाधिकः पुद्गलो मोहचरितः मोहं प्रजहाति । तनूकरोति । [मोह[2]] चरिताच्चित्तं विशोधयति ॥

---

1. इदंप्रत्ययता has been explained as : उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवैषां धर्माणां धर्मता धर्मस्थितिता धर्मनियामता । पौराणनगरपवमन्महामते ····ll. p. 58; the same expression is also found in SDS, II.303, p. 41; YBŚ, I.229 (ll. 7-8), Āryaśālistaṁbasūtra, MSS, I.101, with some variants; for the Pāli version, see S. N. II.24 : कतमो च, भिक्खवे, पटिच्चसमुप्पादो ? जातिप्पच्चया, भिक्खवे, जरामरणं । उप्पादा वा तथागतानं अनुप्पादा वा तथागतानं ठिता व सा धातु धम्मट्ठितता धम्मनियामता इदप्पच्चयता । तं तथागतो अभिसम्बुज्झति अभिसमेति, अभिसम्बुज्झित्वा अभिसमेत्वा आचिक्खति देसेति पञ्ञापेति पट्ठपेति विवरति विभजति उत्तानीकरोति, पस्सथाति चाह— जातिप्पच्चया, भिक्खवे, जरामरणं । भवप्पच्चया, भिक्खवे, जाति····पे०·· अविज्जापच्चया, भिक्खवे, सङ्खारा । इति खो भिक्खवे या तत्र तथता अवितथता अनञ्ञतथता इदप्पच्चयता, अयं वुच्चति, भिक्खवे, पटिच्चसमुप्पादो' ति; See also, p. 26 ; see Bhāmati ad V. S.. II. II.19.
2. Omitted in the MS., added by us.

**तत्र धातुप्रभेदः** [6] **कतमः ।** तद्यथा षड्धातवः ।[1] पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुराकाशधातुर्विज्ञानधातुश्च ।

**तत्र पृथिवीधातुर्द्विविधः ।**[2] आध्यात्मिको

---

1. cf. M. N., III.323-4 : छधातुरो अयं, भिक्खु, पुरिसोति—इति खो पनेतं वुत्तं, किं चेतं पटिच्च वुत्तं ? छयिमा, भिक्खु, धातुयो—पठवीधातु, आपोधातु, तेजोधातु, वायोधातु, आकासधातु, विञ्ञाणधातु । 'छधातुरो अयं, भिक्खु, पुरिसो' ति—इति यं तं वुत्तं इदमेतं पटिच्च वुत्तं ।; cp. also Vsm., XV. 22 sq.; cf. Adv., Vs. 13 :

सत्त्वप्रज्ञप्त्युपादानमौलं षड्धातवो मताः ।
प्रोक्तास्तद्भेदतो यस्मादस्मिमानो निवर्तते ॥;

see, Ś S, p. 131 : षड्धातुरयं, महाराज, पुरुषः····। षड्धातुरयं महाराज पुरुषइति न खलु पुनरेतद्युक्तम्—किं वैतत् प्रतीत्योक्तं षडिमे महाराज धातवः । कतमे षट् ? तद्यथा पृथिवी धातुरब्धातुस्तेजो धातुर्वायुधातुराकाशधातुर्विज्ञानधातुश्च, इमे महाराज षड्धातवः ।···· (पितृपुत्रसमागमसूत्रम्); see also, BCAP, IX.88 (pp. 237-8); cf. Ada., VII.17, p. 73 : षड्विधयोगेन पुद्गलकायावाप्तिः । षड्विधाः कतमे । चत्वारि महाभूतानि आकाशं विज्ञानं ।

2. cp., M. N. II.325 : कतमा च भिक्खु पठवीधातु ?····सिया अज्झत्तिका सिया बाहिरा । कतमो च····अज्झत्तिका पठवीधातु ? यं अज्झत्तं पच्चत्तं कक्खलं खरिगतं उपादिन्नं, सेय्यथीदं—केसा लोमा नखा दन्ता तचो मंसं न्हारू अट्ठि अट्ठिमिञ्जं वक्कं हदयं यकनं किलोमकं पिहकं पप्फासं अन्तं अन्तगुणं उदरियं करीसं यं वा पन पि किञ्चि अज्झत्तं पच्चत्तं कक्खलं खरिगतं उपादिन्नं—अयं वुच्चति, भिक्खु, अज्झत्तिका पठवीधातु । या चेव खो पन अज्झत्तिका पठवीधातु या च बाहिरा पठवीधातुरेवेसा ।····; cp. also, Sā. Sū., MSS, I. 101; cf. p. 109 also (Mādh. Śā. Sū); ŚS, p. 131 : कतमश्च महाराज आध्यात्मिकः पृथिवीधातुः ? यत्किंचिद् बाह्यं कक्खटत्वं खरगतमुपात्तम् । तत्पुनः कतमत् ? तद्यथा केशा रोमाणि नखा दन्ता इत्यादि ।

*(contd. on p. 212)*

बाह्यश्च । **तत्राध्यात्मिको** यदस्मिन्काये अध्यात्मं प्रत्यात्मं खक्खटं खरतरमुपादत्तं । बाह्यः पुनः पृथिवीधातुर्यद्बाह्यं खक्खटं खरगतमनु(मु?)पगतमनु(मु?)पादत्तं ।[7]

**स पुनरध्यात्मिकपृथिवीधातुः कतमः ।** तद्यथा केशा, रोमाणि, नखा, दन्ता, रजो, मलं, त्वङ्मान्स-मस्थि[1], स्नायु[ः[2]], सिरा[3], वृक्का(क्कं), हृदयं, प्लीहकं, क्लोममन्त्राण्यन्त्रगुणाः । आमाशयः ।
8B—7// पक्वाशयः । य//[1]कृत्पुरीषमयमुच्यते आध्यात्मिकः पृथिवीधातुः ।

**स पुनर्बाह्यः पृथिवीधातुः कतमः ।** काष्ठानि वा, लोष्ठानि वा, शर्करा वा, कठिल्ला वा, वृक्षा वा, पर्वताग्रा वा, इति वा पुनरन्योप्येवंभागीयः अयमुच्यते

---

*(contd. from p. 211)*

अयमुच्यते आध्यात्मिकः पृथिवीधातुः ।। कतमश्च महाराज बह्यः पृथिवीधातुः । यत्किञ्चिद् बाह्यं कक्खटत्वं खरगतमुपात्तं अयमुच्यते बाह्यः पृथिर्वीधातुः ।; See, BCAP, p. 238; PVŚ, p. 2 : पृथिवीधातुः कतमः । कठिनता, for elaboration on this point, see, PVV, pp. 20-1; AK I.12 :

भूतानि पृथिवीधातुरप्तेजोवायुधातवः ।
धृत्यादिकर्मसंसिद्धाः खरस्नेहोष्णतेरणाः ।।

AKV, I.37 sq.; cf. ibid, I.13 : पृथिवीवर्णसंस्थानमुच्यते लोक-संज्ञया ।; MVBT, I, p. 7 : स्वभाव एव हि भावानां लक्षणम् । तद्यथा पृथिवीधातुः खरलक्षणो, न च खरत्वात् पृथिवीधातुः पृथगस्ति ।

1. Should be मांस.
2. Should be स्नायुः.
3. Should be शिरा.

बाह्यः पृथिवीधातुः ।।

**अब्धातुः कतमः ।** अब्धातुर्द्विविधः । आध्यात्मिको बाह्यश्च[1] ।

**तत्राध्यात्मिक[2]कोप्धातुः(ब्धातुः) कतमः ।** यदध्यात्मं प्रत्यात्मं स्नेहः स्नेहगतं । आपः अब्धातुमुपगतमुपादातुं (अब्धातुगतमुपगतमुपादत्तं) । तद्यथा अश्रु, स्वेदः । खेटः शिंघाणकः । बसा, लसीका, मज्जा, मेदः, पित्तं, श्लेष्मा, पूयः, शोणितं, मस्तकं, मस्तकलुंगं, प्रश्रावोय(स्रावोऽय)मुच्यते आध्यात्मिकोब्धातुः ।

**बाह्योब्धातुः कतमः ।** यद्बाह्यमापः अप्गतं-(अब्गतं), स्ने[3]हः स्नेहगतमनु(तमु)पगतमनु-(तमुं)पादत्तं । तत्पुनरुत्सो वा, सरांसि वा, तडागा

1. cf. M. N., III.325 : कतमा च, भिक्खु, आपोधातु ? आपोधातु सिया अज्झत्तिका सिया बाहिरा । कतमा च····अज्झत्तिका आपोधातु ? यं अज्झत्तं पच्चत्तं आपो आपोगतं उपादिन्नं सेय्यथीदं-पित्तं सेम्हं पुब्बो लोहितं सेदो मेदो अस्सु बसा खेळो सिङ्घाणिका लसिका मुत्तं, यं वा पनञ्ञंपि किञ्चि अज्झत्तं पच्चत्तं आपो आपोगतं उपादिन्नं—अयं वुच्चति, भिक्खु, अज्झत्तिका आपोधातु । या चेव खो पन अज्झत्तिका आपोधातु या च बाहिरा आपोधातु आपोधातुरेवेसा ।····; Ś S, p. 132 : तत्र कतमोऽब्धातुः ? यदिदमस्मिन् कायेऽध्यात्मं प्रत्यात्ममापः अब्गतं । अप्त्वं स्नेहः । स्नेहगतं स्नेहत्वं द्रव्यत्वमुपगतमुपात्तम् । तत्पुनः कतमत् । तद्यथा—अश्रु स्वेदः खेटः सिङ्घाणिकं वसा लसीका मज्जा मेदः पित्तं श्लेष्मा पूयः शोणितं क्षीरं प्रस्राव इत्यादि । अयमुच्यते आध्यात्मिकोऽब्धातुः ।; PVŚ, p. 2 : अब्धातुः कतमः । स्निग्धता ।; Sā. Sū., MSS, I.101; Mād. Śā. Sū., MSS, I.109; see AKB, I.12.

वा, नद्यो वा, प्रस्रवणानि वा, इति यो वा पुनरन्योप्येवंभागीयोयमुच्यते बाह्योऽब्धातुः ॥

**तेजोधातुः कतमः**। तेजोधातुर्द्विविधः आध्यात्मिको बाह्यश्च[1] ॥

**तत्राध्यात्मिकस्तेजोधातुः कतमः**। यदध्यात्मं प्रत्यात्मं तेजस्तेजोगतमूष्मा[4]ऊष्म(ग)गतमुपगतमुपादत्तं। तद्यथा यदस्मिन्काये तेजो येनायं काय आतप्यते। संतप्यते, परितप्यते। येन चाशितपीतखादितास्वादितं सम्यक्सुखेन परिपाकं गच्छति। यस्य चोत्सदत्वात् जारितो जारित इति संख्यां गच्छति ॥

**बाह्यस्तेजोधातुः कतमः**। यद्बाह्यं तेजस्तेजोगतमूष्मा(ष्म)गतमनु(मु)[5]पगतमनु(मु)पादत्तं।

1. cf. M. N., III.325 sq. : कतमा च, भिक्खु, तेजोधातु ? तेजोधातु सिया अज्झत्तिका सिया बाहिरा। कतमा च····अज्झत्तिका तेजोधातु यं अज्झत्तं पच्चत्तं तेजो तेजोगतं उपादिन्नं, सेय्यथीदं—येन च सन्तप्पति येन च जीरीयति, येन च परिडय्हति, येन च असितपीतखायितसायितं सम्मा परिणामं गच्छति, यं वा पनञ्ञं पि किञ्चि अज्झत्तं पच्चत्तं, तेजोगतं उपादिन्नं—अयं वुच्चति····अज्झत्तिका तेजोधातु। या चेव खो पन अज्झत्तिका तेजोधातु या च बाहिरा तेजोधातु तेजोधातुरेवेसा।····; ŚS, p. 132 sq. : आध्यात्मिकस्तेजोधातुः कतमः ? यत्किंचिदस्मिन् काये तेजस्तेजोगतमूष्मगतमुपात्तम्। तत्पुनः कतमत् ? येनायं काय आतप्यते संन्तप्यते। येन वास्य अशितपीतखादितानि सम्यक्सुखेन परिपाकं गच्छंति। यस्य चोत्सदत्वाज्ज्वरितो ज्वरित इति संख्यां गच्छति।····बाह्यस्तेजोधातुः कतमः ? यद्बाह्यं तेजस्तेजोगतमूष्मगतमुपगतमुपात्तम्। तत् पुनः कतमत् ? यन्मनुष्या अरणीसहगतेभ्यो गर्भलसहगतेभ्यो वा गोमयचूर्णेन वा कार्पासपिचुना वा समन्वेषते। यदुत्पन्नं ग्राममपि दहति, ग्रामप्रदेशमपि दहति, यावद् द्वीपं वा कक्षं तृणानां वा दावं वा काष्ठं वा यावद् दहन् परैतीत्यादि।; PVŚ, p. 2 ; तेजोधातुः कतमः। उष्णता।; AKB, I.12.

तत्पुनर्यन्मनुष्या अरणीसहगतकेभ्यो गोमयचूर्णेभ्यः समन्वेषते(न्ते)। यत्तूत्पन्नं ग्राममपि दहति। ग्रामप्रदेशमपि। नगरम्वा, नगरप्रदेशम्वा, जनपदम्वा, जनपदप्रदेशम्वा, द्वीपम्वा, कक्षम्वा, दावम्वा, काष्ठम्वा, तृणम्वा, गोमयम्वादहन् परैति। इति यो वा पुनरन्योप्ये[6]वंभागीयः[1] ॥

**तत्र वायुधातुः कतमः**[2]। वायुधातुर्द्विविधः। **आध्यात्मिको बाह्यश्च।**

---

1. It seems that the concluding portion is missing in the MS. [अयमुच्यते बाह्यस्तेजो धातुः] which is suggested by the context.
2. M. N., III.326: कतमा च, भिक्खु, वायोधातु? वायोधातु सिया अज्झत्तिका सिया बाहिरा। कतमा····अज्झत्तिका वायोधातु? यं अज्झत्तं पच्चत्तं वायो वायोगतं उपादिन्नं, सेय्यथीदं—उद्धगमा वाता अधोगमा वाता कुच्छिसया वाता कोट्ठासया वाता अङ्गमङ्गानुसारिनो वाता अस्सासो पस्सासो इति, यं वा पनञ्ञं पि किञ्चि अज्झत्तं पच्चत्तं वायो वायोगतं उपादिन्नं—अयं वुच्चति—अज्झत्तिका वायोधातु। या चेव खो पन अज्झत्तिका वायोधातु या च बाहिरा वायोधातु वायोधातुरेवेसा।; cp. Ś S, p. 133: यत्किञ्चिदस्मिन् काये वायुर्वायुगतं लघुत्वं समुदीणत्वम्। तत्पुनः कतमत्? तद्यथा ऊर्ध्वंगमा वायवोऽधोगमाः पार्श्वाश्रयाः पृष्ठाश्रयाः कुक्षिगमाः शस्त्रकाः क्षुरकाः सूचकाः पिप्पलका वाताष्ठीला वातगुल्मा आश्वासप्रश्वासा अङ्गानुसारिणो वायव इत्यादि। सन्ति बहिर्धा पूर्वे वायवो दक्षिणाः पश्चिमा उत्तरा वायवः, सरजसः अरजसः, परीत्ता महद्गता वायव इति। भवति महाराज स समयो यन्महान् वायुस्कन्धः समदागतः वृक्षाग्रानपि पातयति। कुड्यानपि पर्वताग्रानपि पातयति। पातयित्वा निरुपादानो विगच्छति। यं सत्वावरर्कणिकेन वा विधमनकेन वातानुवृत्तने(न्तेन) वा पर्येषन्ते। यावदयमुच्यते बाह्यो वायुधातुः ॥; PVS, p. 2: वायुधातुः कतमः। लघुसमुदीरणता।; cp. AKB, I.12-d; MSS, I, 101, 109.

**तत्राध्यात्मिको वायुधातुः** । यदप्यध्यात्मं प्रत्यात्मं वायुर्व्वायुगतं । लघुत्वं समुदीरणत्वमुपगतमुपादत्तं । स पुनः सन्त्यस्मिन् काये ऊर्ध्वंगमा वायवः, अधोगमा वायवः, पार्श्वशया वायवः । [7] कुक्षिशया वायवः । पृष्ति(ष्ठि)शया वायवः । वाय्वष्ठीला (वाताष्ठीला[1]) वायवः । क्षुरकपिप्पलकशस्त्रका वायवः । आश्वास-
8A—8// प्रश्वासा वायवः । अंगप्रत्यं//[1][गानुसारिणोवायवः[2]]

**बाह्यो वायुधातुः कतमः** । यद्बाह्यं वायुर्वायुगतं लघुत्वं, समदीरणत्वं । अनु(उ)पगतमनु(मु)-पादत्तं[।]सन्ति बहिर्धा पूर्वा व[ा]यवो, दक्षिणा व[ा]यवः । उत्तरा व[ा]यवः पश्चिमा व[ा]यवः । सरजसो वायवः, अरजसो वायवः, [परीत्ता[3]] महद्गता वायवः, विश्वा वायवो, वैरम्भा वायवः वायु[2]मण्ड-लकवायवः [।]भवति च समयः यन्महान् वायुस्कन्धः समुदागतः वृक्षाग्रानपि पातयति । कुड्याग्रानपि पातयति । पर्वताग्रानपि पातयति । पातयित्वा निरुपादानो निग(निर्ग)च्छति । ये सत्त्वाश्चीवरकर्णिकेन वा पर्येषन्ते, तालवृन्तेन वा, विधमनकेन वा । इति वायुरन्योप्येवंभागीय[: ।।]

1. See Ś S, pp. 133-9.
2. Side of the MS. leaf overlapped by another leaf, letters illegible.
3. Letters damaged by pin-hold, reconstructed by us.

आकाशधातुः[1] कत[3]मः[2] । यच्चक्षुः सौषिर्यम्वा,

---

1. Ākāśa has been regarded by the Vaibhāṣikas as one of the three asaṁskṛta dharmas, AK, I.5-bcd; Vasubandhu defines आकाश as अनावृत्ति (तत्राकाशमनावृत्तिः, ibid); see AKV, I, p. 17; Ākāśa is regarded as स्वप्रतिष्ठित and नित्य, Adv., p. 13; see ŚB, II.2.24; D. N., XVI.313 : अयं आनन्द महापठवी उदके पतिट्ठिता, उदकं वाते पतिट्ठितं, वा तो आकासट्ठो होति; सेय्यथापि, राहुल आकासो न कत्थचि पतिट्ठितो, एवमेव खो त्वं राहुल आकास समं भावनं भावेहि····। M. N. Sutta 62.

2. cf. M. N., III.326 : कतमा च, भिक्खु, आकासधातु ? आकासधातु सिया अज्झत्तिका सिया बाहिरा । कतमा च····अज्झत्तिका····? यं अज्झत्तं पच्चत्तं आकासं आकासगतं उपादिन्नं, सेय्यथीदं—कण्णच्छिद्दं नासच्छिद्दं मुखद्वारं येन च असितपीतखायितसायितं अज्झोहरति, यत्थ च असितपीतखायितसायितं सन्तिट्ठति, येन च असितपीतखायितसायितं अधोभागं निक्खमति, यं वा पनञ्ञं पि किञ्चि अज्झत्तं पच्चत्तं आकासं आकासगतं अघं अघगतं विवरं विवरगतं असम्फुट्ठं मंसलोहितेहि उपादिन्नं—अयं वुच्चति—अज्झत्तिका आकासधातु । या चेव खो पन अज्झत्तिका आकासधातु या च बाहिरा आकासधातु आकासधातुरेवेसा ।····; Ś S, p. 133 : आध्यात्मिक आकाशधातुः कतमः । यत्किंचिदस्मिन् कायेऽध्यात्मं प्रत्यात्ममुपगतमुपात्तमाकाशगतमिहाभ्यन्तरसंख्याभूतम्, अस्फुटमस्फरणीयं त्वङ्मांसशोणितेन । तत्पुनः कतमत् । यदस्मिन् काये चक्षुः सुषिरमिति वा यावन्मुखं वा मुखद्वारं वा कण्ठं वा कण्ठनाड्यो वा । येन चाभ्यवहरति यत्र चावतिष्ठते, येन चास्य अशितपीतखादितास्वादितमधस्तात् प्रघरति, अयमुच्यत आध्यात्मिक आकाशधातुः । एवं बाह्ये पि यदस्फुटमस्फरणीयं रूपगतेनापलिगुद्धं सुषिरभावश्छिद्रम् । अयमुच्यते बाह्य आकाशधातुः ।····अक्षयो ह्याकाशधातुः स्थिरोऽचलः; cf. Adv., p. 13 differentiates between आकाश and आकाशधातु. It regards the former as धर्मायतनसंगृहीत and Eternal, while the latter is रूपायतनसंगृहीत and of the nature of light and darkness...., see pp. 13-4; cf. Vsm., XIV.63, AS, IV.76; Asm., p. 13; see MSS, i, 101, 109; Ś S, p. 120,

श्रोत्रसौषिर्यम्वा, घ्राणसौषिर्यम्वा, मुखसौषिर्यम्वा, कण्ठसौषिर्यम्वा । इति येन चाभ्यवहरति । यत्र वाभ्यवहरति । येन वाभ्यवह्रियते । यदधोभागेन प्रघरति । इति यो वा पुरनरप्योप्येवंभागीयः [?] अयं उच्यते आकाशधातुः ॥

**विज्ञानधातुः कतमः**[1] [।] यच्चक्षुर्विज्ञानं श्रोत्रघ्रा[4]णजिह्वाकायमनोविज्ञानं । तत् पुनश्चित्तं मनोविज्ञानं च । अयमुच्यते विज्ञानधातुः ॥

तत्र मानचरितः पुद्गल इमं धातुप्रभेदं मनसि कुर्वन् काये पिण्डसंज्ञां विभावयति । अशुभसंज्ञां च प्रतिलभते । न च पुनस्तेनोन्नतिं गच्छति । मानं प्रतनु करोति । तस्माच्चरिताच्चित्तं विशोधयति । अयमुच्यते[5]धातुप्रभेदः[2] । मानचरितस्य पुद्गलस्य चरितविशोधनमालम्बनं ॥

---

1. cf. यो नामरूपमभिनिर्वर्तयति नडकलापयोगेन पञ्चविज्ञानकायसंप्रयुक्तं सास्रवं च मनोविज्ञानम्, अयमुच्यते विज्ञानधातुः ॥ MSS, I.101, 109; Ś S, p. 120; cf. AK, I.28 : विज्ञानधातुर्विज्ञानं सास्रवं जन्मनिश्रयाः ।; विञ्ञाणं ति चक्खुविञ्ञाणादि छब्बिधं Vsm., XVII.120; see also, XVII.122-4; for elaboration on मनस् and मनोविज्ञान see Adv., pp. 7-8 and notes thereon; see also p. 12; cf. PVS, pp. 2-3; M.N., III.327 sq.

2. Through anitya, and anātma-bhāvanā of these dhātus, the pudgala realises their non-intrinsic and mutable character and regards them to be full of suffering and thus his attachment towards the phenomenal objects

*(contd. on p. 219)*

**तत्रानापानस्मृतिः कतमा ।[1] आश्वासप्रश्वासालम्बना स्मृतिरियमुच्यते आनापानस्मृति [:] ।**

---

*(contd. from p. 218)*

and the egoistic tendency underlying them (ātmātmīyabhāva) are removed, see Adv., p. 12 : किमर्थं पुनरेत एव धातुषट्कमुपदिष्टम् ? यस्मादस्य भेदात् "अस्मिमानो निवर्तते" कथम् ? षड्धातुप्रभेदादात्मदृष्टिनिरासः । तन्निरासादस्मिमानसमुद्घातः ॥; See M.N., III.324 sq.; Ś S, p. 131 sq., cp. MSA, XI.30, p. 62, XI.47, pp. 66, 158.

1. cf. आनापाने आरब्भ उप्पन्ना सति आनापानसति । अस्सासपस्सासनिमित्तारम्मणाय सतिया एतं अधिवचनं ।····, Vsm.; VII.1; see BDD, pp. 80-2 sq.; cp. Psm., p. 200 : आनं ति अस्सासो नो पस्सासो । अपानं ति पस्सासो नो अस्सासो । अस्सासवसेन उपट्ठानं सति, पस्सासवसेन उपट्ठानं सति । यो अस्ससति तस्सुपट्ठाति, यो पस्ससति तस्सुपट्ठाति ।; cp. Y. S., I.34 : प्रच्छर्दनविधारणाभ्यां वा प्राणस्य and Y. B. (ad ibid) : कौष्ठ्यस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषाद्वमनं प्रच्छर्दनम् । विधारणं प्राणायामः । and Y. B., II.49 : ····बाह्यस्य वायोराचमनं श्वासः । कौष्ठ्यस्य वायोर्निःसारणं प्रश्वासः, this view-point is followed by the sutta-aṭṭhakathās and Buddhaghosa. the Vinaya-aṭṭhakathās go against this, see BDD, p. 81, f.n. 1; it seems that Asaṅga also shares the same view; ānāpānasati is one of the forty Kammaṭṭhānas and Buddhaghosa regards it as the most sublime among them all (Vsm., VIII.148 sq.), this is the base (ālaṁbana) of the four dhyānas along with the ten kasiṇas, is contemplated for the extinction of vitarka (ibid, III.122) and purification of the body and the mind and is favourable to the Vitarkacarita and the Mohacarita pudgalas (Vsm., III.121)

*(contd. on p. 220)*

तत्र द्वावाश्वासौ कतमौ ।

द्ववौ आश्वासोऽन्तराश्वासश्च ।

द्वौ प्रश्वासौ कतमौ ।

द्वौ प्रश्वासोन्तरप्रश्वासश्च ।

तत्र श्वास: य: प्र[6]श्वाससमनन्तरं अन्तर्मुखो वायु: प्रवर्त्तते । यावन्नाभीप्रदेशात् ।

तत्रान्तराश्वासो य उपरतेस्मिन्नाश्वासे न तावत्प्रश्वास उत्पद्यते । यदन्तरालविश्रामस्थानसहगत इत्वरकालीनस्तदनुसदृशो वायुरुत्पद्यते । अयमुच्यतेन्तराश्वास: ।

यथाश्वासोऽन्तराश्वासश्चैवं प्रश्वासोन्तर(न्त:)-प्र[7]श्वासश्च वेदितव्य: । तत्रायं विशेष: । बहिर्मुखो वायु: प्रवर्तते बहि[:] नाभीदेशमुपादाय । यावन्मुखाग्रान्नासिकाग्रा[त्]ततो वा पुनर्बहि: ।

द्वावाश्वासप्रश्वासनिदानौ [।]कतमौ द्वौ । तदाक्षे

8B—8// //[1] पकं च कर्म. नाभीप्रदेशसौषिर्यं[1] च । ततो वा

---

(contd. from p. 219)

and is comprehended through sparśa (ibid, III.119); cp. also (Psm., pp. 199-200) :

निमित्तं अस्सासपस्सासा, अनारम्मणमेकचित्तस्स ।
जानतो च तयो धम्मे, भावना उपलब्भति ।।
आनापानस्सति यस्स, परिपुण्णा सुभाविता ।
अनुपुब्बं परिचिता, यथा बुद्धेन देसिता ।।
सो इदं लोकं पभासेति, अब्भा मुत्तो व चन्दिमा ।।

1. Letters damaged by pin-hold.

पुन[रुत्पन्नं[1]]यत्कायसौषिर्यं [।] द्वावाश्वासप्रश्वासयोः संनिश्रयौ कतमौ। द्वौ कायश्चित्तं च। तत्कस्य हेतोः [।] कायसंन्नि(सन्नि)श्रिताश्चित्तसंन्नि(सन्नि)-श्रिताश्चाश्वासप्रश्वासाः प्रवर्तन्ते। ते च यथायोगं स चेत्कायसंन्निश्रिता [एव[1]]प्रवर्तेरन्। असंज्ञिस-मापन्नानां, निरोधसमापन्नानां असंज्ञि[2]सत्त्वेषु देवेषूपपन्नानां सत्त्वानां प्रवर्तेरन्। स चेच्चित्तसन्नि-श्रिता एव प्रवर्त्तेरन्। तेनारूप्यसमापन्नोपपन्नानां सत्त्वानां प्रवर्तेरन्। स चेत्कायसन्निश्रिताश्चित्तसन्नि-श्रिताः प्रवर्तेरन्। ते च न यथायोगं तेन चतुर्थध्यान-समापन्नोपपन्नानां, कललगतानाञ्चार्बुदगतानां, पेशी-गतानां सत्त्वानां [3] प्रवर्तेरन्। न च प्रवर्त्तते(तन्ते)। तस्मादाश्वासप्रश्वासा[2]त्कायसन्निश्रिताश्चि(तस्मादाश्वा–सप्रश्वासाः कायसन्निश्रिताश्चि)त्तसन्निश्रिताश्च प्रवर्त्तन्ते तेन यथायोगं।

**द्वे आश्वासप्रश्वासयोर्गती** [।] कतमे द्वे। आश्वासयोरधोगतिः। प्रश्वासयोरूर्ध्वंगतिः।

द्वे आश्वासप्रश्वासयोर्भूमी। कतमे द्वे। औदारिकं च सौषिर्यं, सूक्ष्मं च (।) सौषिर्यं। **तत्रौदारिकं सौषि[4]र्यं** नाभीप्रदेशमुपादाय। यावन्मुखनासिकाद्वारं। मुखनासिकाद्वारमुपादाय

1. Letters damaged by pin-hold.
2. Wayman reads तस्मादाश्वासप्रश्वासाः.

यावन्नाभीप्रदेशसौषिर्यं । **सूक्ष्मसौषिर्यं कतमत्** । सर्व्वं-कायगतानि रोमकूपानि(पाः) ॥

चत्वार्यश्वासप्रश्वासानां पर्यायनामानि [।] कतमानि चत्वारि । वायव[:], आनापानाः, आश्वासप्रश्वासाः । कायसंस्काराश्चेति । तत्रान्यै-र्वायुभिः साधारणं [5] पर्यायनामैकं । यदुत वायु-रिति । असाधारणानि तदन्यानि त्रीणि ।

**द्वावपक्षालावाश्वाप्रश्वासप्रयुक्तस्य** [।] कतमौ **द्वौ** । **अशिथिलप्रयोगता च, सत्याभ्यवष्टब्धप्रयोगताच** । तत्राशिथिलप्रयोगतया कौसीद्यप्राप्तस्य स्त्यानमिद्धम्वा चित्तं पर्यवनह(ह्य)ति, बहिर्धा वा विक्षिप्यते । तथाभ्य-वष्टब्धप्रयुक्तस्य कायवै[6]षम्यं चोत्पद्यते । चित्त-वैषम्यम्वा । कथं कायवैषम्यमुत्पद्यते । बलाभिनि-ग्रहेणानाश्वासप्रश्वासानभिनिष्पीडयतः काये विषमा वायवः प्रवर्त्तन्ते । येस्य तत्प्रथमतस्तेषु तेष्वंगप्रत्यङ्गेषु स्फुरन्ति । ये स्फारकाय (स्फुरका) इत्युच्यन्ते । ते
8A—9// पुनः स्फुरका वायवो विवर्द्धमाना रु//[1]जका भवन्ति । येप्येतेष्वंगप्रत्यंगेषु रुजमुत्पादयन्ति । इद-मुच्यते कायवैषम्यं ॥ कथं चित्तवैषम्यमुत्पद्यते । चित्तम्वास्य विक्षिप्यते । प्राग[सौ[1]] न वा दौर्मनस्यो-पायासेनाभिभूयते । एवं चित्तवैषम्यमुत्पद्यते ॥

1. Added by a separate hand, illegible.

**अस्या आनापानस्मृतेः पञ्चविधः प[रिचयो[1]] वेदितव्यः । तद्यथा गणनापरिचयः, स्कन्धावतार-परिचयः ।** [2] **प्रतीत्यसमुत्पादावतारपरिचयः । सत्यावतारपरिचयः । षोडशाकारपरिचयश्च ।**

**तत्र गणनापरिचयः कतमः ।**[2] समासतश्चतुर्विधो **गणनापरिचयः ।** तद्यथा **एकैकगणना** [।]**द्वयैक-गणना** [।] **अनुलोमगणना । प्रतिलोमगणना च ।।**

**तत्रैकैकगणना कतमा ।** यदा आश्वासः प्रविष्टो भवति । तदा आश्वास[3]प्रश्वासोपनिबद्धया स्मृत्या एकमिति गणयति । यदा आश्वासे निरुद्धे प्रश्वास उत्पद्य निर्गतो भवति । तदा द्वितीयं गणयत्येवं यावद्दश गणयति । एषा हि गणना संख्या नाति-संक्षिप्ता नातिविस्तरा इयमुच्यते एकैकगणना ।।

**द्वयैकगणना कतमा ।** यदा आश्वासः प्रविष्टो भवति, निरुद्धश्च । प्रश्वास उत्प[4]न्नो भवति । निर्गतश्च तदा एकमिति गणयति । अनेन गणनायोगेन यावद्दश गणयति । इयमुच्यते । द्वयैकगणना । आश्वासं च प्रश्वासं चेदं द्वयमेकत्यमभिसंक्षिप्यैकमिति गणयति तेनोच्यते द्वयैकगणना ।।

**अनुलोमगणना कतमा ।** अनयैवैकैकगणनया, द्वयैकगणनया वा, अनुलोमं यावद्दश ग[5]णयति ।

1. Letters damaged by pin-hold.
2. This has been enumerated in Mvy., LIII.2.

इयमुच्यते अनुलोमगणना ।।

**प्रतिलोमगणना कतमा ।** प्रतिलोमं दश उपादाय, नवाष्टौ, सप्त, षट्, पंच, यावदेकं गणयति । इयमुच्यते प्रतिलोमगणना ।

यदा स एकैकगणनां निश्रित्य, द्वयैकगणनाम्वा, अनुलोमगणनायां, प्रतिलोमगणनायां च कृतपरिचयो भवति । न चास्यान्तराच्चित्तं विक्षिप्यते [।] [6]अविक्षिप्तचित्तश्च गणयति । **तदास्योत्तरगणना-विशेषो** व्यपदिश्यते ।

**कतमो गणनाविशेषः ।** एकैकगणनया वा, द्वयैक-गणनया वा, द्वयमेकं कृत्वा गणयति । तत्र द्वयैक-गणनया चत्वार आश्वासप्रश्वासा एकं भवति । एकैकगणनया पुनराश्वासप्रश्वासश्चैकं भवत्येवं यावद्दश गणयति । एवमुत्तरोत्तर[7]वृद्ध्या यावच्छतमप्येकं कृत्वा गणयति । तदा शतैकगणनयानु-पूर्व्वेण यावद्दश गणयति । एवमस्य गणनाप्रयुक्तस्य यावद्दशैकं कृत्वा गणयति । यावच्च दश परिपूरयति । तया दशैकगणनया न चास्योत्तराच्चित्तम्विक्षिप्यते । इयता तेन गणनापरिचयः कृतो भवति ।

तस्य च गणनाप्रयुक्तस्य स चेदन्तराच्चित्तं वि[8]क्षिप्यते तदा पुनः प्रतिनिवर्त्यादितो गणयितु-मारभते । अनुलोमम्वा, प्रतिलोमम्वा [।] यदा चास्य गधयाच्चित्तं स्वरसेनैव बाहिमार्ग(स्वरसवाहि-

मार्गेणैव) समारूढमाश्वासप्रश्वासालम्बनोपनिबद्धमव्य-
वच्छिन्नं निरन्तरं, प्रवर्त्तमासे आश्वास(से) प्रवृत्ति-
ग्र[ा]हकं, निरुद्धे आश्वासे प्रश्वासशून्यावस्थाग्राहकं,
8B—9// प्रवृत्ते प्रश्वासे प्रवृ//[1]त्तिग्राहकं, निवृत्ते पुनर्निवृत्ति-
ग्राहकं, अविकंप्यमविचलमविक्षेपाकारं, साभिरामं च
प्रवर्त्तते । इयता गणनाभूमिसमतिक्रमो भवति ।

पुनस्तदा गणयितव्यं भवति । नान्यत्राश्वास-प्रश्वासालम्बनं चित्तमुपनिबध्यते । आश्वासप्रश्वासा अनुगन्तव्याश्चा[भिलक्ष[1]]यितव्याश्च सान्तराश्वास-प्रश्वासाः सप्रवृत्तिनिवृत्त्यवस्थाः [2]अयमुच्यते गणनापरिचयः ।

स खल्वेष गणनापरिचयो मृद्विन्द्रियाणां व्यपदिश्यते । तेषामेतद् व्याक्षेपस्थानं भवति । चित्तस्थितये चित्तनिरतये [।] अन्यथा गणनामन्तरेण तेषां स्त्यानमिद्धम्वा चित्तं पर्यवहेत्, बहिर्धा वा चित्तं विक्षिप्येत, गणनाप्रयुक्तेन तु तेषामेतन्न भवति ।

ये तु तीक्ष्णेन्द्रियाः पटुबुद्धयः तेषां पु[3]नर्गणना-प्रयोगेण प्रियारोहता भवति । तत्रोपदिष्टा एवं गणना-प्रयोगं लघु लघ्वेव प्रतिविध्यन्ति । न च तेनाभिर-मन्ते [।]ते पुनराश्वासप्रश्वासालम्बनां स्मृतिमुपनिबध्य यत्र च प्रवर्त्तन्ते, यावच्च प्रवर्त्तन्ते । यथा च प्रवर्त्तन्ते,

1. Letters damaged by pin-hold.

यदा च प्रवर्त्तन्ते । तत्सर्वमनुप्रच्छत्युपलक्षयत्युपस्थितया स्मृत्या [।]अयमेवं रूपस्तेषां प्र[4]योगः ।

तस्य च प्रयोगस्यासेवनान्वयाद्भावनान्वयाद् बहुलीकारान्वयात्कायप्रश्रब्धिरुत्पद्यते, चित्तप्रश्रब्धिश्च । एकाग्रतां च स्पृशत्यालम्बनाभिरतिं च निर्गच्छति । य एवं कृतपरिचयो ग्राह्यग्राहकवस्तुमनसिकारेण स्कन्धानवतरति । ये चाश्वासप्रश्वासा यश्चैषामाश्रय-कायस्तं म[5]नसि कुर्व्वन् रूपस्कन्धमवतरति । या तेषामाश्वासप्रश्वासानां तद्ग्राहिकया स्मृत्या संप्रयुक्ता अनुभावना स वेदनास्कन्ध इत्यवतरति । या संजानना[स[1]]संज्ञास्कन्ध इत्यवतरति । या चासौ स्मृतिर्या च चेतना, या च (।) तत्र प्रज्ञा । अयं संस्कार[2] इत्युवतरति । यच्चित्तं, मनो, विज्ञानमयं विज्ञानस्कन्ध इत्यवतरति । या तद्बहुलवि[6]हारिता । एवं स्कन्धेष्ववतीर्ण्णस्यायमुच्यते **स्कन्धावतार-परिचयः ।**

यदा चानेन स्कन्धमात्रं दृष्टं भवति । परिज्ञातं ससंस्कारमात्रं, वस्तुमात्रं, तदा स एषामेव संस्काराणां **प्रतीत्यसमुत्पादमवतरति ।**

कथं च पुनरवतरति । स एवं रूपमन्वेषते, पर्येषते,

---

1. Added by a separate hand.
2. It seems that after संस्कार, three syllables [स्कन्ध] have been omitted in the MS. by scribal mistake.

इतीमे आश्वासप्रश्वासाः किमाश्रिताः, किंप्रत्ययास्तस्यैवं भवति । [7] कायाश्रिता एते आश्वासप्रश्वासाः कायप्रत्ययाच्चि(श्च)त्ताश्रिताश्चित्तप्रत्ययाश्च । कायः पुनश्चित्तं च किं प्रत्ययं च [।] **स कायं(यः) चित्तञ्च जीवितेन्द्रियप्रत्ययमित्यवतरति** । पूर्व्वकः संस्कारः [।] स पूर्व्वकं संस्कारमविद्याप्रत्ययमि(इ)त्यवतरति । इति हि[8]अविद्याप्रत्यय(ः)पूर्व्वकः संस्कारः सर्व्व-संस्कारप्रत्ययं जीवितेन्द्रियं, जीवितेन्द्रियप्रत्ययः कायो, विज्ञानं च, कायचित्तप्रत्यया आश्वासप्रश्वासाः । तत्रा-विद्यानिरोधात् संस्कारनिरोधः । संस्कार निरोधाज्जीवितेन्द्रियनिरोधः । जीवितेन्द्रियनिरो-धात्कायचित्तनिरोधः [।] कायचित्तनिरोधादाश्वास-
9A—1// प्रश्वासनिरोधः । एवमसौ प्रती//[1]त्यसमुत्पाद-मतवरति ।

स तद्बहुलविहारी प्रतीत्यसमुत्पा[दाका[1]]रे कृतपरिचय इत्युच्यते । अयमुच्यते **प्रतीत्यसमुत्पादावतारपरिचयः**[2] [।]

---

1. Letters damaged by pin-hold, restored by us.
2. From here begins the सत्यावतारपरिचय which is intimately related to the षोडशाकारपरिचय of आनापानस्मृति. The षोडशाकाराः comprising the four-fold enumeration and classification of the आर्यसत्यs have been enumerated in Mvy., LIV.5-21 : समुदयः । प्रभवः । हेतुः । प्रत्ययः । निरोधः । प्रणीतः । निस्सरणं । मार्गः । न्यायः । प्रतिपत्तिः । नैर्याणिकः । आनन्तर्यमार्गः । विमुक्तिमार्गः । अभिसमयान्तिकं कुशलमूलं । क्षयज्ञानलाभिकं कुशलमूलं ।.

स एवं प्रतीत्यसमुत्पादे कृतपरिचयो य एते संस्काराः प्रतीत्यसमुत्पन्नाः। अनित्या एत इत्यवतरति। अनित्यत्वादभूत्वा[च[1] प्रति]विगच्छन्ति। पुनरेते अभूत्वा भवन्ति। भूत्वा च प्रतिविगच्छन्ति। ते जाति [2]धर्माणो, जराधर्माणो, व्याधिधर्माणो, मरण-धर्माणः। ये जातिजराव्याधिमरणधर्माणस्ते दुःखा, ये दुःखास्तेनात्मानः, अस्वतन्त्राः, स्वामिविरहिताः[2] [।] एवं सोनित्यदुःखशून्यानात्माकारैर्दुःखसत्यमवतीर्णो भवति। या काचिदेषा[ ]संस्काराणामभिनिर्वृत्तिः। दुःखभूता, रोगभूता, गण्डभूता, सर्व्वासौ तृष्णा-प्रत्यया(:)। य[3]त्पुनरस्या दुःखजनिकायास्तृष्णाया अशेषप्रहाणमेतच्छान्तमेतत्प्रणीतमेतत्तमेवं च मे जानत, एवं बहुलविहारिणस्तृष्णाया अशेषप्रहाणं भविष्यतीति। एवं हि समुदयसत्यं, निरोधसत्यं, मार्गसत्यमवतीर्णो भवति। स तद्बहुलविहारी यदा सत्यान्यभिस-मागच्छति। अयमुच्यते **सत्यावतारपरिचयः** [।]

तस्यैवं सत्येषु कृतपरिचयस्य। [4]दर्शनप्रहातव्येषु धर्मेषु प्रहीणेषु भावनाप्रहातव्या अवशिष्टा भवन्ति। येषां प्रहाणाय **षोडशाकारपरिचयं करोति**।

1. Letters damaged by pin-hold, restored by us.
2. See also *infra*, Yogasthāna, III; DBS, pp. 32-4; S. N., II.24; MKV(V), pp. 104-5; 240-1; LV, XIII. 100 sq.; SRS, IX, pp. 45-53, pp. 190-2.

कतमे पुनः षोडशाकाराः[1] । स्मृत आश्वासः (त

1. cp. S. N., IV.275 sq. : कथं भावितो च, आनन्द, आनापानस्सति समाधि····महप्फलो होति महानिसंसो ? इधानन्द भिक्खु अरञ्ञगतो वा रुक्खमूलगतो वा सुञ्ञागारगतो वा निसीदति पल्लङ्कं आभुजित्वा उजुं कायं पणिधाय परिमुखं सतिं उपट्ठपेत्वा । सो सतो च अस्ससति, सतो च पस्ससति ····'पटिनिस्सग्गानुपस्सी अस्ससिस्सामीति सिक्खति, 'पटिनिस्सग्गानुपस्सी पस्ससिस्सामी' ति । एवं भावितो खो, आनन्द, आनापानस्सतिसमाधिः···· महप्फलो होति महानिसंसो ।

यस्मिं समये, आनन्द, भिक्खु दीघं वा अस्ससन्तो 'दीघं अस्ससामी' ति पजानाति, दीघं वा पस्ससन्तो 'दीघं पस्ससामी' ति पजानाति, रस्सं वा···· सब्बकायपटिसंवेदी अस्ससिस्सामी' ति सिक्खति, 'सब्बकायप्पटिसंवेदी पस्ससिस्सामी' ति सिक्खति, 'पस्सम्भयं कायसङ्खारं अस्ससिस्सामी' ति सिक्खति, पस्सम्भयं कायसङ्खारं पस्ससिस्सामी' ति सिक्खति—काये कायानुपस्सी, आनन्द, भिक्खु तस्मिं समये विहरति आतापी सम्पजानो सतिमा, विनेय्य लोके अभिज्झादोमनस्सं ।····यस्मिं समये, आनन्द, भिक्खु 'पीतिप्पटिसंवेदी अस्ससिस्सामी' ति सिक्खति, 'पीतिप्पटिसंवेदी पस्ससिस्सामी' ति सिक्खति, 'सुखप्पटिसंवेदी अस्ससिस्सामी' ति सिक्खति, पस्ससिस्सामी' ति सिक्खति, चित्तसङ्खारप्पटिसंवेदी अस्ससिस्सामी' ति····' पस्ससिस्सामी' ति सिक्खति, 'पस्सम्भयं चित्तसङ्खारं पस्ससिस्सामीति सिक्खति—वेदनासु वेदनानुपस्सी, आनन्द, भिक्खु तस्मिं समये विहरति···· । यस्मिं समये आनन्द, भिक्खु 'चित्तप्पटिसंवेदी अस्ससिस्सामी' ति····'पस्सिस्सामी' ति सिक्खति, अभिप्पमोदयं चित्तं····समादहं चित्तं····'विमोचयं चित्तं अस्सिस्सामी' ति····पस्ससिस्सामी' ति सिक्खति—चित्ते चित्तानुपस्सी····भिक्खु तस्मिं समये विहरति । ····यस्मिं समये····भिक्खु 'अनिच्चानुपस्सी अस्सासिस्सामी' ति सिक्खति····विरागानुपस्सी··निरोधानुपस्सी····पटिनिस्सग्गानुपस्सी अस्ससिस्सामी' ति····पस्ससिस्सामी' ति सिक्खति—धम्मेसु धम्मानुपस्सी····भिक्खु तस्मिं समये विहरति ।····; *vide* also Arthaviniścayasūtra, MSS, I.323-4 (षोडशाकारा आनापानस्मृतिः); for further details, see, Vsm., VIII.145 sq.; BDD, pp. 54-6, 80-5 sq., 87, 91, 94 etc.; this षोडशाकारपरिचय of आनापानस्मृति also finds mention in Mvy.,

*(contd. on p. 230)*

आश्वसन्) स्मृत आश्वसिमीति शिक्षते। स्मृतः प्रश्वसन् प्रश्वसिमीति शिक्षते। दीर्घं ह्रस्वं सर्वकायप्रतिसम्वेदी। आश्वसन् सर्वकायप्रतिसंवेदी। आश्वसिमीति शिक्ष[5]ते। सर्वकायप्रतिसंवेदी प्रश्वसन्। सर्वकायप्रतिसंवेदी प्रश्वसिमीति शिक्षते। प्रश्रभ्य कायसंस्कारानाश्वसन्प्रश्रभ्यकायसंस्काराना-श्वसिमीति शिक्षते। प्रश्रभ्य कायसंस्कारान् प्रश्वसन्, प्रश्रभ्य कायसंस्कारान् प्रश्वसिमीति शिक्षते। प्रीतिप्रतिसंवेदी सुखप्रतिसंवेदी शिक्षते। चित्तसंस्कारप्रतिसम्वेदी प्रश्रभ्य चि[6]त्तसंस्कारानाश्वसन्, प्रश्रभ्य चित्तसंस्कारानाश्वसिमीति शिक्षते। प्रश्रभ्य चित्त-

---

*(contd. from p. 229)*

LIII.8-23 : ह्रस्वमाश्वसन् ह्रस्वमाश्वसिमीति यथाभूतं प्रजानाति। ह्रस्वं प्रश्वसन् ह्रस्वं प्रश्वसामीति यथाभूतं प्रजानाति। दीर्घमाश्वसन् दीर्घमाश्वसामीति यथाभूतं प्रजानाति। मर्वकायप्रतिसंवेद्याश्वसन् सर्वकायप्रतिसंवेद्याश्वसामीति यथाभूतं प्रजानाति। मर्वकायप्रतिसंवेदी प्रश्वमन् मर्वकायप्रतिसंवेदी प्रश्वसामीति यथाभूतं प्रजानाति। प्रस्रभ्य कायसंस्कारानाश्वसन् प्रस्रभ्य कायसंस्कारानाश्व-सामीति यथाभूतं प्रजानाति। प्रस्रभ्य कायसंस्कारां प्रश्वसन् प्रश्रभ्य कायसंस्कारां प्रश्वसामीति यथाभूतं प्रजानाति। प्रीतिप्रतिसंवेद्याश्वमन्प्रीतिप्रतिसंवेद्याश्वसामीति यथाभूतं प्रजानाति। प्रीतिप्रतिसंवेदी प्रश्वसन् प्रीतिप्रतिसंवेदी प्रश्वसामीति यथाभूतं प्रजानाति। चित्तसंस्कारप्रतिसंवेद्याश्वसन् चित्तसंस्कारप्रतिसंवेद्याश्व-सामीति यथाभूतं प्रजानाति। चित्तसंस्कारप्रतिसंवेदी प्रश्वसन् चित्तसंस्कार-प्रतिसंवेदी प्रश्नसामीति यथाभूतं प्रजानाति। प्रश्रभ्य चित्तप्रतिसंस्कारानाश्वसन् प्रश्रभ्य चित्तसंस्कारानाश्वसामीति यथाभूतं प्रजानाति। प्रश्रभ्य चित्तसंस्कारां प्रश्वसन् प्रश्रभ्य चित्तसंस्कारां प्रश्वसामीति यथाभूतं प्रजानाति। चित्तप्रतिसंवेद्या-श्वमन् चित्तप्रतिसंवेद्याश्वमामीनि यथाभूतं प्रजानाति। चित्तप्रतिमंवेदी प्रश्वसन् चित्तप्रतिसंवेदी प्रश्वसामीति यथाभूतं प्रजानाति।

संस्कारान् प्रश्वसन्, प्रश्रभ्य चित्तसंस्कारान् प्रश्वसिमीति शिक्षते। चित्तप्रतिसंवेदी। अभिप्रमोदयंश्चित्तं[1], समादधच्चित्तं, विमोचच्चित्तं आश्वसन् विमोचयन् चित्तं विमोचयतीति माश्वसिमीति शिक्षते। विमोचयंश्चित्तं प्रश्वसन् विमो[7]चयंश्चित्तं प्रश्वसिमीत शिक्षते[2]। अनित्यानुदर्शी, प्रहाणानुदर्शी, विरागानुदर्शी आश्वसन्निरोधानुदर्शी आश्वसिमीति शिक्षते[3]। निरोधानुदर्शी प्रश्वसन्निरोधानुदर्शी प्रश्वसिमीति शिक्षते[4]। कः पुनरेषां विभागः (।) आकाराणां [।] स शैक्षो दृष्ट(प्र)पवादो लाभीभवति। चतुर्णां स्मृत्युपस्थानानां आश्वा[8]सप्रश्वासालम्बनं च (।) मनस्कारमारभते। अवशिष्टानां

---

1. The MS. here is incomplete. The correct reading would be [अभिप्रमोदयंश्चित्तं समादधंश्चित्तं विमोचयंश्चित्तमाश्वसन्नभिप्रमोदयंश्चित्तं]समादधंश्चित्तं विमोचयंश्चित्तमाश्वसिमीति शिक्षते।
2. The correct reading seems to be [अभिप्रमोदयंश्चित्तं समादधंश्चित्तं] विमोचयंश्चित्तं प्रश्वसन्न[भिप्रमोदयंश्चित्तं समादधंश्चित्तं]विमोचयंश्चित्तं प्रश्वसिमीति शिक्षते।
3. The correct reading seems to be अनित्यानुदर्शी प्रहाणानुदर्शी विरागानुदर्शी निरोधानुदर्शी आश्वसन्न[नित्यानुदर्शी प्रहाणानुदर्शी विरागानुदर्शी] निरोधानुदर्शी आश्वसिमीति शिक्षते।
4. The correct reading is [अनित्यानुदर्शी प्रहाणानुदर्शी विरागानुदर्शी] निरोधानुदर्शी प्रश्वस[न्ननित्यानुदर्शी प्रहाणानुदर्शी विरागानुदर्शी] निरोधानुदर्शी प्रश्वसिमीति शिक्षते। The portion in the square brackets is lacking in the MS. and has been restored and supplied by us.

संयोजनानां प्रहाणाय [।] तेनाह स्मृतः । आश्वसन् स्मृत आश्वसिमीति शिक्षते । यदा आश्वासं वा प्रश्वासम्वा आलम्बते तदा दीर्घम् आश्वसिमि
9B—1// प्रश्वसिमीति शिक्षते । यदा अन्तराश्वास//[1] मन्तरा(न्तः)प्रश्वासं वा[ऽऽ]लम्बनीकरोति । तदा ह्रस्वमा[श्वसिमि[1]] प्रश्वसिमीति शिक्षते । तथा हि आश्वासप्रश्वासा दीर्घाः प्रवर्त्तन्ते । अन्तराश्वासा अन्तर(न्तः) प्रश्वासाश्च ह्रस्वास्ते तथैव प्रवर्त्तन्ते । तथैवोपलक्षयति । जानाति । यदा सूक्ष्मसौषियगतानाश्वासप्रश्वासा[[2]]विक्षेपानुप्रविष्टान् काये अधिमुच्यते । [2]आलम्बनीकरोति । निरुद्धे च प्रश्वासेऽन्तर(न्तः)प्रश्वासे च । अनुत्पन्ने आश्वासेन्तराश्वासे च । प्रश्वासाश्वासशून्यां, तद्व्युपेतां, तद्व्यवहितां सितामवस्था[3]मालम्बनी करोति ॥

तस्मिन् समये प्रश्रभ्य कायसंस्कारानाश्वसन्, प्रश्रभ्य कायसंस्कारानाश्वसिमीति शिक्षते । प्रश्रभ्य कायसंस्कारान् प्रश्वसन्, प्रश्रभ्य कायसंस्कारान् प्रश्वसिमीति शिक्षते । अपि तु खलु तस्यासेवनान्वयाद्भावनान्वयाद् बहुलीकरान्वयात् । ये खरा, दुःसंस्पर्शा, आश्वासप्रश्वासाः पूर्व्वमकृतप[4]रिचयस्य प्रवृत्ता

1. Last three syllables damaged by pin-hold.
2. Letters damaged by pin-hold, illegible, might be न्त्रिधा.

भवन्ति । कृतपरिचयस्य अन्ये च मृदवः सुखसंस्पर्शाः प्रवर्त्तन्ते । तेनाह । प्रश्रभ्य कायसंस्कारानाश्वसिमीति शिक्षते । स चैवमानापानस्मृतिप्रयोगेण च युक्तः स चेल्लाभी भवति । प्रथमस्य वा ध्यानस्य, द्वितीयस्य वा यस्मिन् समये प्रीतिप्रतिसंवेदी आश्वसन्, प्रीति-प्रतिसंवेदी (।) आश्वसि[5]मीति शिक्षते । स चेत्पुनर्लाभी भवति । निष्प्रीतिकस्य तृतीयस्य ध्यानस्य [।] स तस्मिन् समये सुखप्रतिसंवेदी भवति ।

तृतीयध्यानादूर्ध्वं आनापानस्मृतिसंप्रयोगो नास्ति । येन यावत्तृतीयध्यानात् परिकीर्तितं संगृहीतं । तस्यैवं प्रीतिप्रतिसंवेदिनो वा, सुखप्रतिसंवेदिनो वा [।] स चेत्कदाचित्कर्हि (र्हि) चित्स्मृतिसंप्रमो[6]षादुत्पद्यते । अस्मीति वा अयमहमस्मीति वा भविष्यामीति वा, न भविष्यामीति वा, रूपी भविष्याम्यरूपी भविष्यामि । संज्ञी, असंज्ञी । नैव संज्ञी, नासंज्ञी भवि-ष्यामीत्येवं संमोहसंज्ञाचेतनासहगतमिञ्जितं मन्थित-प्रपञ्चिता (तम) भिसंस्कृतं तृष्णागतमुत्पद्यते । य[त्]तदुत्पन्नं लघु लघ्वेव प्रज्ञया प्रतिविध्यति । नाधिवासय[7]ति । प्रजहाति । विनोदयति । व्यन्ती-करोति । एवं चित्तसंस्कारप्रतिसंवेदी[1] प्रश्रभ्य चित्त-

1. MS. is incorrect here. The correct form seems to be प्रश्रभ्य चित्तसंस्कारानाश्वसन्प्रश्रभ्य चित्तसंस्कारानाश्वसिमीति शिक्षते, the portion in the square brackets hereafter has been added by a separate hand in a very dim and illegible footnote.

संस्कारानाश्वसिमीति [आश्वसन् प्रश्रभ्य चित्त-संस्कारानाश्वसिमीति] शिक्षते ।

स चेत्पुनर्लाभी भवति मौलानां प्रथमद्वितीय-तृतीयध्यानानां स चावश्यमनागम्यस्य प्रथमध्यान सामन्तकस्य लाभी भवति । स तं नि(तन्नि)श्रित्योत्पन्नं स्वं चित्तं प्रत्यवेक्षते । सरागं वा, विगत[8]रागम्वा । सद्वेषम्वा, विगतद्वेषम्वा, संमोहं(समोहं) विगतमोहं, संक्षिप्तं, लीनं, प्रगृहीतमुद्धतमनुद्धतं, व्युपशान्तमव्युप-शान्तं, समाहितमसमाहितं, सुभावितमसुभावितं,
9A—2// विमुक्तं चित्तमविमुक्तं चित्तमिति यथाभूतं प्रजा//[1]-नाति । प्रतिसंवेदयति । तेनाह चित्तप्रतिसंवेदी ।

स यदा स्त्यान[मिद्ध[1]]निवरणे चित्तं निश्रितं(।) भवति । अध्यात्मं संगमयतः यदान्यतमान्यतमेन प्रस[ा]दनीयेनालम्बनेन संदर्शयति । समादापयति । समुत्तेजयति । संप्रदीपयति । तेनाह [।]अभिप्रमोदयं-श्चित्तं [।]

यदा [पुन[1]]रौद्धत्यनिवरणेन कौकृत्यनिवरणेन निवृत्तं पश्यति । अभिसंप्रगृह्णत [2]स्तदा अन्यतम-मान्यतमेन प्रस[ा]दनीयेनालम्बनेन संदर्शयत्यध्यात्मम-वस्थापयति । शमयति, समाधत्ते । तेनाह समदधच्चितं(समादधंश्चित्तं) [।]

यदा च तच्चित्तमासेवनान्वयाद् भावनान्वयाद्

1. Syllables damaged by pin-hold,

बहुलीकरान्वयान्निवरणसमुदाचाराय दूरी कृतं भवति । निवरणेभ्यो विशोधितं[1] (विमोचितं) [।] तेनाह [।] विमोचयच्चि (यंश्चि) त्तमाश्वसन् । विमोचयंश्चित्त-माश्वसिमीति शिक्षते ।

तस्य निवर[3]णेभ्यो विमुक्तचेतसो मार्गभावनाया आन्तरायिकेभ्य: अनुशया [अ[2]]वशिष्टा भवन्ति । प्रहातव्या: [।] स तेषां प्रहाणाय मार्गं संमुखीकरोति यदुत संस्कार[ा]नित्यतामेव साधु च, सुष्ठु च, योनिश: प्रत्यवेक्षते । तेनाह । अनित्यानुदर्शी । तेन च पूर्वं प्रथमद्वितीयतृतीयध्यानसन्निश्रयेणानागम्य-संनिश्रयेण वा पुन: शमथयोग: [।] ऋजुं [4] एतर्हि अनित्यानुदर्शि (र्शी) विपश्यनायां योगं करोत्येव अस्य तच्चित्तं शमथविपश्यनापरिभावितं धातुषु विमुच्यते । यदुतानुशयेभ्य: ।

**कतमे धातव:**[3] [।] **यश्च प्रहाणधातुर्यश्च**

---

1. *Vide*, *supra*, folio 9-A-1, lines 6-8.
2. MS. omits this.
3. cp. A. N., IV.183-5; त्रय: साकल्येन धातव: । प्रहाणधातु: वैराग्यधातु: निरोधधातु: । जहाति रागसंयोजनं सर्वानन्यक्लेशानिति प्रहाणधातु: । रागसंयोजन-प्रहाणमुच्यते वैराग्यधातु: । सर्वान्यधर्मप्रहाणं नाम निरोधधातु: । Ada., p. 129; cp. AK with AKB, VI.78, 80; BDD, p. 296; Adv., p. 370 :

   विमुक्ति: शाश्वती यैव सा विरागादयस्त्रय: ।
   आख्याता धातव: सूत्रे द्विधा भेदो ह्यपेक्षया ॥ (Vs. 470)

*(contd. on p. 236)*

**विरागधातुः, यश्चनिरोधधातुः ।** तत्र सर्व्वसंस्काराणां दर्शनप्रहातव्यानां प्रहाणात्प्रहाणधातुः । सर्व्वसंस्काराणां भावनाप्रहातव्यानां प्रहाणाद्विरा[5]ग धातुः । सर्वोपधिनिरोधान्निरोधधातुः[1] । स एवं त्रीन्धातून् शान्ततो मनसि कुर्व्वन्, क्षेमत, आरोग्यतः, शमथविपश्यनां भावयति । येनास्यासेवनान्वयाद्भावान्वयाद् बहुलीकारान्वयादवशिष्टेभ्यो भावनाप्रहातव्येभ्यः क्लेशेभ्यश्चित्तं विमुच्यते । तेनाह । प्रहाणानुदर्शी, विरागानुदर्शी, निरोधानुदर्शी आश्वसन्निरोधानुद[6]र्शी आश्वसिमीति शिक्षते । एवमयं दर्शनभावनाप्रहातव्येषु क्लेशेषु । प्रहीणेष्वर्हन्भवति । क्षीणास्रवः नास्त्यस्यात उत्तरिकरणीयं भवति । कृतस्य वा परिचयः । अयमस्योच्यते षोडशाकारः परिचयः । यश्चायं पंचविधः परिचय इयमस्योच्यते । आनापानस्मृतिः । यत्र वितर्कचरितः पुद्गलः प्रयुज्यमानः प्रियारो[7]हतया प्रयुज्यते । सव्यापारं चैतदालम्बनं । सव्योक्षेपमध्यात्मं प्रत्यात्मं

---

*(contd. from p. 235)*

विरागो रागनिर्मोक्षः प्रहाणाख्योऽन्यसंक्षयः ।
निरोधधातुरन्यस्य सोपादानस्य वस्तुनः ॥ (Vs. 471)

रागप्रहाणं खलु विरागधातुरित्युच्यते । तदन्येषां क्लेशोपक्लेशानां प्रहाणधातुः । सर्वान्यधर्मप्रहाणं नाम निरोधधातुः ।

1. निरोधधातु has been identified with the nibbānadhātu also, AK, loc. cit., for references, see BDD, pp. 294-5 sq. and elsewhere.

आसन्नासन्नं येनास्य तत्र प्रयुज्यमानस्य यो वितर्क-संक्षोभ: स न भवति । त्वरितत्वरितं च चित्तमालम्बने सन्तिष्ठते । अभिरमते । संजायते । इदं पञ्च[विधं[1]] (सं[2])वितर्कचरितस्य पुद्गलस्य चरितविशोधन-मालम्बनं ॥[3]

**तत्र[4] कौशलालम्बनं(कौशल्यालम्बनं) च**[क[5]] तम[8]त् तद्यथा । स्कन्धकौशल्यं, धातुकौशल्य-मायतनकौशल्यं, प्रतीत्यसमुत्पादकौशल्यं, स्थानास्थान-कौशल्यं । तत्र कतमे स्कन्धा:, कतम:(मत्) स्कन्ध-कौशल्यं ॥ आह । पंच स्कन्धा:[6] । रूपस्कन्धो वेदना-स्कन्ध: । संस्कारस्कन्धो विज्ञानस्कन्धश्च ॥

---

1. MS. omits this.
2. May be deleted.
3. cp. Asm., p. 81 : चरितविशोधनमालम्बनं····वितर्कचरिता नामवतारा-प्रतिवाणि स्मृतिविषायलम्बनम् ।
4. cp. Asm., pp. 81-6 : कौशल्यालम्बनं पञ्चविधम् । स्कन्धकौशल्यं धातुकौशल्यम् आयतनकौशल्यं प्रतीत्यसमुत्पादकौशल्यं स्थानास्थानकौशल्यं च; cp. also, ibid, p. 1; Vsm. XIV-32 : [पञ्ञा] कथं भवेतब्बा ति एत्थ पन यस्मा इमाय पञ्ञाय खन्धायतन-धातु-इन्द्रिय-सच्च-पटिच्चसमुप्पा-दादिभेदा धम्मा भूमि, सीलविसुद्धि चेव चित्तविसुद्धि चा ति इमा द्वे विसुद्धियो मूलं दिट्ठिविसुद्धि-कङ्खावितरणविसुद्धि-मग्गामग्गञाणदस्सनविसुद्धि-पटिपदाञाणद-स्सनविसुद्धि-ञाणदस्सनविसुद्धी ति इमा पञ्च विसुद्धियो सरीरं, तस्मा तेसु भूमिभूतेसु धम्मेसु उग्गहपरिपुच्छावसेन ञाणपरिचयं कत्वा मूलभूता द्वे विसुद्धियो सम्पादेत्वा सरीरभूता पञ्च विसुद्धियो सम्पादेन्तेन भावेतब्बा ।
5. MS. omits this.
6. Asaṅga remarks : किमुपादाय स्कन्धा: पञ्चैव । पञ्चाकारात्म-

*(contd. on p. 238)*

तत्र रूपस्कन्धो[1] यत्किंचिद्रूपं सर्वं तच्चत्वारि
9B—2// महाभूतानि । चत्वारि महाभूतान्युपादाय । //[1]

(contd. from p. 237)

वस्तूद्भावनतामुपादाय । सपरिग्रहदेहात्मवस्तु उपयोगात्मवस्तु अभिलाषात्मवस्तु सर्वधर्माभिसंस्कारात्मवस्तु चोपादाय (Asm., pp. 1-2), and कस्मात्स्कन्धा उपादानमित्युच्यन्ते । उपादानेन सहितत्वात् स्कन्धा उपादानमित्युच्यन्ते । उपादानं कतमत् । स्कन्धेषु च्छन्दो रागश्च । कस्माच्छन्दो रागश्चोपादानमित्युच्यते । अनागतवर्तमानस्कन्धानामभिनिर्वर्तनतोऽपरिहारतश्च । अनागतेऽभिलाषाद् वर्तमानेऽप्यवसानाच्च च्छन्दो रागश्चोपादानमित्युच्यते । (ibid, p. 2); see Vsm., XIV.33; BDD, p. 315.

1. cp. Asm., p. 2 : किं लक्षणं रूपम् । रूपणलक्षणं रूपं । तद्द्विविधम् । स्पर्शेन रूपणं प्रदेशेन रूपणं च । स्पर्शेन रूपणं कतमत् । करचरणपाषाणशस्त्रदण्डशीतोष्णक्षुत्पिपासा मशकदंश सर्पवृश्चिकादीनां स्पर्शेन व्याबाधनम् । प्रदेशेन रूपणं कतमत् । देशेन रूपणमिदं चेदं च रूपमेवं चैवं च रूपमिति प्रणिहिताप्रणिहितचेतोवितर्केण प्रतिबिम्बचित्रीकारता ॥; cp. S. N., II, p. 312; SPVŚ, p. 1 : रूपधर्मः कतमः । तानि सर्वाणि चतुर्महाभूतजानि चत्वारिमहाभूतान्युपादाय समुत्पन्नानि रूपाणि; AK, I.19-ab रूपं पञ्चेन्द्रियाण्यर्थाः पञ्चाविज्ञप्तिरेव च ।; Abd., I.1.4; Aaa (pp. 296.4) distinguishes between the three main kinds of rūpa, viz. कल्पितं रूपं, विकल्पितं रूपं and धर्मतारूपं, तत्र रूपणालक्षणं रूपम् । · · · तत्पुनस्त्रिविधं रूपम् । कल्पितं रूपं ग्राह्यग्राहकाकारेण कल्पितत्वात् । विकल्पितं रूपमसद्भूतपरिकल्पेन ज्ञानमेव तथा प्रतिभासते इति विकल्पितत्वात् । धर्मतारूपं तत्त्वतो रूपमेव शून्यतारूपेण परिनिष्पन्नत्वात् ।; Buddhaghosa classifies rūpa into भूतरूप (4) and उपादाय रूप (24) (Vm., XIV.34-6, see also paras 37-80 XI.93); Upatissa in his Vimuttimagga enumerates thirty kinds of rūpa, see, VVM, pp. 95-7, but see, PF, pp. 237-8 where only twentyeight kinds of rūpa have been enumerated; cp. also, PVV, p. 16. 10 : केनार्थेन तत् रूपमित्युच्यते । अनुक्रमश उपचीयते अनुक्रमशो विपरिणम्यत इति । · · · तथागत आह विपरिणामित्वात् रूपमिति । विपरिणामश्च रूपणार्थकः ।

**तत्पुनरतीतानागतप्रत्युत्पन्नमाध्यात्मिकं** वा, बाह्यम्वा, [औदारि[1]]कम्वा, सूक्ष्मवा, हीनम्वा, प्रणीतम्वा, दूरे वा, अन्तिके वा[2] ॥

तत्र **वेदनास्कन्धः**[3] कतमः [।] सुखवेदनीयम्वा

1. Letters damaged by pin-hold.
2. Buddhaghosa remarks : तत्थ चक्खादि पञ्चविधं अत्तभावं अधिकिच्च पवत्तता अज्झत्तिकं, सेसं ततो बाहिरता बाहिरं । चक्खादीनि नव, आपोधातुवज्जिता तिस्सो धातुयो चा' ति द्वादसविधं घटनवसेन गहेतब्बतो ओळरिकं, सेसं ततो विपरीतत्ता सुखुमं । यं सुखुमं तदेव दुप्पटिविज्झसभावत्ता दूरे, इतरं सुपटिविज्झसभावत्ता सन्तिके । चतस्सो धातुयो चक्खादीनि तेरस कबळीकाराहारो चा ति अट्ठारसविधं रूपं परिच्छेदविकारलक्खणभावं अतिक्कमित्वा सभावेनेव परिग्गहेतब्बो निप्फन्नं सेसं तब्बिपरीतताय अनिप्फन्नं । Vm., XIV. 73; it is conspicuous that Asaṅga does not mention the निष्पन्न and अनिष्पन्न, प्रसादरूप and अप्रसादरूप, इन्द्रिय and अनिन्द्रिय and उपादत्त and अनुपादत्त kinds of रूप which Buddhaghosa enumerates and explains hereafter.
3. cp. Asm., pp. 4-5 : वेदनास्कन्धव्यवस्थानं कतमत । षड्वेदनाकायाः । सुखा वा दुःखा वा अदुक्खासुखा वा । पुनः सुखा कायिकी वेदना दुःखा.... अदुःखासुखा कायिकी वेदना सुखा....दुःखा....अदुःखासुखा चैतसिकी वेदना....सामिषवेदना......निरामिषवेदना......ग्रेधाश्रितवेदना.... नैष्क्रम्याश्रितवेदना च । कायिकी वेदना कतमा । पंचविज्ञानसंप्रयुक्ता वेदना । चैतसिकी वेदना कतमा । मनोविज्ञानसंप्रयुक्ता वेदना । सामिषवेदना कतमा । आत्मभावतृष्णासम्प्रयुक्ता वेदना । निरामिषवेदना कतमा । तत्तृष्णाविप्रयुक्ता वेदना । ग्रेधाश्रितवेदना कतमा । पंचकामगुणतृष्णासंप्रयुक्ता वेदना । नैष्क्रम्याश्रितवेदना कतमा । तत्तृष्णाविप्रयुक्ता वेदना ।; for detailed account of Vedanā and definitions thereof, see *infra*, under बोधिपक्ष्यभावना(वेदना); cp. also Ada., pp. 52-3 : कतमो वेदनास्कन्धः । वेदनानुभवः षड्विधस्पर्शजः ।; cp. Śss, MSS, I.103-4; AVS, ibid, p. 313 : षड् वेदनाः । कतमाः षट् । चक्षुः संस्पर्शजा वेदना....श्रोत्र०....

*(contd. on p. 240)*

स्पर्शं प्रतीत्य, दुःखवेदनीयम्वा, अदुःखासुखवेदनीयम्वा [।]षडवेदनाकायाः । चक्षुः संस्पर्शजा वेदना [। श्रो[1]]त्रघ्राणजिह्वाकायमनःसंस्पर्शजा वेदना ।।

तत्र **संज्ञास्कन्धः** [2]कतमः [।]तद्यथा सनिमित्त-संज्ञा, अनिमित्तसंज्ञा, परीत्तसंज्ञा । महद्गतसंज्ञा । अप्रमाणसंज्ञा । नास्ति किञ्चिदित्याकिञ्चन्यायतनसंज्ञा । षट्संज्ञाकायाः ।। चक्षुःसंस्पर्श[जा[2]] संज्ञा ।। श्रोत्र-घ्राणजिह्वाकायमनःसंस्पर्शजा संज्ञा[3] ।। **संस्कार**

*(contd. from p. 239)*

घ्राण॰····जिह्वा॰····काय॰····मन-संस्पर्शजा वेदना सुखा दुःखा अदुःखा-सुखा च ।; Ghoṣaka enumerates the different modes of classification of Vedanā, Ada., pp. 52-3; Vbh., p. 5: या काचि वेदना अतीतानागतपच्चुप्पन्ना अज्झत्ता वा बहिद्धा वा ओळारिका वा सुखुमा वा हीना वा पणीता वा या दूरे सन्तिके वा, तदेकज्झं अभिसञ्ञूहित्वा अभिसङ्खिपित्वा—अयं वुच्चति वेदनाक्खन्धो ।; See also pp. 6-8; SVA, pp. 14-9; S. N., II.312; Vsm., XIV.81: यं किञ्चि वेदयितलक्खणं सब्बं तं एकतो कत्वा वेदनाक्खन्धो, see also, XIV. 125-8; Buddhaghosa also mentions the fivefold division of Vedanā viz., सुखं दुक्खं सोमनस्सं दोमनस्सं and उपेक्खा; see also, VM, p. 98; PF, p. 246; BDD, p. 318; Aaa., p. 294, Adv., pp. 69, 139.

1. Letter damaged by pin-hold.
2. Missing in the MS., added by us.
3. cp. Vbh., p. 8: या काचि सञ्ञा अतीतानागतपच्चुप्पन्ना अज्झत्ता वा वहिद्धा वा ओळारिका वा सुखुमा वा हीना वा पणीता वा या दूरे सन्तिके वा तदेकज्झं अभिसञ्ञूहित्वा अभिसङ्खिपित्वा अयं वुच्चति सञ्ञाक्खन्धो ।, see, pp. 8-11; SVA, pp. 19-21; S. N., II.312; Asm., p. 5:

*(contd. on p. 241)*

[स्कन्धः[1]] कतमः[2] । षट्चेतना कायाः चक्षुः संस्पर्शजा

(contd. from p. 240)
षट् संज्ञाकायाः । चक्षुः संस्पर्शजा संज्ञा । श्रोत्रघ्राणजिह्वकायमनःसंस्पर्शजा संज्ञा । यथा सनिमित्तमपि संजानाति । अनिमित्तमपि · · · परीत्तमपि · · · महद्गतमप्यप्रमाणमपि नास्ति किञ्चिदित्याकिञ्चन्यायतनमपि संजानाति । सनिमित्तसंज्ञा कतमा । अव्यवहारकुशलस्यानिमित्तधातुसमापन्नस्य भवाग्रसमापन्नस्य च संज्ञां स्थापयित्वा यावदन्या संज्ञा ॥ अनिमित्तसंज्ञा · · · या स्थापिता संज्ञा परीत्ता संज्ञा · · · · · · यया कामधातुं संजानाति । महद्गता संज्ञा · · · · · · यया आकाशानन्त्यायतनं विज्ञानानन्त्यायतनं । अकिञ्चनसंज्ञा · · · यया आकिञ्चन्यायतनं संजानाति ।; cp. A. K. with Vyākhyā, II.47; Abd., Vs. 142, pp. 108-9; BDD, pp. 318, 320; Aaa., p. 296 : निमित्तोद्ग्रहणात्मिका संज्ञा; see also M. N., I.361; Vm., XIV.81 : यं किञ्चि सञ्जाननलक्खणं सब्बं तं एकतो कत्वा सञ्ञाक्खन्धो ।; Buddhaghosa mentions threefold classification of Saññā-Kusala, akusala and abyākata, ibid, XIV.129; see also para, 130 sq., VM, p. 98; PF, pp. 246-7; Ada., p. 53 : चित्तं विविधं प्रतीत्य सर्वधर्माः संज्ञा । सा त्रिविधा । परित्ता । महती । तदितरा च । असंख्येयभेदभिन्नबाह्यायतनसंग्रहप्रत्ययेन संज्ञायते इति संज्ञास्कन्धः ।

1. Missing in the MS., added by us.
2. cp. Vbh. p. 11 : ये केचि सङ्खारा अतीतानागतपच्चुप्पन्ना अज्झत्ता वा बहिद्धा वा ओळारिका वा सुखुमा वा हीना वा पणीता ये दूरे सन्तिके वा तदेकज्झं अभिसञ्ञूहित्वा अभिसङ्खिपित्वा—अयं वुच्चति सङ्खारक्खन्धो ।; see pp. 11-4; SVA, p. 21; S. N., II.312; Asm., p. 5 : संस्कारस्कन्धव्यवस्थानं कतमत् । षट्चेतनाकायाः । चक्षुःसंस्पर्शजा चेतना श्रोत्रघ्राणजिह्वकायमनःसंस्पर्शजाचेतना यया कुशलत्वाय चेतयते संक्लेशाय · · · अवस्थाभेदाय चेतयते इतीयं चेतना वेदनां संज्ञा च स्थापयित्वा तदन्ये चैतासिका धर्माश्चित्तविप्रयुक्ताश्च संस्काराः संस्कारस्कन्ध इत्युच्यते ।; cp. Aaa., p. 296; Vsm., XIV.81 : यं किञ्चि अभिसङ्खरणलक्खणं सब्बं तं एकतो कत्वा सङ्खारक्खन्धो । · · · अभिसङ्खरणलक्खणं नाम रासिकरणलक्खणं ।

(contd. on p. 242)

चेतना, श्रोत्रघ्राणजिह्वकायमनःसंस्पर्शजा चेतना[।]चेतनां च संज्ञां च स्थापयित्वा ॥ ये तदन्ये चैतसिका धर्माः ॥

तत्र **विज्ञानस्कन्धः** कतमः[1]। यच्चित्तं मनोविज्ञानं [।] ते पुनः षड्विज्ञानकायाः । चक्षुर्विज्ञानं श्रोत्रघ्राणजिह्वकायमनोविज्ञानं । सा चैषा वेदना संज्ञा संस्कारस्तच्चैतद्विज्ञानं । अतीतानागतप्रत्युत्पन्न-

---

*(contd. from p. 241)*

किं पन तं ति? सङ्खारा येव····ते अभिसङ्खरणलक्खणा, आयूहनरसा विप्फारपच्चुपट्ठाना सेसक्खन्धत्तयपदट्ठाना ।····; cp. XIV.131-2; see PF, 257; Buddhaghosa enumerates thirtysix kinds of Saṁskāras, ibid; Asaṅga enumerates fiftytwo dharmas, ibid pp. 5-6 under Saṁskāraskandha : ते पुनः कतमे । स्पर्शश्छन्दोऽधिमोक्षः स्मृतिः समाधिः प्रज्ञा श्रद्धा ह्रीरपत्राप्यमलोभोऽद्वेषोऽमोहो वीर्यं प्रश्रब्धिरप्रमाद उपेक्षा अविहिंसा रागः प्रतिघो मानोऽविद्या विचिकित्सा सत्कायदृष्टिरन्तग्राहदृष्टिर्दृष्टिपरामर्शः मिथ्यादृष्टिः क्रोध उपनाहो म्रक्षः प्रदाश ईर्ष्या मात्सर्यं माया शाठ्यं मदो आह्रीक्यमनपत्राप्यं स्त्यानमौद्धत्यं आश्रद्ध्यं कौसीद्यं मुषितस्मृतिताऽसंप्रजन्यं विक्षेपो मिद्धं कौकृत्यं वितर्को विचारश्च ।; for details and discussions on this point, see Adv., Vs. 112-5, pp. 68-76, pp. 84-5 sq., AK, II.24-32, 35-6; PVŚ, pp. 11-2; Asm., pp. 11-2; cp. Ada., ibid : संस्कृतधर्मेषु संस्काराः संस्कुर्वन्ति विविधान् धर्माननिति संस्कारस्कन्धः । स द्विविधः । चित्तसंप्रयुक्तः चित्तविप्रयुक्तश्च ॥

1. cp. Vbh., p. 14 : यं किञ्चि विञ्ञाणं अतीतानागतपच्चुप्पन्नं अज्झत्तं वा बहिद्धा वा···दूरे सन्तिके वा तदेकज्झं···अभिसङ्खिपित्वा अयं वुच्चति विञ्ञाणक्खन्धो ।; see, pp. 14-7; S. N., III.312; M. N., I. 361; SVA, p. 21; cp. Asm., pp. 11-2 : विज्ञानस्कन्धव्यवस्थानं कतमत् । यच्चित्तं मनो विज्ञानमपि । तत्र चित्तं कतमत् । स्कन्धधात्वा-

*(contd. on p. 243)*

माध्यात्मिकं वा बाह्यम्वा इति विस्तरेण पूर्व्ववत्[1] ॥ इम उच्यन्ते स्कन्धाः[2] ॥

[4]स्कन्धकौशल्यं कतमत् । य एतान्यथोद्दिष्टान्धर्मान्नानात्मकतया च जानाति । बह्वात्मकतया च, न ततः परमुपलभते । विकल्पयति वा । इदमुच्यते समासतः स्कन्धकौशल्यम् ॥

तत्र कतमा नानात्मकता स्कन्धानामन्य एव रूप-

---

(contd. from p. 242)
यतनवासनापरिभावितं सर्वबीजकमालयविज्ञानं विपाकविज्ञानमादानविज्ञानमपि तत् । तद्वासनाचित्ततामुपादाय ॥ मनः कतमत् । यन्नित्यकालम्मन्यनात्मकमादान-विज्ञानमपि चतुर्भिः क्लेशैः सम्प्रयुक्तमात्मदृष्ट्यात्मस्नेहेनास्मिनानेनाविद्यया च । तच्च सर्व्वत्रगं कुशलेऽप्यकुशलेऽप्यव्याकृतेऽपि स्थापयित्वा मार्गसम्मुखीभावं निरोध-समापत्तिमशैक्षभूमिं च यच्च षण्णां विज्ञानानां समनन्तरनिरुद्धं विज्ञानं ॥ विज्ञानं कतमत् । षड् विज्ञानकायाः । · · · · ; cp. YBŚ, I.4-10; Vsm., XIV. 81 : यं किंचि विजाननलक्खणं सब्बं तं एकतो कत्वा विञ्ञाणक्खन्धो, see also para 82 sq.; cp. also, Ada., p. 54 : कतमो विज्ञानस्कन्धः । नीलपीतलोहितादीन् धर्मान् विविनक्ति विज्ञानं । विज्ञानं हि षड्विधं । · · · · · ·; for an elaborate account of Vijñāna, see, A. K. Chatterjee, The Yogācāra Idealism, pp. 114-207; Viṁśikā and Triṁśikā with commentaries.

1. *Vide supra*, p. 242 and Vbh. quoted therein.

2. cp. Asm., p. 15 : स्कन्धार्थः कतमः । यत्किञ्चिद्रूपम् । अतीतमनागतं प्रत्युत्पन्नमध्यात्मं वा बहिर्धा वा औदारिकं वा सूक्ष्मं वा हीनं वा प्रणीतं वा यद्वा दूरे यद्वान्तिके तत्सर्वमभिसंक्षिप्योच्यते रूपस्कन्धः राश्यर्थमुपादाय । यथा वित्तराशिः । एवं यावद्विज्ञानस्कन्धम् ॥ अपि च दुःखवैपुल्यलक्षणतामुपादाय स्कन्ध उच्यते । यथा महावृक्षस्कन्धः । यदुक्तं सूत्रे । यथा ऐकान्तिकदुःख-समुदयतः । अपि च संक्लेशतो भारवहनतामुपादाय स्कन्ध उच्यते । यथा स्कन्धेन भारमुद्वहति ।

स्कन्धोऽन्यो वेदनास्कन्ध एवं । अन्यो यावद्विज्ञानस्कन्ध इयं **नानात्मकता** ॥

तत्र **कतमा बह्वात्मकता** । [5] यो रूपस्कन्धो-नेकविधो नानाप्रकारः । भूतलौकिकभेदेनानागत-प्रत्युत्पन्नादिकेन च । प्रकारभेदेन [।] इयमुच्यते **अनेकात्मकता** । रूपस्कन्धस्यैवमवशिष्टानां स्कन्धानां यथायोगं वेदितव्यम् । किं च न तस्मात्परं उपलभते, विकल्पयति । स्कन्धमात्रमुपलभते । वस्तुमात्रं नो तु स्कन्धव्यतिरेकेणाह्वा(त्मा)नमुपलभते । [6]नित्य-ध्रुवमविपरिणामधर्मकं, नाप्यात्मीयं किंचिदिदं नोप-लभते । नो विकल्पयति तस्मात्परेण[1] ॥

**तत्र कतमे धातवः**[2] । कतमद्धातुकौशल्यं । आह् ।

---

1. cp. Adv., p. 272 : ये केचिदात्मेति समनुपश्यन्तः समनुपश्यन्ति सर्वे त इमानेव पञ्चोपादानस्कन्धान्समनुपश्यन्तः समनुपश्यन्ति, cp. also A. K., III.18 :

नात्मास्ति स्कन्धमात्रन्तु क्लेशकर्माभिसंस्कृतम् ।
अन्तराभवसन्तत्या कुक्षिमेति प्रदीपवत् ॥

see Vasubandhu's Pañcaskandhaprakaraṇa, ABORI; MAS; PO; Asm., p. 12; T. S., 171 sq., 323-4, 338-49; TSP, I.164-5; MKV, XVIII; NMRP, II; MKA, XVIII.

2. cp. Vbh., p. 108 : अट्ठारसधातुयो—चक्खुधातु, रूपधातु, चक्खुविञ्ञाण-धातु, सोतधातु, सद्दधातु, सोतविञ्ञाणधातु, घाणधातु, गन्धधातु, घाणविञ्ञाण-धातु, जिह्वाधातु, रसधातु, जिह्वाविञ्ञाणधातु, कायधातु, फोटब्बधातु, काय-विञ्ञाणधातु, मनोधातु, धम्मधातु, मनोविञ्ञाणधातु ।; for a description of the eighteen dhātus, see Asm., pp. 12-3; Ada.,

*(contd. on p. 243)*

अष्टादश धातवः । चक्षुर्धातू रूपधातुश्चक्षुर्विज्ञानधातुः । श्रोत्रधातुः । शब्दधातुः । श्रोत्रविज्ञानधातुः । घ्राणधातुः । गन्धधातुः । घ्राणविज्ञानधातुः । जिह्वधातू र[7]सधातुः । जिह्वविज्ञानधातुः । कायधातुः, स्प्रष्टव्यधातुः कायविज्ञानधातु[1]र्धर्मधातुर्मनो विज्ञानधातुरिम उच्यन्ते धातवः । यत्पुनरेतानष्टादशधर्मान्स्वकस्वकाद्धातोः स्वकस्वकाद्बीज[ा]त् । स्वकस्वकाद्गोत्राज्जायन्ते निर्वर्तन्ते प्रादुर्भवन्तीति । जानाति रोचयत्युपनिध्याति । इदमुच्यते धातुकौशल्यं ।। यदष्टादशानां धर्मा[8]णां स्वरुस्वकाद्धातोः प्रवृत्तिं जानाति । तदेवमेति हेतुप्रत्यकौशल्यमेतद्यदुत धातुकौशल्यं ।।

तत्र **कतमान्यायतनानि । कतमदायतनकौशल्यमाह । द्वादशयतनानि**[2] । चक्षुरायतनं, रूपायतनं,

---

(contd. from p. 244)

pp. 54-9; Vsm., XV.17-43; Adv., p. 5 : धातुर्गोत्रं निरुच्यते । (Vs. 5-d); Adv., pp. 5-6 : धात्वर्थस्तु गोत्रार्थः । तदुक्तं भवति । एकस्मिञ्छरीरपर्वतेऽष्टादशधर्मगोत्राणि इति । ध्रुवद्वयस्याप्यत्र प्रतिनिधिस्थानीयाः प्राप्तयो गोत्रभूता विद्यन्ते । आकाशं च सर्वभूतभौतिकरूपाधारमिति तदप्यत्रास्तीति । स्वलक्षण धारणाद्वा धातुत्वम् । cp. Vsm., XV.21; see AKB, 1.20, cp. also, Bodhi, p. 2 : गोत्रमाधार उच्यते । ····तत्पुनर्गोत्रं बीजमित्यप्युच्यते । धातुः प्रकृतिरित्यपि । cp. Asm., p. 15 : धात्वर्थं कतमः । सर्वधर्मबीजार्थः । स्वलक्षणधारणार्थः । कार्यकारणभावधारणार्थः । सर्वप्रकारधर्मसंग्रहधारणार्थश्च ।

1. MS. omits here मनोधातुः.
2. Vbh., p. 83 : द्वादसायतनानि—चक्खायतनं, सोतायतनं, घाणायतनं, जिह्वायतनं, कायायतनं, मनायतनं, रूपायतनं, सद्दायतनं, गन्धायतनं, रसायतनं,

(contd. on p. 246)

श्रोत्रायतनं । शब्दायतनं । घ्राणायतनं । गन्धायतनं । जिह्वायतनं । रसायतनं । कायायतनं । स्प्रष्टव्याय

9A—3// // [1] तनं, मन आयतनं, धर्मायतनं च । इमान्-
युच्यन्ते आयतनानि ।। **कतमदायतनकौशल्यं** । तत्र चक्षुरधिपतिः रूपाण्यालम्बनं चक्षुर्विज्ञानस्य संप्रयोगस्योत्पत्तये [।] समनन्तरनिरुद्धं च मनः समनन्तर-

---

*(contd. from p. 245)*

फोटब्बायतनं, धम्मायतनं । see also, pp. 83-101, SVA, p. 46 sq.; Asm., ibid; Ada., p. 54 sq.; Vsm., XV.1-16; āyatana has been defined as आयद्वार, see Adv., Vs. 5-c; and vṛtti, तदुक्तं भवति—चित्तचैतसिकाख्यमायमेतानि तन्वन्तीत्यायतनानि । यस्मात् सप्तचित्तधातवश्चत्वारश्चारूपिणः स्कन्धा एभ्यश्चतुष्प्रत्ययात्मकेभ्यः प्रतायन्ते तदुत्पत्तिं वा प्रतायन्ते तस्मादायतनानि । cp. AKV, I.20a-b; Asaṅga explains how these āyatanas become the four pratyayas, viz. ālaṁbana, samanantara, adhipati (Asaṅga omits hetu) in the following paragraph while explaining āyatanakauśalya; on the four pratyayas, MK, I.4 :

चत्वारः प्रत्यया हेतुश्चालम्बनमनन्तरम् ।
तथैवाधिपतेयं च प्रत्ययो नास्ति पञ्चमः ।।

MKV(V), p. 26; dvādaśamukhaśāstra, III.2; see also, Ads., VIII; N. Tatia, Paṭiccasamuppāda, NMRP, I, p. 194 sq.; AKV, II.61-4, p. 164 sq.; cp. Bodhi, p. 70 : चत्वारः प्रत्ययाः । हेतुप्रत्ययः समनन्तरप्रत्ययः आलम्बनप्रत्ययः अधिपतिप्रत्ययश्च । तत्र यो जनको हेतुः स हेतुप्रत्ययः । यः पुनरुपायहेतुः सोऽधिपतिप्रत्ययो वेदितव्यः । समनन्तरप्रत्ययश्चालम्बनप्रत्ययश्च चित्तचैतसिकानामेव धर्माणाम् । तथा हि चित्तचैतसिका धर्माः प्रागुत्पन्नावकाशदानपरिगृहीता आलम्बनपरिगृहीताश्च प्रादुर्भवन्ति प्रवर्तन्ते च । तस्मात् समनन्तरप्रत्यय आलम्बनप्रत्ययश्च परिग्रहहेतुना संगृहीतो वेदितव्यो ।। for details see Asm., pp. 28-9.

प्रत्ययः । तत्र श्रोत्रमधिपतिः । शब्द आलम्बनं । समन[न्तर[1]] निरुद्धं च मनः समनन्तरप्रत्ययः । श्रोत्र-विज्ञानस्य स संप्रयोग[2]स्योत्पत्तये [।] एवं यावन्मनः समनन्तरं तज्जो मनसिकारोधिपतिप्रत्ययो धर्मालम्बनं-(धर्म आलम्बनं)मनोविज्ञानस्य संप्रयोगस्योत्पत्तये इति । त्रिभिः प्रत्ययैः समनन्तरप्रत्ययेन, आलम्बनप्रत्ययेनाधि-पतिप्रत्ययेन च । षण्णां विज्ञानकायानां प्रवृत्तिर्भवति । ससंप्रयोगाना(णा)मिति । यदेवमाध्यात्मिकबाह्येष्वा-यतनेषु प्रत्यय[3]कौशल्यमिदमुच्यते आयतनकौशल्यम् ।।

**तत्र कतमः प्रतीत्यसमुत्पादः[2] कतमः**

---

1. Letters lost by pin-hold.
2. cf. कतमो च, भिक्खवे, पटिच्चसमुप्पादो ? अविज्जापच्चया, भिक्खवे, सङ्खारा, सङ्खारप्पच्चया, विञ्ञाणं, विञ्ञाणप्पच्चया नामरूपं, नामरूपप्पच्चया सळायतनं, सळायतनप्पच्चया फस्सो, फस्सप्पच्चया वेदना, वेदनापच्चया तण्हा, तण्हापच्चया उपादानं, उपादानप्पच्चया भवो, भवप्पच्चया जाति, जातिप्पच्चया जरामरणं सोकपरिदेवदुक्खदोमनस्सुपायासा सम्भवन्ति । एवमेतस्स केवलस्स दुक्खक्खन्धस्स समुदयो होति । अयं वुच्चति, भिक्खवे, पटिच्चसमुप्पादो । S. N., II.1; cp. also, S. N., II.61-2; 5-10, 12-3, 24, 49-51, 70-2; cf. p. 386 sq.; D. N., II.44-51; on Pratītyasamutpāda, see YBS, I, pp. 198-232; MKV ad M. K., I.1; Bhamatī ad V. S., II.1.18 sq.; SDS, II; Śālistaṁbasūtra, Madhyamakaśālistaṁbasūtra and Pratītyasamutpādādivibhaṅganirdeśasūtraṁ, Āryapratītyasamutpādasūtraṁ, MSS, I.100-119; Vsm., Ch. XVII; AS, VIII.3 sq.; LV, XIII.99 sq. (p. 125 sq.); Dutta, Aspects, pp. 50-1, 208-11; N. Tatia, Paṭiccasamu-

*(contd. on p. 248)*

(मत्)प्रतीत्यसमुत्पादकौशल्यं [।] आह । अविद्या-प्रत्ययाः संस्काराः, संस्कारप्रत्ययम्विज्ञानं, विज्ञानप्रत्ययं नामरूपं । विस्तरेण यावदेवमस्य केवलस्य महतो दुःख-स्कन्धस्य समुदयो भवत्ययमुच्यते प्रतीत्यसमुत्पादः । यत्पुर[4]र्धर्मा एव धर्मानभिष्पन्दयति(न्ति) धर्मा एव धर्मान् परिष्पन्दयन्ति । संस्कारा एव धर्माणा-माहारकाः तेन हेतुसमुत्पन्नत्वात् प्रतीत्यसमुत्पन्न-त्वात्वादभूत्वा भवन्ति । भूत्वा च प्रतिविगच्छन्ति । तस्मादनित्या एते संस्कारा ये पुनरनित्यास्ते जाति-धर्माणो, जरांधर्माणो, व्याधिधर्माणो, मरणधर्माणः, शोकपरिदेवदुःखादौर्मनस्योपायासध[5]र्माणः । ते जरा धर्मित्वाद्यावदुपायासधर्मित्वात् । दुःखा, ये वा पुनर्दुःखा, अस्वतन्त्रा, दुर्बलास्ते अनात्मान इति ।[1] यदेभिराकारैः

---

(contd. from p. 247)

ppāda, NMRP, I.179-239; Poussin, Theorie des douze couses; Keith, Buddhist Philosophy, p. 99 sq.; Oldenberg, The Buddha (Hoeys trans., 1882), p. 223 sq.; Gokhale, Pratītyasamutpādaśāstra des ullaṅgha (1930).

1. cf. कतमे च, भिक्खवे, पटिच्चसमुप्पन्ना धम्मा ? जरामरणं, भिक्खवे, अनिच्चं सङ्खतं पटिच्चसमुप्पन्नं खयधम्मं वयधम्मं विरागधम्मं निरोधधम्मं। जाति, भिक्खवे, अनिच्चा सङ्खता पटिच्चसमुप्पन्ना खयधम्मा वयधम्मा विरागधम्मा निरोधधम्मा। भवो···· उपादानं····तण्हा····वेदना····फस्सो····सळायतनं····नामरूपं····· विञ्ञाणं····सङ्खारा····अविज्जा····। इमे वुच्चन्ति, भिक्खवे, पटिच्चस-मुप्पन्ना धम्मा। S. N., II.24; cp. also, pp. 202-9; p. 277, etc.;

(contd. on p. 249)

प्रतीत्यसमुत्पन्नेषु धर्मेषु अनित्यज्ञानं, दुःखज्ञानं, नैरात्म्यज्ञानं । इदमुच्यते प्रतीतत्यसमुत्पादकौशल्यम् ।।

**स्थानास्थानकौशल्यं** पुनः प्रतीत्यसमुत्पाद[6]एव वेदितव्यं ।। तत्रायं विशेषः [।] स्थानास्थानकौशल्येना विषमहेतुकतां जानाति । अस्ति कुशलाकुशलानां कर्मणां फलविपाकः । अकुशलानामनिष्ट इति ।।

9B—3// यदेवं ज्ञानमिदमुच्यते स्थानास्थानकौशल्यं ।।[1] //[1] तच्चैतत्पञ्चस्थानकौशल्यं समासतः स्वलक्षणकौशल्यं भवति । सामान्यलक्षणकौशल्यं च । तत्र स्कन्धकौशल्येन स्वलक्षणकौशल्यमाख्यातं । अवशिष्टैः सामान्यलक्षणकौशल्यमिदमुच्यते कौशल्यालम्बनं ।।

तत्र **क्लेशविशोधनमालम्बनं कतमत्** ।[2] आह ।

---

*(contd. from p. 248)*

p. 334, p. 414 sq.; D. N., II.120-1; cf. LV, XIII, 77 sq. (p. 123 sq.); Dh. P., XX.5-7; cp. Asm., p. 40 : अपि खलु उत्पादव्ययधर्मद्वयानुगतेषु संस्कारेषु जात्यादयोऽष्टौ दुःखानि प्रज्ञायन्ते इत्यभिसन्धाय बुद्धेन भाषितं यदनित्यं तद् दुःखमिति । अपि च अनित्येषु संस्कारेषु जात्यादिकं दुःखं प्रज्ञायते इत्यनित्यतो दुःखं न सर्वे संस्कारा इत्यत्राभिसन्धिर्वेदितव्यः ।

1. cp. ibid, p. 81 : स्थानास्थानकौशल्येन कमर्थं पश्यति । ज्ञेये प्रतीत्य-समुत्पाद कौशल्यं पश्यति ।। स्थानास्थानकौशल्यप्रतीत्यसमुत्पादयोः कः प्रभेदः । यद् धर्मा धर्मानभिष्यन्दयन्ति नह्येषां निर्हेतुको नापि विषमहेतुक उत्पाद इतीदं प्रतीत्यसमुत्पादकौशल्यम् । हेतुफलानुरूप्ये वेदयितोत्पाद इतीदं स्थानास्थान-कौशल्यम् ।।

2. cp. Asm., p. 81 : क्लेशविशोधनमालम्बनं कतमत् । यदधोभूमीना-मौदारिकता ऊर्ध्वभूमिकानां शान्तता तथता चत्वार्यार्यसत्यानि च । एतानि क्लेशविशोधनालम्बनानि नाम ।।

अधोभूमीनामौदारिकत्वं तद्यथा कामधातौ प्रथम[2]-ध्यानस्य एवं यावन्नैव संज्ञानासंज्ञायतनस्य ।

तत्र कतमा **औदारिकता ।** औदारिकता द्विविधा । स्वभावोदारिकता (स्वभावौदारिकता) संख्यौदारिकता च ।

तत्र **स्वभावौदारिकता** कामधातावपि पञ्च-स्कन्धाः संविद्यन्ते । प्रथमे तु ध्याने ये कामावचरास्ते सादीनवतराश्च दुःखविहार त[र[1]]ा[श्]च । अल्पकाव-स्थायितराश्च । हीनतराः प्रतिक्रुष्टतराश्च [।] [3] इयमेषां स्वभावौदारिकता प्रथमे तु ध्याने [।] तथा तेन ते शान्ततराः प्रणीततरा इत्युच्यन्ते ।

तत्र **संख्यौदारिकता कतमा ।** कामावचरो रूप-स्कन्धः प्रभूततरः परिज्ञेयः । प्रहातव्य एवं यावद्विज्ञान-स्कन्ध इयमुच्यते स्कन्धौदारिकता ।। एवमुपरिमाभूमिषु स्वभावो(वौ)दारिकता संख्यौदारिकता च । यथायोगं वेदितव्याः(:) ।

[4] इयं तूपरिमासु भूमिषु यावदाकिंचन्यायतना-[त्]तदौदारिकत[र[1]]ाश्च वेदितव्याः सर्वा अधरिमा भूमयः । दुःखविहारत[र[1]]ाश्च अल्पायुष्कतराश्च, नैवसंज्ञानासंज्ञायतनं पुनः शान्तमेव उपरि श्रेष्ठतया भूमेरभावात् । यत्र समासत आदीनवार्थः । औदा-रिकतार्थः । यस्यां यस्यां भूमौ प्रभूततरमा-

1. MS. omits र.

(आ)दीनवं(वो) भवति । सा [5] आदीनवतः । औदारिकेत्युच्यते । यस्यां लौकिकानां भूमावल्पतर मा(आ)दीनवं(वो) भवति । सा आदीनवतः शान्तेत्युच्यते । इदं लौकिकानां लौकिकेन मार्गेण क्लेशविशोधनमालम्बनं तथापि तस्याधरिमां भूमिमादीनवतः पश्यतः । रोगतः, अयोगक्षेमतः, उपरिमांच भूमिं शान्ततः [।] ये अधोभूमिकाः [6] क्लेशा यावदाकिंचन्यायतनभूमिकाः, कामधातुमुपादाय ते प्रहीयन्ते । न त्वत्यन्ततः प्रहीयन्ते । ते पुनरेव ते प्रतिसन्धिका भवन्ति ।

**लोकोत्तरेण वा पुनर्मार्गेण क्लेशविशोधनमालम्बनं चतुर्विधं**, तद्यथा । दुःखसत्यं, समुदयसत्यं, निरोधसत्यं, मार्गसत्यश्च ॥

9A—4// // [1] तत्र **दुःखसत्यं** कतमत् । तद्यथा जातिर्दुःखं जरापि [दुःखं[1]]व्याधिर्मरणमप्रियसंयोगः प्रियविनाभाव इच्छाविघातश्च । संक्षेपतः पञ्चोपादानस्कन्धा दुःखं[।[2]]

---

1. Letters damaged by pin-hold.
2. cp. S. N., IV.361 : इदं खो पन, भिक्खवे, दुक्खं अरिय सच्चं जाति पि दुक्खा, ब्याधि पि दुक्खो, मरणं पि दुक्खं, अप्पियेहि सम्पयोगो दुक्खो पियेहि विप्पयोगो दुक्खो, यम्पिच्छं न लभति तं पि दुक्खं—सङ्खित्तेन पञ्चुपादानक्खन्धा दुक्खं ।, Mahāvagga (Vinaya), p. 13; cp. M. N., I.235; Psm., pp. 42-3 sq.; the last two texts add दुक्खदोमनस्सुपायास also; see, LV, XXVI, p. 303; for more references to

(contd. on p. 252)

तत्र **समुदय आर्यसत्यं**[1] तृष्णा पौनर्भविकी नन्दीरागसहगता तत्र तत्राभिनन्दिनी ।।

**तत्र निरो[ध आ[2]]र्यं सत्यं**[3] यदस्या एव तृष्णाया अशेषप्रहाणं ।

---

(*contd. from p. 251*)

Pāli texts, and further elaboration, see Vsm., XVI.44-60, pp. 350-4; SVA, pp. 94-112; cp. Ada., p. 118: दुःखसत्यं कतमत् । एकविधं क्लेशलक्षणं दुःखं । द्विविधं कायदुःखं चित्त-दुःखं । त्रिविधं दुःख-दुःखं विपरिणामदुःखं संस्कारानित्यतादुःखं । कायिकम-ध्यात्मदुःखं बहिर्धादुःखं मानसिकमध्यात्म · · · बहिर्धादुःखं । पञ्चविधं पञ्चो-पादानस्कन्धा दुःखं । षड्विधं त्रिधातु · · · त्रिविष · · · दुःखं । सप्तविधं सप्त-विज्ञानस्थिति दुःखं । अष्टविधं दुःखं तद्यथा जातिः जराव्याधिः मरणं अप्रियसंयोगः प्रियविप्रयोगः यत्पर्येषमाणो न लभते तत्सर्वं विविधं दुःखं । इति दुःखसत्यं (XV.1); cp. Adv., pp. 1.6-10, pp. 2.1-2.

1. cf. S. N., IV.361 : इदं खो पन, भिक्खवे, दुक्खसमुदयं अरियसच्चं—यायं तण्हा पोनोब्भविका नन्दिरागसहगता तत्र तत्राभिनन्दिनी, सेय्यथीदं—कामतण्हा, भवतण्हा, विभवतण्हा; Mahāvagga, ibid; cp. Psm., pp. 44-5; LV, ibid, loc. cit.; Vsm., XVI, 61, p. 354; SVA, pp. 112-3; cp. Ada., loc. cit.; समुदयसत्यं कतमत् । विविधदुःखहेतवः पञ्चोपादानस्कन्धाः । इति समुदयसत्यं ।।; cf. Adv., p. 2 : समुदयसत्यमेकविधं तृष्णानिर्देशात् । द्विविधं कर्मक्लेशात्मकत्वात् । पञ्चाङ्गानि वा पौर्वान्तिकापरान्तिकाङ्गसङ्ग्रहात्, हेतुभूता वा पञ्चोपादान-स्कन्धाः । The five aṅgas comprise the avidyā, saṁskāra, tṛṣṇā, upādāna and bhava (Adv., f.n. 1).
2. Letters damaged by pin-hold.
3. S. N., IV.363 : इदं खो पन, भिक्खवे, दुक्खनिरोधं अरियसच्चं—यो तस्सा येव असेसविरागनिरोधो चागो पटिनिस्सग्गो मुत्ति अनालयो ।; Mahāvagga, p. 13; Psm., p. 45; LV, p. 303; Vsm., XVI.62-83 (pp. 354-7); SVA, pp. 113-5; Ada., loc. cit. : निरोध-सत्यं कतमत् । दुःखसमुदयानामशेषतो निरोधे निरोधालम्बना प्रज्ञोच्यते निरोधसत्यं ।।; Adv., loc. cit. : निरोधसत्यमेकप्रकारमभिसन्धिजन्म-निरोधात् । सत्यद्वयप्रहाणभेदाद् द्विविधं, सोपधिनिरुपधिशेषधातुभेदाद्वा । त्रिप्रकारं वा प्रहाणविरागनिरोधधातुभेदात् । चतुष्प्रकारं वा चतुष्फलभेदात् ।

**मार्गसत्यं**[1] आर्याष्टां[2]गो मार्गः [।]

तत्र कृष्णपक्षं शुक्लपक्षं चोपादाय हेतुफलव्यवस्थानेन चतुःसत्यव्यवस्थानं ॥[2]

तत्र दुःखसत्यं फलं । समुदयसत्यं हेतुः । निरोधसत्यं फलं । मार्गसत्यं हेतुः प्राप्तये, स्पर्शनाय । तत्र दुःखसत्यं व्याधिस्थानीयं तत्प्रथमतः परिज्ञेयं । समुदयसत्यं व्याधिनिदानस्थानीयं । तच्चान्तरम्परिवर्जयितव्यं । निरोधसत्यमा[3]रोग्यस्थानीयं । तच्च स्पर्शयितव्यं (स्प्रष्टव्यम्), साक्षात्कर्तव्यं । मार्गसत्यं भैषज्यस्थानीयं । तच्चासेवितव्यं, भावयितव्यं । बहुलीकर्तव्यं[3] । भूतं चैतत्तथा अवितथा(-थम) विप-

---

1. इदं खो पन, भिक्खवे, दुक्खनिरोधगामिनी पटिपदा अरियसच्चं—अयमेव अरियो अट्ठङ्गिको मग्गो, सेय्यथीदं सम्मादिट्ठि, सम्मासङ्कप्पो, सम्मावाचा, सम्माकम्मन्तो, सम्मा आजीवो, सम्मावायामो, सम्मा सति, सम्मा समाधि । S. N., IV.361; Mahāvagga, p. 13; Psm., pp. 45-7; LV, p. 303; Vsm., XVI.75-83, pp. 356-7; SVA, pp. 115-25; Ada., XV.1.11-2; Adv., p. 2 : मार्गसत्यमेकप्रकारं सम्यग्दृष्टिनिर्देशात् । द्विप्रकारं वा सास्रवानास्रवभेदाद्, दर्शनभावनाभेदाद्वा । त्रिप्रकारं शीलसमाधिप्रज्ञास्कन्धभेदात्, चतुष्प्रकारं वा प्रयोगमार्गादिभेदात् । प्रतिपद्भेदाद्वा । अष्टप्रकारं सम्यग्दृष्ट्याद्यङ्गभावात् ।
2. For different modes of application and elaborate explanation of the satyas, see Vsm., 84-104; Asm., pp. 66-7; PVS, p. 10; Ada., p. 119 sq.; cp. also, Psm., p. 351 sq.; Dutta, EMB, I.61-4.
3. cp. Mahāvagga, p. 14 : तं खो पनिदं दुक्खं अरियसच्चं परिञ्ञेय्यं · · दुःखसमुदयं अरियसय्यं पहातब्बं · · · ·दुःखनिरोधं अरियसच्चं सच्छिकातब्बं · · · · दुक्खनिरोधगामिनीपटिपदा अरियसच्चं भावेतब्बं' ति · · · ·; cf. LV, p. 303;

(*contd. on p. 254*)

रीतमविपर्यस्तं दुःखं दुःखार्थेन, यावन्मार्गो मार्गार्थेन तस्मात्सत्यमित्युच्यते । स्वलक्षणं च [न[1]] विसम्वदति । तद्दर्शनाच्चाविपरीता बुद्धयः प्रवर्त्तन्ते । तेन सत्यमित्युच्यते [।]

[4]कस्मात्पुनरेतान्यार्याणामेव सत्यानि भवन्ति । आर्या एतानि पश्यन्त्येव समानानि, सत्यता(तो) जानन्ति पश्यन्ति (।) यथाभूतं, बालास्तु न जानन्ति, न पश्यन्ति । यथाभूतं तस्मादार्यसत्यानीत्युच्यन्ते ।[2] बालानामेतद्धर्मतया सत्यं नावबोधेत(बुध्यते) । आर्याणां तूभयथा तत्र जानाति(ज्ञायते) ।

दुःखमिति जायमानस्य दुःखा वेदनोत्पद्येत (।) कायिक[5]चैतसिकी, न तु ज[।]तिरेव दुःखं, दुःखनिदानं सा, एवं यावदिच्छाविघातो दुःखमिति ॥

---

*(contd. from p. 253)*

Adv., pp. 2.13-4; MK, XXIV.2 and MKV thereon. p. 477; cp. Vsm., XVI.87 : रोगो विय दुक्खसच्चं, रोगनिदानमिव समुदयसच्चं, रोगवूपसमो विय निरोधसच्चं, भेसज्जमिव मग्गसच्चं । · · · · ; cp. Y. B., II.15, pp. 69-70 : यथा चिकित्साशास्त्रं चतुर्व्यूहम्—रोगो रोगहेतुरारोग्यं भैषज्यमिति, एवमिदमपि शास्त्रं चतुर्व्यूहमेव । तद्यथा—संसारः संसारहेतुर्मोक्षो मोक्षोपाय इति । cp. also SPB, (भूमिका) p. 7; cp. LV, I.5, XXVI.73 where Buddha has been said to be a great doctor (Mahāvaidya).

1. MS. omits this.
2. cp. Vsm., XVI.20-1 : यस्मा पनेतानि बुद्धादयो अरिया पटिविज्झन्ति, तस्मा अरियसच्चानी ति वुच्चन्ति । · · · ·अरियस्स सच्चानीति, · · · ·अरियानि सच्चानीति अरियसच्चानि see S. N., IV.371-4.

इच्छाविघातनिदानं दु:खमुत्पद्येत । कायिकचैतसिकं, न त्विच्छाविधात एव(।) दु:खं, दु:खनिदानं पुन: स इति पेयालम् । संक्षेपत: पंचोपादानस्कन्धा: दु:खमित्ये-भिज[ ]त्यादिभि: पर्यायै[:] । दु:खदु:खतैव परि-दीपिता[1] । तत्र विप[6]णामदु:खता संस्कारदु:खता चावशिष्टा[2] । सा पुन: पञ्चस्कन्धदु:खतया परिदीपिता भवति । तथा हि पंचोपादानस्कन्धास्त्रिवेदनापरिगतास्ते तथोक्ताया: दुखदु:खताया भाजनभूता[: ।] या च नोक्ता विपरिणामदु:खता । संस्कारदु:खता च । साप्येष्वेव द्रष्टव्या ।

केन पुन: कारणेन भगवता **दु:खदु:खतैव** परि[7]कीर्त्तिता । स्वशब्देन विपरिणामदु:खता, संस्कारदु:खता पुन: पर्यायेण[।]तथा हि दु:खदु:खताया-

1. cp. Vsm., XIV. 224 : वेदना तीहि दुक्खताहि अविनिमुत्तत्ता दुक्खा ति···· ।

2. cp. S.N., III.231 : तिस्सो इमा आवुसो दुक्खता—दुक्खदुक्खता, सङ्खार-दुक्खता, विपरिणामदुक्खता ति, cp. also, Vsm., XVI.35····कायिक-चेतसिका दुक्खा वेदना सभावतो च नामतो च दुक्खत्ता दुक्खदुक्खं ति वुच्चति । सुखा वेदना विपरिणामे दुक्खुप्पत्तिहेतुतो विपरिणामदुक्खं । (तस्सभावो—दुक्खता); उपेक्खा-वेदना चेव अवसेसा च तेभूमका सङ्खारा उदयब्बय परि-पीळितत्ता सङ्खारदुक्खं (तस्स भावो—दुक्खता) ।; cp. Dh. P., 278 :

सब्बे सङ्खारा दुक्खा ति यदा पञ्ञाय पस्सति ।
अथ निब्बिन्दति दुक्खे, एस मग्गो विसुद्धिया ॥;

see also Bodhi., p. 190; Y. S. mentions three-fold दु:खता, viz. परिणाम०, ताप०, संस्कार०, Y. S., III.18 : परिणाम-ताप-संस्कार-दु:खैर्गुणवृत्तिविरोधाच्च दु:खमेव सर्वं विवेकिन: ।

मार्याणां बालानाञ्च तुल्या दुःखताबुद्धिः प्रवर्त्तते । संवेजिकात्यर्थं दुःखदुःखता पूर्व्वमकृतप्रज्ञानामेवं च देश्यमाने सुखमवतारो भवति ।। सत्येषु विनेयानां [।]

**तत्र त्रिविधाया दुःखतायाः कथं व्यवस्थानं भवति ।** यत्ता[8]वद्दुःखं जातिर्दुःखं यावदिच्छाविघातो दुःखमित्यनेन साधिष्ठाना दुःखा वेदना आख्याता ।। सा च दुःखदुःखता [।] इदं दुःखदुःखताया व्यवस्थानं । ये वा पुनरेतद्विपक्षा धर्मास्तथा यौवनं जराया, व्याधेरारोग्यं, जीवितं मरणस्य, प्रियसंप्रयोगो[ऽ]प्रियसंप्रयोगस्य । अप्रियविनाभावः प्रियविनाभावस्य, इच्छा[9]सम्पत्ति-रिच्छाविघातस्य, ये च दुःखायां वेदनायां प्रवृत्ताः क्लेशाः साधिष्ठाना, ये चारोग्यादिषु सुखस्थानीयेषु धर्मेषु तन्निर्ज[ा]तायां च वेदनायां ये प्रवृत्ताः क्लेशा
9B—4// इयमुच्यते विपरिणाम//[1]दुःखता ।।

तत्र **सुखा वेदना** साधिष्ठाना अनित्यतया प[रि[1]]णमन्ती । अत्यर्थीभावाधिपतेयं दुःखं विदधाति । क्लेशाः पुनः सर्व्वत्र प्रवृत्ताः पर्यवस्थानष(श)एव दुःखा भवन्ति । विपरिणामश्च स चेतसः **तस्माद्वि-परिणामदुःखतेत्युच्यते ।। यथोक्तं भगवता— अव-तीर्ण्णविपरिणतेन[2]चित्तेन मातृग्रामस्य हस्तिग्रहणं चेति विस्तरः ।। यथा चोक्तं— काम[च्]छन्द-पर्यवस्थितः । काम[च्]छन्दपर्यवस्थानप्रत्ययं तज्जं**

1. Letter damaged by pin-hold.

**चतसिकं दुःखदौर्मनस्यं प्रतिसंवेदयते । एवं व्यापादस्त्यानमिद्धामोद्ध ( मिद्धौद्ध ) त्यकौकृत्यविचिकित्सा– पर्यवस्थितः ।** तदनेनागमेनाप्तेन परमाप्तेन क्लेशेषु दुःखार्तोपि लम्बते । विपरिणामार्थो(र्त्तो)[3]पि । तेनोच्यते क्लेशविपरिणाम[दुःखते ति[।]इदं विपरिणाम[1]]दुःखताया व्यवस्थानं । संस्कारदुःखता पुनः । सर्व्वत्रगा उपादानस्कन्धेषु संक्षेपत आर्या च दुखदुःखता, या च क्लेशसंगृहीता विपरिणामधर्मता, ये (या) च साधिष्ठाना सुखा वेदना तां स्थापयित्वा, ये तदन्ये स्कन्धाश्च दुःखाः(दुःख)सहगता- स्तन्निज[ा]तास्तदुत्पत्तिप्रत्यया [4]स्तस्य चोत्पन्नस्य स्थितिभाजना इयमुच्यते संस्कारदुःखता ।। ये स्कन्धा अनित्या उदयव्यययुतो(ताः) सोपादानास्त्रिवेदना- भिरनुषक्ता[ः] । दौष्ठुल्योपगता अयोगक्षेमपतिता अविनिर्मुक्ताः । दुःखदुःखताया विपरिणामदुःखत[ा]या अस्ववशवर्तिनश्च [।] इयमुच्यते संस्कारदुःखतया दुःखता [।] इदं संस्कारदुःख[5]ताया व्यवस्थानं ।।

तभ(त्र)तृष्णा प्रार्थनाभिलाषोभिनन्दनेति पर्यायाः [।]सा पुनः प्रार्थना त्रिभिर्मुखैः प्रवृत्ता(स्[2])तद्यथा **पुनर्भवप्रार्थना, विषयप्रार्थना** च ।

---

1. Added by a separate hand in a footnote, dim and illegible.
2. स् may be deleted.

तत्र या पुनर्भवप्रार्थना सा पौनर्भविकी तृष्णा । **विषय-प्रार्थना पुन[6]र्द्विविधा** [।] प्राप्तेषु विषयेषु सौमनस्याध्यवसानसहगता, अप्राप्तेषु च विषयेषु संयोगाभिलाषसहगता [।] तत्र या प्राप्तेषु विषयेषु सौमनस्याध्यवसानसहगता नन्दीरागसहगतेत्युच्यते । या पुनरप्राप्तेषु विषयेषु संयोगाभिलाषसहगता तत्र तत्राभिनन्दिनीत्युच्यते ।

**निरोधोपि[7]द्विविधः । क्लेशनिरोधः, उपक्लेशनिरोधश्च ।**

**मार्गोपि द्विविधः । शैक्षश्चाशैक्षश्च ।** इदमालम्बनं क्लेशविशोधनं लोकोत्तरेण मार्गेण वेदितव्यं । तेनाह चतुर्विधमालम्बनं । व्याप्यालम्बनं, चरितविशोधनं, कौशल्यालम्बनं, क्लेशविशोधनं चेति ।।

**तत्राववादः**[1] **कतमः । चतुर्विधो[अ]ववादः ।**

1. Asaṅga enumerates avavāda as the sixth kind of vāda —वादः षड्विधः वादः प्रवादः विवादः अपवादः अनुवादः अववादश्च, (Asm., p. 104 : श्रुतमयीभूमि, S. Bh. MS. (folio 2B-6, line 4) and defines अववाद as अववादः सत्त्वानां असमाहितचित्तानां चित्तसमाधानाय समाहितचित्तानां विमोक्षलाभाय देशनावादः । (Asm., p. 104) अववादः····अधिचित्ते अधिप्रज्ञे प्रयोक्तुकामस्य पुद्गलस्यासमाहितस्य वा चित्तस्य समाधानाय समाहितस्य वा चित्तस्य विमोक्षाय यो वादः तत्त्वज्ञानावबोधाय तत्त्वज्ञानावगमाय वादः [।] तस्मादववाद इत्युच्यते । (श्रुतमयी भूमि, ibid, folio 2A, leaf 7, lines 3-4); in the Bodhisattvabhūmi, eight kinds of अववाद have been mentioned : अववादः कतमः । समासतोऽष्टविधो वेदितव्यः । यथापि तद् बोधिसत्त्वः

*(contd. on p. 259)*

**अवि[8]परीतावबादः । अनुपूर्व्वावबादः । आगमावबादः । अधिगमावबादश्च ।।**

**तत्राविपरीतावबादः कतमः ।** यदविपरीतं धर्मसत्त्वं च देशयति । ग्राहयति । भूतं यदस्य निर्याति । सम्यग्दुःखक्षयाय । दुःखस्यान्तक्रियायै [।] अयमुच्यतेऽविपरीतावबादः ।

**अनुपूर्व्वावबादः कतमः ।** यत्कालेन धर्मं
9A—5// देशय//[1]ति । उत्तानोत्तानानि[स्थानानि[1]] तत्प्रथमतो ग्राहयति[2] । वाचय[ति[3]] । ततः पश्चाद्गंभीराणि प्रथमस्य वा सत्यस्याभिसमयाय तत्प्रथमतोववदते ।

---

*(contd. from p. 258)*
समाधिसन्निश्रयेण वा संवासान्वयाद्वा येषामववदितुकामो भवति यो वा पुनरन्यो बोधिसत्त्वोऽस्मै अववदति तथागतो वा स आदित एव चित्तं पर्येषते जानाति । चित्तं पर्येष्य इन्द्रियं पर्येषते जानाति । इन्द्रियं पर्येष्य आश्रयं पर्येषते जानाति । आशयं(श्रयं) पर्येष्यानुशयं पर्येषते जानाति । अनुशयं पर्येष्य यथायोगं यथार्हमेव विचित्रेष्ववतारमुखेषवतारयति । यदि वा शुभया यदि वा मैत्र्या यद्वा इदं प्रत्ययताप्रतीत्यसमुत्पादेन यदि वा धातुयोगेन यदि वा आनापानस्मृत्या यथायोगं यथार्हमवतारमुखेष्ववतार्य शाश्वतान्तग्राहप्रतिपक्षेण···उच्छेदान्तग्राहप्रतिपक्षेण मध्यमां प्रतिपदं देशयति । अकृते च कृताभिमानं त्याजयति । अप्राप्ते अस्पर्शिते असाक्षात्कृते साक्षात्कृताभिमानं त्याजयति । p. 78; he further subdivides the eight kinds of avavāda into three subgroups (sthānaṁ) : अस्थितस्य चित्तस्यादितोऽवस्थितये सम्यगालम्बनोपनिबन्धः, स्थितचित्तस्य स्वार्थप्राप्तये सम्यगुपायमार्गदेशना and अनिष्ठितकार्यस्य···अन्तराधिष्ठानपरित्यागः; ibid, loc. cit., para 2.

1. Added by a separate hand in a footnote.
2. MS. illegible.
3. Syllable damaged by pin-hold.

ततः **पश्चात्समुदयनिरोधमार्गसत्यस्य, प्रथमस्य ध्यानस्य समापत्तये तत्प्रथमतोववदते** । ततः पश्चादन्यासां ध्यानसमापत्तीनाम[2]यमेवंभागीयोनुपूर्व्वाववादो वेदितव्यः ।

**तत्रागमाववादो** यथा तेन गुरूणामन्तिकादागमितं[1] भवति । गुरुस्थानीयानां, योगज्ञानां, आचार्याणामुपाध्यायस्य वा, तथागतस्य वा, तथागतश्रावकस्य वा[।]तथैवानेनान्यूनमधिकं कृत्वा परानववदते ।[2] अयमुच्यते आगमाववादः ।

**तत्राधिगमाववादः** [।] यथानेन ते[3]धर्मा अधिगता भवन्ति । स्पर्शिताः(स्पृष्टाः) साक्षात्कृता, एकाकिना व्यवकृष्टविहारिणा । तञ्चैव परेषां प्राप्तये । स्पर्शनायै साक्षात्क्रियायै । अववदते [।] अयमुच्यते **अधिगमाववादः** ।

अस्ति पुनः **सर्व्वाकारपरिपूर्णोववादः** । स पुनः कतमः [।] **यस्त्रिभिः** (यत् त्रिभिः) **प्रातिहार्यैववदति । ऋद्धिप्रातिहार्येण, आदेशनाप्रातिहार्येण । [4]अनुशास्तिप्रातिहार्येण**[3] । ऋद्धिप्रातिहार्येण,

---

1. The correct form might be आगतं ?
2. The correct form seems to be परेऽवोद्यन्ते ।
3. cp. D. N., III.173 : तीणि पाटिहारियानि--इद्धिपाटिहारियं आदेसनापाटिहारियं, अनुसासनीपाटिहारियं, I.184-6; AK, VII.47; Vasubandhu remarks : विनेयमनसामादितो अत्यर्थं हरणात् प्राति-

(contd. on p. 261)

अनेकविधमृद्धिविषयमुपदर्शयत्यात्मनि च बहुमानं ज[न]यति । परेषां यथा तेन बहुमानजाताः । श्रोत्रावधानयोगे मनसिकारे आदरजाता भवन्ति । तत्र[।]देशना प्रातिहार्येण चित्तचरितं समन्वेष्य अनुशास्तिप्रातिहार्येण यथेन्द्रियं, यथाचरितं, यथावतारं-
[5]धर्मदेशनां देशयति । प्रतिपक्षे समनुशास्ति । तेनायं प्रातिहार्यत्रयसंगृहीतः परिपूर्णाववादो भवति ॥

तत्र **शिक्षा कतमा** । आह । तिस्रः शिक्षाः [।] अधिशीलं शिक्षा, अधिचित्तमधिप्रज्ञं शिक्षा ॥[1]

**तत्राधिशीलं शिक्षा कतमा** ।[2] यथापि तच्छीलं

---

*(contd. from p. 260)*
हार्याणि प्रतिशब्दयोरादिकर्मभृशार्थत्वात् । प्रतिहृतमध्यस्थानं मनांस्येभिः प्रतिहरन्तीति प्रातिहार्याणि वा । AKB, VII.47; cp. Adv., Vs. 523, p. 398 : ऋद्ध्यादेशनाप्रातिहार्ये खलु कुशास्तृभ्यः कपिलोलूकाक्षपादादिभ्यो विनेयजनचित्तमपहृत्य बुद्धे भगवति परमशास्तरि संनियोजयतः । अनुशासनाप्रातिहार्यं मारेभ्योऽपहृत्य सर्वज्ञे मार्गदेशिके प्रवरे प्रतिष्ठापयति ।; for details, see *infra*, under ṛddhipāda; Vsm., XII.84. sq.; Y. B., III.45; Adv., pp. 398-400 sq., Bodhi., p. 40 sq.; GVS, p. 3 sq.

1. cp. K. N., IV, part I, p. 33 sq. : तिस्सो सिक्खा—अधिसीलसिक्खा, अधिचित्तसिक्खा, अधिपञ्ञा सिक्खा; D. N., III.172; A. N., I.212-22; M. N., pp. 132, 362-3; Psm., pp. 51, 53, 213, 216, 229; Vsm., I.10; AS, I.55; Dh. Saṁ., 140 (MSS. I.339).
2. cp. इध भिक्खु सीलवा होति, पातिमोक्खसंवुतो विहरति, आचारगोचरसम्पन्नो, अणुमत्तेसु भयेसु दस्सावी, समादाय सिक्खति सिक्खापदेसु । खुद्दको सीलक्खन्धो महन्तो सीलक्खन्धो सीलं पतिट्ठा आदिचरणं संयमो संवरो मोक्खं पामोक्खं कुसलानं समापत्तिया—अयं अधिसीलसिक्खा । K. N., ibid, loc. cit.; cp. Psm., p. 229 : यो तत्थ संवरट्ठो अयं अधिसील सिक्खा....

वा (तच्छीलवान्) विहरतीति विस्तरेण पूर्व्ववत् ।।

**तत्राधिशीलं (चित्तं) शिक्षा** विवि[6]क्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं, सविचारं, विवेकजं, प्रीतिसुखं, चित्तैकाग्रता[ञ्]च, प्रथमं ध्यानं यावच्चतुर्थं ध्यानमुपसम्पद्य विहरति । इयमधिचित्तं, शिक्षा ।[1] अपि खलु सर्व्वे आरूप्यास्तदन्याश्च समाधिसमापत्तयः । अधिचित्तं शिक्षेत्युच्यते । अपि तु ध्यानानि निश्रित्य तत्प्रथमतः स[7]त्याभिसमयोमा[2]-वक्रान्तिर्भवति । न तु सर्व्वेण सर्व्वं विना ध्यानैः तस्मात्प्रधानानि ध्यानानि कृत्वा अधिचित्तं शिक्षेत्युक्तानि ।

**तत्राधिप्रज्ञं शिक्षा**[3] या चतुर्ष्वार्यसत्येषु यथाभूतं ज्ञानं [।]

---

1. कतमा अधिचित्तसिक्खा ? इध भिक्खु विविच्चेव कामेहि विविच्च अकुसलेहि धम्मेहि सवितक्कं सविचारं विवेकजं पीतिसुखं पठमं झानं उपसम्पज्ज विहरति । ····दुतियं····ततियं····चतुत्थं झानं उपसम्पज्ज विहरति । अयं अधिचित्तसिक्खा । K. N., vol. IV, pt. I, pp. 33-4; 226; Psm., p. 22 : यो तत्थ अविक्खेपट्ठो अयं अधिचित्तसिक्खा ।
2. MS. illegible, might be यस्याव—.
3. कतमा अधिपञ्ञा सिक्खा ? इध भिक्खु पञ्ञवा होति उदयत्थगामिनिया पञ्ञाय समन्नागतो अरियाय निब्बेधिकाय सम्मादुक्खक्खयगामिनिया । सो 'इदं दुक्खं' ति यथाभूतं पजानाति, 'अयं दुक्खसमुदयो' ति ···'अयं दुक्खनिरोधो' ति,····'अयं दुक्खनिरोधगामिनी पटिपदा' ति यथाभूतं पजानाति । 'इमे आसवा' ति····'अयं आसवसमुदयो' ति, 'अयं आसवनिरोधो' ति ···, 'अयं आसवनिरोधगामिनी पटिपदा' ति यथाभूतं पजानाति अयं अधिपञ्ञासिक्खा ।, K. N., IV, pt. I, p. 34, 226; cp. Psm., p. 229 : योतत्थ दस्सनट्ठो अयं अधिपञ्ञा सिक्खा ।

केन कारणेन तिस्र एव शिक्षा न तदूर्ध्वं । आह । समाधिप्रतिष्ठार्थेन । ज्ञानसंनिश्रयार्थेन । कृत्य-करणार्थेन च [।] तत्र समा[8]धिप्रतिष्ठार्थेनाधि-शीलं । शिक्षा । तथा हि शीलं प्रतिष्ठाय चित्तैकाग्रतां स्पृशति (।।) चित्तसमाधिं [।।] तत्र ज्ञानसन्निश्रयार्थेन अधिचित्तं शिक्षा । तथा हि समाहितचित्तस्यैकाग्रता । स्मृत्या ज्ञेये वस्तुनि यथाभूतं ज्ञानदर्शनं प्रवर्त्तते । तत्र कृत्यकरणार्थेन अधिप्रज्ञं शिक्षा । तथा हि सुविशुद्धेन

9B—5// ज्ञानदर्श//[1]नेन क्लेशप्रहाणं साक्षात्करोति । एष हि स्वार्थं ए[तत्[1]] परमं कृत्यं यदुत क्लेशप्रहाणं [।]तत उत्तरिकरणीयं पुनर्नास्ति । तेन एतास्तिस्र एव शिक्षाः[2] ।

क(र[3]): पुनरासां शिक्षाणामानुपूर्व्वीषु विशुद्ध-शीलस्य विप्रतिसारः [2][।] अविप्रतिसारिणः प्रामोद्यं, प्रीतिः, प्रश्रब्धिः, सुखं, सुखितस्य चित्तसमाधिः [।] समाहितचित्तो यथाभू[2]तं प्रजानाति । यथाभूतं पश्यति । यथाभूतं जानन्पश्यन्निर्विद्यते । निर्विण्णो

---

1. Syllables damaged by pin-hold.
2. cp. Vsm., I.10 : एत्थ हि सीलेन अधिसीलसिक्खा पकासिता होति, समाधिना अधिचित्तसिक्खा, अधिपञ्ञासिक्खा । सीलेन च सासनस्स आदि-कल्याणता पकामिता होति ।····तञ्च कल्याणं अविप्पटिसारादिगुणावहत्ता । समाधिना मज्झेकल्याणता पकासिता होति ।····सो च कल्याणो इधिविद्धादि-गुणावहत्ता । पञ्ञाय परियोसानकल्याणता पकासिता होति ।····पञ्ञुत्तरतो च पञ्ञा सासनस्स परियोसानं, सा च कल्याणा इट्ठानिट्ठेसु तादिभाववाहनतो ।
3. This may be deleted.

विरज्यते । विरक्तो विमुच्यते । विमुक्तो[अ]नुपादाय परिनिर्व्वाति । एवमिमानि शीलानि भावितानि अग्रतायामुपनयन्ति । यदुतानुपादाय परिनिर्व्वाण-मियमासां **शिक्षाणामानुपूर्व्वी**[1] ।

तत्र केन कारणेनाधिशीलं शिक्षा अधिशील-मि[3]त्युच्यते । एवमधिचित्तमधिप्रज्ञमधिकारार्थे-न(।धिकारार्थेन[2]) च ।

तत्र कथमधिकारार्थेना(ना अ)धिचित्तमधिकृत्य यच्छीलं सा अधिशीलं शिक्षा । अधिप्रज्ञमधिकृत्य यश्चित्तसमाधिः । सा अधिचित्तं शिक्षा ।

क्लेशप्रहाणमधिकृत्य यज्ज्ञानं दर्शनं । सा अधिप्रज्ञं शिक्षा ।

या चाधिचित्तं । या चाधिप्रज्ञं शिक्षा । एताः शिक्षाः अस्मिन्नेव शासने असाधारणा इतो बाह्यैरेव-मधिकार्थेन [।]

अस्ति पुनरधिचित्तं शिक्षा या अधिप्रज्ञं शिक्षाया आवाहिका, अस्त्यधिप्रज्ञं शिक्षा या अधिचित्तं शिक्षाया आवाहिका । तद्यथा । आर्यश्रावकः । अला[5]भी मौलध्यानानां, शैक्षो, दृष्टपदः, ततः पश्चाद्भावना-प्रहातव्यानां क्लेशानां प्रहाणाय प्रयुज्यमान[:]स्मृति-संबोध्यंगं भावयति । इयमधिप्रज्ञं शिक्षा(।)अधिचित्तं

1. cp. SVA, p. 123, para 1.
2. A repetition, should be deleted.

शिक्षाया आवाहिका । अधिचित्तं पुनः शिक्षा अधिप्रज्ञाया आवाहिका पूर्व्वमेवोक्ता ॥ तत्र अस्त्यधिशीलं शिक्षा । नाधिचि[6]त्तं, नाधिप्रज्ञं । अस्त्यधिशीलमधिचित्तं, नाधिप्रज्ञं । न त्वस्त्यधिप्रज्ञं शिक्षा या विनाधिशीलेनाधिचित्तेन च । अतो यत्राधिप्रज्ञं । शिक्षा । तत्र तिस्रः शिक्षा वेदितव्या[ः] ॥ इदं तावच्छिक्षाव्यवस्थानं । तत्र योगिना योगप्रयुक्तेन शिक्षितव्यं ॥

तत्र त्रयः **पुद्गलाः सत्यान्यभिसमागच्छ[7]न्ति ।** कतमे त्रयस्तद्यथा ।[1] **अवीतरागः यद्भूयो वीतरागः, वीतरागश्च ।**

**तत्र सर्व्वेणसर्व्वमवीतरागः** सत्यान्यभिसमागच्छन् सह सत्याभिसमयात्स्रोत(-येन स्रोत) आपन्नो भवति ।

**यद्भूयो वीतरागः**[2] पुनः सकृदागामी भवति ।

**वीतरागः सह सत्याभिसमयाद्** (येना) नागामी[3] भवति ।

---

1. cp. AKB and AKV, II.16 sq.; Adv., pp. 57-8, 381.
2. cp. AKV, II, p. 27 : यो लौकिकेन मार्गेण पृथग्जनावस्थायां षट्प्रकारोपलिखितोऽभूत् । स भूयोवीतराग इत्युच्यते भूयसा प्रकारेण वीतराग इति कृत्वा । स यदि सकृदागामिफलं प्राप्नोति कथं स प्राप्नोति इति । अभिसमयक्रमेण पूर्वोक्तेन मार्गेऽन्वयज्ञानक्षान्त्यवस्थायां प्राप्नोति ।····अयं हि स्रोत आपत्तिफलमप्राप्यैव षोडशे क्षणे सकृदागामी भवति ।····; cp. pp. 57-8, Adv.
3. cp. ibid, loc. cit. : कामधातुमात्रवीतरागो लौकिकेनमार्गेण नवमे प्रकारे प्रहीणे प्रथमादपिवा ध्यानाद् यावदाकिञ्चन्यादपि वा वीतरागो योऽनागामिफलं प्राप्नोति ।····cp. Adv., pp. 57-8; for लौकिकमार्ग and लोकोत्तरमार्ग *vide*, AKV, II, p. 26; AKB, II.16.

त्रीणीन्द्रि[8]याणि[1] । अनाज्ञातमाज्ञास्यामीन्द्रियं[2] । आज्ञेन्द्रिय[3]माज्ञातवत इन्द्रियं[4] ।

एषामिन्द्रियाणां कथं व्यवस्थानं[5] भवति । अन-

1. Vbh., p. 156 enumerates twenty-two indriyas : बावीसतिन्द्रियानि । चक्खुन्द्रियं, सोतिन्द्रियं, घानिन्द्रियं, जिह्विन्द्रियं, कायिन्द्रियं, मनिन्द्रियं, इत्थिन्द्रियं, पुरिसिन्द्रियं, सुखिन्द्रियं, दुक्खिन्द्रियं, सोमनस्सिन्द्रियं, दोमनस्सिन्द्रियं, उपेक्खिन्द्रियं, सद्धिन्द्रियं, विरियिन्द्रियं, सतिन्द्रियं, समाधिन्द्रियं, पञ्ञिन्द्रियं, अनञ्ञातञ्ञस्सामीतिन्द्रियं, अञ्ञिन्द्रियं, अञ्ञाताविन्द्रियं । see, Vsm., XVI.1-12; Vbh., pp. 156-72; Ada., VIII, pp. 74-6; SVA, pp. 127-30; Asm., pp. 74-5; AKB, II.4; AKV, II, p. 5 sq.
2. cp. Vbh., p. 159 : तत्र कतमं अनञ्ञातञ्ञस्सामीतिन्द्रियं ? या तेसं धम्मानं अनञ्ञातानं अदिट्ठानं अप्पत्तानं अविदितानं असच्छिकतानं सच्छिकिरियाय पञ्ञा पजानना—अमोहो धम्मविचयो सम्मादिट्ठि धम्मविचयसम्बोज्झङ्गो मग्गङ्गं मग्गपरियापन्नं—इदमुच्चति 'अनञ्ञातञ्ञस्सामीतिन्द्रियं' । cp. Ada., p. 74 : दृढश्रद्धादृढधर्ममार्गसंग्राहकाणि अनास्रवाणि नवेन्द्रियाणीत्याज्ञास्यामीन्द्रियं ।
3. Vbh., p. 159 : तत्थ कतमं अञ्ञिन्द्रियं ? या तेसं धम्मानं तानं ञातानं ····विदितानं सच्छिकतानं सच्छिकिरियाय पञ्ञा पजानना····अमोहो धम्मविचयो सम्मादिट्ठि धम्मविचयसम्बोज्झङ्गो मग्गङ्गं मग्गपरियापन्नं—इदं वुच्चति अञ्ञिन्द्रियं । Ada., p. 75 : श्रद्धाविमोक्षदर्शनमार्गसंग्राहकाणि अनास्रवाणि नवेन्द्रियाणीत्याज्ञेन्द्रियं ।
4. कत्थ कतमं अञ्ञाताविन्द्रियं ? या तेसं धम्मानं अनञ्ञातावीनं दिट्ठानं पत्तानं विदितानं सच्छिकतानं सच्छिकिरियाय पञ्ञा पजानना····अमोहो धम्मविचयो सम्मादिट्ठि धम्मविचयसम्बोज्झङ्गो मग्गङ्गं परियापन्नं—इदं वुच्चति 'अञ्ञाताविन्द्रियं' । Vbh., p. 159; cp. Ada., p. 75 : अशैक्षमार्गसंग्राहकाणि अनास्रवनवेन्द्रियाणि आज्ञातावीन्द्रियं ।
5. cp. Vsm., XVI.10 (last four lines); SVA, pp. 129-30; Psm., p. 267.

भिसमितानां सत्यानां अभिसमयाय प्रयुक्तस्य अनाज्ञातमाज्ञास्यामीन्द्रियव्यवस्थानं । अभिसमितवत: शैक्ष-
9A—6// स्याज्ञे//[1]न्द्रियव्यवस्थानं । कृतकृत्यस्याशैक्षस्यार्हत: । आज्ञा[तावीन्द्रिय[1]]व्यवस्थानं[2] ।

**त्रीणि विमोक्षमुखानि ।**[3] तद्यथा **शून्यता[अ]प्रणिहितमानिमित्तमेषां** त्रयाणां विमोक्षमुखानां कथं व्यवस्थानं भवति । आह[।]द्वयमिदं संस्कृतमसंस्कृतञ्च ।

तत्र **संस्कृतं** त्रैधातुकप्रतिसंयुक्ता: पञ्चस्कन्धा:, [अ]संस्कृतं पुन: निर्व्वाणं । इदमुभयं यच्च संस्कृतं, यच्चा[2]संस्कृतमित्युच्यते ।

---

1. Letters lost by pin-hold.
2. cp. ibid, p. 130 :
   संवेगबहुलो भिक्खु, ठितो इन्द्रियसंवरे ।
   इन्द्रियानि परिञ्ञाय, दुक्खस्सन्तं निगच्छती ति ।।
3. cp. AK, VIII.25; AKV, p. 682; Adv., p. 424; Psm., p. 273 sq. : तयो मे, भिक्खवे, विमोक्खा ।····सुञ्ञतो विमोक्खो, अनिमित्तोविमोक्खो, अप्पणिहितो विमोक्खो ।····see pp. 274; 301 : अनिच्चतो मनसिकरोन्तो अधिमोक्खबहुलो अनिमित्तं पटिलभति । दुक्खतो मनसिकरोन्तो पस्सद्धिबहुलो अप्पणिहितं विमोक्खं पटिलभति । अनत्ततो मनसिकरोन्तो वेदबहुलो सुञ्ञतं विमोक्खं पटिलभति । see, pp. 302-13; see Vsm., XXI.70-3; As., III.483-92 (pp. 180-4); cp. Ada., XIII.2 (p. 99) : समाधिस्त्रिविध: । शून्यातासमाधि: अप्रणिहितसमाधि:, अनिमित्तसमाधि: । चित्तस्यानास्रवालम्बनप्रतिसंयुक्तत्वादुच्यते समाधि: । समाहित: पश्यति पञ्चोपादानस्कन्धा: शून्या अनात्मान: अनात्मीया इति । इत्युच्यते शून्यतासमाधि: । समाधिमवतीर्णो न प्रणिदधाति रागद्वेषमोहान् पुनरुत्पत्तिमत इत्यप्रणिहितसमाधि: य: समाधि: वीतदर्शनिमित्तधर्मालम्बन: सोऽनिर्मित्तसमाधि:····।; cp. MSA, XVIII.77-80, pp. 148-9.

यत्पुनरिदमुच्यते । आत्मा वा, सत्त्वो वा, जीवो वा, जन्तुर्वा, इदमसत् । तत्र संस्कृते दोषदर्शनादादीनवदर्शनादप्रणिधानं भवति । अप्रणिधानाच्चाप्रणिहितं विमोक्षमुखं व्यवस्थाप्यते । निर्वाणे पुनः तत्र प्रणिधानवतः प्रणिधानं भवति । शान्तदर्शनं । प्रणीतदर्शनं । निःसरणदर्शनं च । निः[3]सरणदर्शनाच्च पुनरानिमित्तं विमोक्षमुखं व्यवस्थाप्यते । तत्रासत्यसम्विद्यमाने नैव प्रणिधानं भवति । तद्यथैवासत्तथैवासदिति । जानतः पश्यतः शून्यताविमोक्षमुखं व्यवस्थाप्यते । एवं त्रयाणां विमोक्षमुखानां व्यवस्थानं भवति ॥

**तत्र कतमे शिक्षानुलोमिका धर्माः । आह दश शिक्षाविलोमा धर्माः । तेषां[4]प्रतिपक्षेण दश शिक्षानुलोमिका [धर्मा[1]] वेदितव्याः ।**

तत्र कतमे शिक्षाविलोमाधर्मास्तद्यथा । मातृग्रामः । शिशुरुदारवर्णो रंजनीयः । शिक्षाप्रयुक्तस्य कुलपुत्रस्याधिमात्रमन्तरायकरः परिपन्थकः, सत्कायपर्यापन्नेषु संस्कारेषु निर्यन्तिरालस्यं, कौसीद्यं । सत्कायदृष्टेः कबडंकाराहा[5]रमुपादाय रसरागः । लोकाख्यानकथास्वनेकविधासु बहुनानाप्रकारासु चित्रेषु(त्रासु) छ(च्छ)न्दरागानुनयः, धर्मचिन्ता, योगमनसिकारापक्षालः । स पुनः कतमस्तद्यथा

1. धर्माः seems to have been omitted in the MS.

र[मे[1]]षु वा, सत्येषु वा, स्कन्धेषु वा[।]कर्मफले वा प्रहाणप्रयुक्तस्य च कायदौष्ठुल्य[6]शैथिलिकस्य **शमथ-विपश्यनापक्षालमनसिकारः**। स्त्यानमिद्धेन वा **चित्ताभिभवः**। **चित्ताभिसंक्षेपः**। अन्वारब्धवीर्यस्य वा **कायिकक्लमः**। चैतसिक **उपायासः**। अतिलीन-वीर्यस्य विशेषासंप्राप्तिः **कुशलपक्षपर्यादानं**। लोभेन वा, यश[7]स[ा]वा, प्रशंसया वा, अन्यतमान्यतमेन वा मुखलवमात्रत्वेन, नन्दीसौमनस्यमौद्धत्य**मभ्युपशमः**।
9B—6// औद्विग्न्य//[ 1 ]मुत्प्ला**वितत्वं**। सत्कायनिरोधे निर्वाणे उत्त्रासश्ठ(: स्त)**म्भितत्वं**। अमात्रया[......[2]]प्रयोगः। **अत्यभिजल्पः**। धर्म्यामपि कथां कथयता विगृह्य **कथामारभ्यानुयोगः**। पूर्वदृष्टश्रुतानुभूतेषु विषये-ष्वनेकविधेषु बहुनानाप्रकारेषु **चित्तविसारः चित्ता-क्षेपः**। अनित्येषु च संस्का[रेषु[3]] **निध्यायितत्वं, इमे धर्माश्चिन्तायोगमनसिकारा[2]पक्षाला** वेदितव्याः।

**ध्यान [समापत्ति[4]] सुखास्वादनता,** आनिमित्तं समापत्तुकामस्य **संस्कारनिमित्तानुसारिता**। स्पृष्टस्य शारीरिकाभिर्वेदनाभिः, दुःखाभिर्यावत्प्राणहारिणी-भिर्जीवित**नियन्ति**[:]।। **जीविताशा** तदाशानुगतस्य

---

1. Letter lost by pin-hold.
2. Syllables lost by pin-hold, illegible.
3. Damaged by pin-hold.
4. Added by a separate hand in a footnote.

**शोचना, क्लाम्यना, परिदेवना** इति । इमे दश **शिक्षाविलोमा धर्माः** [।]

**कतमे दश शिक्षापदानां**[3] **विलोमानां धर्माणां प्रतिपक्षेण शिक्षानुलोमिका भवन्ति । तद्यथा—अशुभसंज्ञा, अनित्ये दुःखसंज्ञा । दुःखे अनात्मसंज्ञा । आहारे प्रतिकूलसंज्ञा । सर्वलोके अनभिरतिसंज्ञा । आलोकसंज्ञा । विरागसंज्ञा । निरोधसंज्ञा । मरणसंज्ञा ।** इतीमा दश संज्ञा[:] । आसेविता भाविता बहुलीकृता दशविधस्य शिक्षापरिपन्थक[4]स्य दशानां शिक्षाविलोमानां धर्माणां प्रहाणाय सम्वर्तन्ते ।[1]

तत्र धर्मालोकः । अर्थालोकः । शमथालोको, विपश्यनालोकश्च । एतानालोकानधिपतिं कृत्वा **आलोकसंज्ञा** । अस्मिन्नर्थे अभिप्रेता । धर्मचिन्तायोगमनसिकारः । परिपन्थस्य प्रहाणाय ॥

**तत्रापरे दश शिक्षानु**[5]**लोमिका धर्मा वेदितव्याः** । कतमे दश[।]तद्यथा **पूर्व्वंको हेतुः । आनुलोमिक उपदेशः । योनिशः प्रयोगः । सातत्यसत्कृत्यकारिता तीव्र[च]छन्दता, योगबलाधानता, कायचित्तदौष्ठुल्यप्रतिप्रश्रब्ध(ब्धि)रभीक्ष्णप्रत्यवेक्ष[ण]ता । अपरितमना, निरभिमानता च ।**

तत्र **पूर्व्वंको हेतुः** कतमः । [6]यः पूर्व्वमिन्द्रिय-

---

1. See Ada., XII.11, pp. 97-8; A. N., IV.183; *infra*, under संज्ञाभावना.

परिपाकः । इन्द्रियसमुदागमश्च । [तत्रानुलोमिक उपदेशः कतमः[1]] य उपदेशो[ऽ]विपरीतश्चान(नु)-पूर्व्विकस्य(श्च) ।

**तत्र योनिशः प्रयोगः** । यथैवा[व]वदितः(वोदितः) । तथैव प्रयुज्यते । तथा प्रयुज्यमानः सम्यग्दृष्टिमुत्पादयति ॥

तत्र सातत्यसत्कृ[7]त्यकारिता[।]षड्रूपेण प्रयोगेण अबन्ध्यश्च कालं करोति । कुशलपक्षेण क्षिप्रमेव कुशल-पक्षं समुदानयति ।

**तत्र तीव्र[च्]छन्दता** [।] यथापि तदुत्तरे विमोक्षे स्पृहामुत्पादयति । कदा स्विदहं तदायतनमुपस[8]म्पद्य विहरिष्यामि । यदार्या आयतनमुपसंपद्य विहरन्तीति ।

**तत्र योगबलाधानता** [।] द्वाभ्यां कारणाभ्यां योग-

9A—7// बलाधानप्राप्तो भवति । प्रकृत्यैव च[2] तीक्ष्णेन्द्रि//[1] यतया, दीर्घकालाभ्यासपरिचयेन च । तत्र कायचित्त-दौष्ठु[ल्यं, प्रीतिः[3]] प्रश्रब्धिर्यथापि तच्छ्रान्तकायस्य क्लान्तकायस्योत्पद्यते । कायदौष्ठुल्यं, चित्तदौष्ठुल्यं । तदीर्यापथान्तरकल्पनया प्रतिप्रस्रम्भयति । अतिवित-र्कितेनातिविचारितेनोत्पद्यते । कायचित्तदौष्ठुल्यं तदा [चात्म[2]] [2]चेतः शमथानुयोगेन प्रतिप्रश्रम्भयति ।

1. MS. omits this.
2. MS. dim and illegible.
3. Letters lost by pin-hold.

चित्ताभिसंक्षेपेण चित्तलयेन स्त्यानमिद्धपर्यवस्थानं । चोत्पद्यते । कायचित्तदौष्ठुल्यं तदधिप्रज्ञं धर्मविपश्यनया, प्रसदनीयेन च मनस्कारेण प्रश्रम्भयति । प्रकृत्यैव वा प्रहीणक्लेशस्य क्लेशपक्षं कायचित्तदौष्ठुल्यं अविगतं भवति । सदानुषक्तं तत्सम्यङ्मार्गभावन-[3]या प्रतिप्रश्रम्भयति ।

**तत्राभीक्ष्णप्रत्यवेक्षा ।** अभीक्ष्णं शीलान्यारभ्य कुकृतं प्रत्यवेक्षते । सुकृतञ्च । अकृतं च प्रत्यवेक्षते, कृतं च । कुकृताच्चाकृताद् व्यावर्त्तते । सुकृताच्च कृतान्न प्रत्युदावर्त्तते । तथा क्लेशानां प्रहीणाप्रहीणानां मीमान्सा(मांसा) मनस्कारम[4]धिपतिं कृत्वा अभीक्ष्णं प्रत्यवेक्षते । तत्र प्रहीणतां ज्ञात्वा पुनः पुनस्तमेव मार्गं भावयति ।

**तत्रापरितमनाय(नया)** तत्कालान्तरेण ज्ञातव्यं । द्रष्टव्यं, प्राप्तव्यं । तदजानतो [अ]पश्यतो, नाधिगच्छतः । परितमना उत्पद्यते, चैतसिकः क्लमः । चैतसिकोविघातः । तामुत्पन्नान्नाधिवासयति । प्रजहाति ।

**निरभिमानता ।** अधिगमे प्राप्तौ । [5] स्पर्शनायां निरभिमानो भवति । अविपरीतग्राही, प्राप्ते प्राप्तसंज्ञी, अधिगते अधिगतसंज्ञी[।]इतीमे दश धर्माः शिक्षाकामस्य योगिनः ।। आदिमध्यपर्यवसानमुपादाय शिक्षामनुलोमयति(न्ति), न विलोमयन्ति । तेनोच्यन्ते शिक्षानुलोमिका इति ।।

तत्र कतमो **योगभ्रंशः**। आह। **चत्वारो योग-[6]भ्रंशाः**। कतमे चत्वारः। अस्ति योगभ्रंश **आत्यन्तिकः**। अस्ति **तावत्कालिकः**। अस्ति **प[ा]रिहाणिकः**। अस्ति **मिथ्याप्रतिपत्तिकृतः**।

**तत्रात्यन्तिको योगभ्रंशः**। अयोगस्थानां पुद्गलानां वेदितव्यः। तस्यापरिनिर्व्वाणधर्मकत्वाद-त्यन्तपरिभ्रष्टा एव योगाद्भवन्ति।

तत्र **तावत्कालिकः**। तद्यथा गोत्रस्थानां परि-निर्व्वाण[7]धर्मकाणां प्रत्ययविकलानां, ते हि दूरमपि, परमपि गत्वा अवश्यमेव प्रत्ययानासादयिष्यन्ति। योगं च संमुखीकृत्य भावयित्वा परिनिर्व्वास्यन्ति। तेनैव तेषां तावत्कालिक एव भ्रंशो भवति।

**तत्र प्राप्तिपरिहाणिको योगभ्रंशः**। यथापीहैकत्ये प्राप्तादधिगता[ज्]ज्ञानदर्शनस्पर्शविहारात्परिहीयन्ते।

**तत्र मिथ्या[8]प्रतिपत्तिकृतो योगभ्रंशः**। यथा-पीहैकत्येः। अयोनिशः प्रयुज्यमानो नाराधको भवति(।)योगस्य, नाराधयति (।) ध्याय्यं धर्मं कुशलं [।] यथापीहैकत्यः बहुक्लेशो भवति। प्रभूतर-जस्कजातीयः। महाविज्ञानश्च भवति। महाबुद्धिः। महताया(महत्या) बुद्धया समन्वागतः। स श्रुत-मुद्गृह्णाति। श्रुतं पर्यवाप्नोति। अल्पम्वा, प्रभूतं वा[9], अरण्ये वा पुनर्विहरति आगतागतानाञ्च गृहि-प्रव्रजितानां, रुजकानां, रुजकजातीयानां धर्मदेशनया

चित्तमाराधयति । कुहनानुचरितया च चेष्टया काय-
वाक्यप्रतिसंयुक्तया, तस्य तेन हेतुभावेन, तेन प्रत्यये-
नोत्पद्यते । लाभसत्कारश्लोकः, स ज्ञातो भवति ।
9B—7// //[1] महासुखो लाभी भवति । चीवरपिण्डपात-
शयनासन[ग्लानप्रत्य[1]]यभैषज्यपरिष्काराणां, सत्कृतश्च
भवति, गुरुकृतो, राज्ञां राजामात्राणां, यावत्सार्थ-
वाहानां, अर्हत्सम्पत(द): । तस्यान्ता वर्तन्ते श्रावकाः,
गृहिणः, प्रव्रजिताः । अपि अध्वादेन्तेषु ग्रेधं निगमयम्वा
वर्त्तते (अप्यध्वान्तेषु ग्रामो निगमो वा वर्तते)
वा[···[1]]यतस्यैवं भवति । सन्ति ये श्रावका, गृहि-
प्रव्रजिता, ये [2]मयि संभावनाजाता येषां
महत्संस(म)तः ते चेद्या(न्मा)मुपसंक्रम्य योगे
मनसिकारे शमथविपश्यनाया[ं] प्रश्नं पृच्छेयुः । तेषां
चाहं पृष्टो व्याकुर्यां न जानामीत्येवं सति या संभावना
सा च हीयेन्न(हीयेत, न)च स्यामर्हत्सम्मतः, यन्न्वहं
स्वयमेव चिन्तयित्वा, तुलयित्वोपपरीक्ष्य योगं व्यव-
स्थापयेयं । स एतमेवार्थमधिपतिं कृ[3]त्वा लाभ-
सत्काराभिगृद्ध एकाकी रहोगतः स्वयमेव चिन्तयित्वा,
तुलयित्वा, तुलयित्वोपपरीक्ष्य योगं व्यवस्थापयति ।
स चास्य योगो न सूत्रे भवति । न विनये संदृश्यते ।
धर्मतां च विलोमयति । मयेते(य एते) भिक्षवः ।
सूत्रधरा, विनयधरा, मातृकाधरास्तेषां तद्योगस्थानं

1. Letters lost by pin-hold.

विनिगूहति । न प्रकाशयति । येऽप्यस्य श्राव[4]का भवन्ति । गृहिणः, प्रव्रजिताश्च, तानपि योगप्रतियुक्तये आज्ञापयति । तत्कस्य हेतोर्मा, मैव ते सूत्रधरा, विनयधरा, मातृकाधरा, एतद्योगस्थानं श्रुत्वा सूत्रेवतारयेयुः । तच्च नावतारये(तरे)द्विनये, संदर्शयेयुः । तच्च न संदृश्यते । धर्मतया उपपरीक्ष्येत । तच्च धर्मतां विरोधयेत् । ते च ततो निदानम्[5]प्रतीता भवेयुरप्रतीतवचनैश्च सं(t)चोदयेयुः । अधिकरणानि चोत्पादयेयुः । एवमहं पुनरपि न सत्कृतः (।) स्यान्न गुरुकृतो, राज्ञां राजामात्राणां यावद्धनिनां श्रेष्ठिनां सार्थवाहानां, न च पुनर्लाभी स्यां चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणामिति । स तामेव लाभसत्कारकामता[6]मधिपतिं कृत्वा अधर्मे धर्मसंज्ञी, विनिधाय संज्ञां रूपि[णी]मधर्मं धर्म्मतो दीपयति । संप्रकाशयति । तत्र येस्य दृष्ट्यनुमतमापद्यन्ते । तेऽप्यधर्मे । धर्मसंज्ञिनो भवन्ति । मन्दत्वान्मोहत्वात्ते अधर्मे धर्मसंज्ञिनो यथानुशिष्टा अपि, प्रतिपद्यमाना मिथ्याप्रतिपन्ना एव ते वेदितव्याः । अयमेवं रूपो मिथ्याप्रतिपत्तिकृतो[7]योगभ्रंशस्सद्धर्मप्रतिरूपको ह्यसद्धर्मः सद्धर्मस्यान्तर्धानाय [।] इतीमे चत्वारो योगभ्रंशा ध्यायिना भिक्षुणा योगाचारेण परिज्ञेया वर्जयितव्याः ।।

**तत्र योगः कतमः ।** आह [।] **चतुर्व्विधो**

**योगः । तद्यथा श्रद्धा, छन्दो, वीर्यं, उपायश्च ॥**

तत्र **श्रद्धा** द्विविधाधिष्ठाना – अभिसंप्रत्ययाकारा प्रसादाकारा च ॥ धर्म[8]युक्तिविचारणाधिष्ठाना पुद्गलानुभावाधिमुक्त्यधिष्ठाना च ॥

**छन्दोपि** चतुर्विधः । तद्यथा **प्राप्तये** [।] यथा-पीहैकत्यः उत्तरे विमोक्षस्पृहामुत्पादयति । विस्तरेण पूर्व्ववत् । **परिपृच्छार्थं ।** यथापीहैकत्यः स्पृहामुत्पादयति विस्तरेण पूर्व्ववत्परिपृच्छार्थं । आरामं गमनाय, विज्ञानां सब्रह्मचारिणां योगज्ञाना[9]मन्तिकमश्रुतस्य श्रवणाय, श्रुतस्य च पर्यवदानाय[।]-**संभारसमुदागमाच्छन्दः ।** यथापीहैकत्यः शीलसम्वरपारिशुद्धये, इन्द्रियं संवरपारिशुद्धये, भोजने मात्रज्ञतायां, जागरिकानुयोगे, संप्रजानद्विहारितायामुत्तरोत्तरां स्पृहामुत्पादयति ।
9A—8// //[1]**अनुयोगाच्छन्दः ।** या(यः) सातत्यप्रयोगतायां सत्कृत्यप्रयो[गता[1]]यां च मार्गभावनायां स्पृहामुत्पादयत्यभिलाषं कर्तुकामतामित्ययं चतुर्विधश्छन्दः । (इत्ययं चतुर्विधश्छन्दः[2]) यदुत प्राप्तये । परिपृच्छनार्थं । संभारसमुदागमाय । अनुयोगाय च ॥

तत्र **वीर्यमपि चतुर्विध**[।] तद्यथा **श्र[वणा[1]]य, चिन्तनार्थं, भावनार्थं । आवरणपरिशुद्धये च ।**

---

1. Letters lost by pin-hold.
2. A repetition, should be deleted.

**तत्र श्र[2]वणाय वीर्यं।** यदश्रुतं शृण्वतः। पर्यवदापयतः। चेतसो [अ]भ्युत्साहः। अविन्यस्त-प्रयोगता, एवं यथाश्रुतानां धर्माणामेकाकिनो रहोगत-स्यार्थं। चिन्तयतस्तुलयत उपपरीक्षमाणस्य। एवं प्रतिसंलयनप्रविष्टस्य कालेन कालं शमथविपश्यनां भावयत एवमहोरात्रानुयुक्तस्य चंक्रमनिषद्याभ्या[ं] [3] निवरणेभ्यश्चित्तं विशोधयतः। यश्चेतसोभ्युत्साहः। अविन्यस्तयागता(प्रयोगता) [।] एवं यथाश्रुतानां धर्माणामेकाकिनो रहोगतस्यार्थं चिन्तयत आलयदीर्घता तत्र।

**उपायोपि चतुर्विधस्तद्यथा शीलसम्वरमिन्द्रिय-संवरमधिपतिं कृत्वा सूपस्थितस्मृतिता। तथा चोप-स्थितस्मृतेरप्रमादश्चेतस आरक्षा। [4] कुशलानां धर्माणां निषेवणा।** तथा वा[ऽ]प्रमत्तस्याध्यात्मं चेतः-शमथयोगः। अधिप्रज्ञञ्च धर्मविपश्यना [।] स चायं योगश्चतुर्विधः। षोडशाकारो भवति। तत्र श्रद्धया प्राप्तव्यमर्थमधिपतिं संप्राप्नोति। प्राप्तिमभिसंप्रत्य-यात्कर्तुकामतामुत्पादयति। कुशलेषु धर्मेषु [।] स एवं कर्तुकामः। अहोरात्रानु[5]युक्तो विहरति। उत्साही। दृढपराक्रमः। तच्च वीर्यमुपादाय परिगृहीतमप्राप्तस्य प्राप्तये, अनधिगतस्याधिगमाय। असाक्षात्कृतस्य साक्षात्क्रियायै। सम्वर्त्तते। तस्मादिमे चत्वारो धर्मा योग इत्युच्यते॥

तत्र **मनसिकारः कतमः ।**[1] चत्वारो मनस्काराः कतमे चत्वारः । (संस्थापयतश्च धर्माः (धर्मान्) प्रविचिन्व[6]तः । यावन्मनस्कारं न प्राप्नोति । तावदस्य बलवाहनो मनस्कारो भवति । बलादवष्टभ्य तच्चित्तमेकाग्रतायामवस्थापयति । तेनोच्यते । बलवाहन इति । सच्छिद्रवाहनो मनस्कारः कतमः[2]) तद्यथा— **बलवाहनः**, **स[च्]छिद्रवाहनः**[3], अनाभोगवाहनश्च ।

तत्र **बलवाहनो मनस्कारः** कतमः । तद्यथा आदिकर्मिकस्याध्यात्ममे[7]व चित्तं स्थापयतः । संस्था-

---

1. cf. S. N., IV.93-7; Vsm., XIV.152 (=AS, III.254): किरिया कारो मनम्हि कारो मनसिकारो । पुरिममनतो विसदिसं मनं करोतीति मनसिकारो । स्वायं आरम्मणप्पटिपादको, वीथि पटिपादको, जवनपटिपादको ति तिप्पकारो ।; Buddhaghosa also differentiates the concepts of योनिसो० and अयोनिसो० which cause respectively the origination (uppāda) as well as the cessation and extinction of कामच्छन्द and other अकुशलधर्मs, SVA, pp. 58, 272-6; Asaṅga defines मनस्कार as चेतस आभोगः । आलम्बनचित्तधारणकर्मकः । Asm., p. 6; cp. Ada., p. 66 : चित्ताविस्मरणं मनस्कारः । —कतमो मिथ्यामनस्कारः । मार्गस्यास्मरणम् ।. Adv., p. 70 : चित्तस्याभोगो मनस्कारः पूर्वभूतादिसमन्वाहारस्वरूपः; A. K. B., II. 24 : मनस्कारश्चेतस आभोग इति । आलम्बने चेतस आवर्जनम् अवधारणमित्यर्थः । मनसः कारो मनस्कारः । मनो वा करोति । आवर्जयतीति मनस्कारः । मनस्कारश्चेतस आभोगः । आभुजनमाभोग आलम्बने येन चित्तमभिमुखीक्रियते । स पुनरालम्बने चित्तधारणकर्मा । चित्तधारणं पुनस्तत्रैवालम्बने पुनः पुनश्चित्तस्यावर्जनम् ।····
2. A repetition, may be deleted. This portion follows just hereafter (line 7).
3. MS. omits निश्छिद्रवाहनो, scribe's mistake.

पयतश्च । धर्मान् प्रविचिन्वतः । यावन्मनस्कारं न प्राप्नोति । तावदस्य बलवाहनो मनस्कारो भवति । बलादवष्टभ्य तच्चित्तमेकाग्रतायामवस्थापयति । तेनोच्यते बलवाहन इति ।

**स[च]छिद्रवाहनो मनस्कारः** कतमः । यो लब्धमनस्कारस्य च लौकिकेन मार्गेण गच्छतो लोकोत्तरेण वा(यो)लक्षण प्रति[8]संवेदी मनस्कारः । तथा हि समाधिस्तत्र चिन्तया व्यवथी(स्थी)यते । नैकान्तेन भावनाकारेण प्रवर्त्तते ।

तत्र **नि[श्]छिद्रवाहनो मनस्कारः ।** लक्षणप्रतिसंवेदिनो मनस्काराद्दूर्ध्वं यावत् । प्रयोगनिष्ठान्मनसिकारात्तथा**नाभोगवाहनो मनस्कारः ।** यः प्रयोगनिष्ठाफलो मनस्कारः ।।

अपरे चत्वारो मनस्काराः तद्यथा **आनुलोमिकः,**
9B—8// //[1]**प्रातिपक्षिकः, प्रसदनीयः, प्रत्यवेक्षणीयश्च** [।]

**तत्रानुलो[मिको[1]]मनस्कारः ।** येनालम्बनं विदूषयति । सम्यक्प्रयोगं चारभते । नो तु क्लेशं प्रजहाति ।।

तत्र **प्रातिपक्षिको** येन क्लेशं प्रजहाति ।

तत्र **प्रसदनीय** येन लीनं चित्तं प्रग्राहकैर्निमित्तैरभिप्रमोच(द)यति । सं[प्रहर्ष[2]]यति । प्रगृह्णाति ।

1. Letters damaged by pin-hold.
2. Letters lost by pin-hold.

तत्र प्रत्यवेक्षणीयो मनस्का[2]रः । तद्यथा **मीमा-ंसा (मांसा) मनस्कारः ।** यमधिपतिं कृत्वा प्रहीणा-प्रहीणतां क्लेशानां प्रत्यवेक्षते ।

तत्रालम्बनं मनसि कुर्व्वता कति **निमित्तानि** मनसि कर्त्तव्यानि भवन्ति । आह । चत्वारि । तद्यथा । **आलम्बननिमित्तं**[1] । **परिवर्त्त (र्ज) नीयं निमित्तं [।] निषेवणीयं च निमित्तं । तत्रालम्बन-निमित्तं** यत् । ज्ञेयवस्तुसभागं प्रतिबिम्बं । [3]प्रतिभासं(सः) ।।

तत्र **निदाननिमित्तं** तद्यथा समाधिसंभा-रोपचयः । अनुलोमिक उपदेशः । भावनासहगतः । तीव्र[च]छन्दः, संवेजनीयेषु धर्मेषु संवेगः । विक्षेपा-विक्षेपपरिज्ञा । अवधानं परतश्च । संघट्टा मनुस्य-(ष्य) कृतो वा, को (अ)मनुष्य कृतो वा, शब्द कृतो वा, व्यापादकृतो वा । तथा विपश्यनापूर्व्वंगमः । [4]अध्यात्मं चित्ताभिसंक्षेपः । उत्तप्ततराया विपश्य-नायाः उत्तरत्र निदाननिमित्तं, तथा शमथपूर्व्वंगमा विपश्यना, उत्तप्ततरस्य शमथस्योत्तरत्र निदाननिमित्तं ।

**तत्र परिवर्जनीयनिमित्तं चतुर्व्विधं । तद्यथा । लयनिमित्तं, औद्धत्यनिमित्तं, संगनिमित्तं, विक्षेप-निमित्तं च । तत्र लयनिमित्तं** येनालम्बननिमि[5]-त्तेन निदाननिमित्तेन चित्तं लीनत्वाय परैति ।

1. MS. omits here निदाननिमित्तं.

**तत्रौद्धत्यं** येनालम्बननिमित्तेन निदाननिमित्तेन चित्त-मुत्पद्यते । तत्र **संगनिमित्तं** येनालम्बननिमित्तेन, निदाननिमित्तेन चित्तमालम्बने रज्यते ।। संरज्यते । संक्लिश्यते । तत्र **विक्षेपनिमित्तं ।** येनालम्बन-निमित्तेन निदाननिमित्तेन चित्तम्बहिर्धा[6] विक्षिप्यते । तानि पुनर्निमित्तानि **यथा समाहितायां भूमौ** एभिर्मनस्कारैरालम्बनमधिमुच्यते ।

**कत्यधिमोक्षा भवन्ति ।**[1] आह [1] नवाधिमोक्षा-स्तद्यथा । **प्रभास्वरश्चाप्रभास्वरश्च । जडः, पटुः, परीत्तो, महद्गतः । अप्रमाणः । परिशुद्धः । अपरि-शुद्धश्चेति ।।**

---

1. cp. Vbh., pp. 212-36 : चित्तस्स अधिमोक्खो अधिमुच्चनता तदधि-मुत्तता···· M. N., III.89-90; for references, see Trench-ner, CPD, s.v. adhimokkha, pp. 135-6; cp. Vsm., XIV.151 : अधिमुच्चनं अधिमोक्खो । सो सन्निट्ठालक्खणो, असंसप्पनरसो, निच्छयपच्चुपट्ठानो, सन्निट्ठेय्यधम्मपदट्ठानो, आरम्मणे निच्चलभावेन इन्दखीलो विय दट्ठब्बो ।; cp. also, XX.118; cp. AS, III.254; SVA, p. 213 sq.; Poussin, AK, II, p. 154; Asm., p. 6 : अधिमोक्षः कतमः । निश्चिते वस्तुनि यथानिश्चयं धारणा । असंहार्यता-कर्मकः ।; Adv., p. 70 : चित्तस्य विषयेऽधिमुक्तिरधिमोक्षो रुचिद्वितीय-नामा चित्तस्य विषयाप्रतिसंकोचलक्षणः ।; cp. AKB, II.24 : अधि-मुक्तिस्तदालम्बनस्यावधारणम्; see, AKV, II.24, p. 42; Sthira-mati remarks : अधिमोक्षो निश्चिते वस्तुनि तथैवावधारणम् । निश्चितग्रहणमनिश्चितप्रतिषेधार्थम् । युक्तित आप्तोपदेशतो वा यद्वस्तु असन्दिग्धं तन्निश्चितं येनैवाकारेण तन्निश्चितमनित्यदुःखाद्याकारेण तेनैवाकारेण तस्य वस्तुनश्चेतस्यभिनिवेशमेतन्नान्यथेत्यवधारणमित्यधिमोक्षः । अधिमुक्तिप्रधानो हि स्वसिद्धान्तात् परप्रवादिभिरपहर्तुं न शक्यते । TVbh., 10, p. 31; cp. A. A. A., p. 448 : अधिमुक्तिर्निश्चयावधारणम् ।

**तत्र प्रभास्वरोधिमोक्षो** य आलोकनिमित्ते सूद्गृ[7]हीते आलोकसहगतः [।]

**तत्र[ऽ]प्रभास्वरोधिमोक्षः।** तद्यथा आलोकनिमित्ते सूद्गृहीते अन्धकारसहगतः ।

**तत्र जडो[ऽ]धिमोक्षः।** यो मृद्विन्द्रियसन्तानपतितः ।

**तत्र पटुरधिमोक्षो** यस्तीक्ष्णेन्द्रियसन्तानपतितः ।

**तत्र परीत्तोधिमोक्षः।** यः परीत्तश्रद्धाछ(च्छ)न्दसमाधिः परीत्तालम्बनश्च । इति म[8]नस्कारपरीत्ततया चालम्बनपरीत्ततया च परीत्तोधिमोक्षः ॥

**तत्र महद्गतोधिमोक्षः।** तत्र यो महद्गतः श्रद्धाच्छन्दसहगतो महद्गतम्वा आलम्बनमधिमुच्यते । योधिमोक्ष इति । मनस्कारमहद्गत[त] या चालम्बनमहद्गततया महद्गतोधिमोक्षः ।

9A—9// **तत्राप्रमाणोधिमोक्षः।** अप्रमा//[1]ण[:] श्रद्धाछ(च्छ)न्दसहगतः। अनन्तम्वा अपर्यन्त[मालम्ब[1]]नमधिमुच्यते । योधिमोक्ष इति । मनस्काराप्रमाणतया चालम्बनप्रमाणतया चाप्रमाणाधिमोक्षः ।

**तत्र परिशुद्धोऽधिमोक्षः** यः प्रभावितः, परिनिष्पन्नः पर्यवसानगतः ।

**अपरिशुद्धो** वा पुनर्यो न सुभावितो, न

---

1. Letters lost by pin-hold.

परिनिष्पन्नो न पर्यवसानगत: ।[1]

तत्र[2]**कति योगस्य योगकरणीयानि ।** आह । चत्वारि । कतमानि चत्वारि । तद्यथा । **आश्रयनिरोधः । आश्रयपरिवर्त्तः ।**[2] **आलम्बनपरिज्ञानं । आलम्बनाभिरतिश्च ।**

**तत्रश्राश्रयनिरोधः** प्रयोगमनसिकारभावनानुयुक्तस्य यो दौष्ठुल्यसहगत आश्रय: । सोनुपूर्व्वेण निरुध्यते । प्रस्रब्धिसहगतश्चाश्रय: परिवर्त्त[3]ते । **अयमाश्रयनिरोधोयमाश्रय परिवर्तः । योगकरणीयं ।**

**तत्रालम्बनपरिज्ञानमालम्बनाभिरतिश्च ।** अस्त्यालम्बनपरिज्ञानमालम्बनाभिरति: । आश्रयनिरोधपरिवर्त्तपूर्व्वंगमं । यदा चालम्बनपरिज्ञानमालम्बनाभिरतिमधिपतिं कृत्वा आश्रयो निरुध्यते । परिवर्त्तते च । अस्त्यालम्बनपरि[4]ज्ञानमालम्बनाभिरति: । आश्रयविशुद्धिपूर्व्वंगम: । आश्रयविशुद्धिमधिपतिं

1. cp. Bodhi, p. 66 : अधिमुक्त्यधिष्ठानम्-अष्टविधम् ।
2. cp. MSA, XIX.54 :

अख्यानख्यानता ज्ञेया असदर्थसदर्थयो: ।
आश्रयस्य परावृत्तिर्मोक्षोऽसौ कामचारत: ॥

असदर्थस्य निमित्तस्याख्यानता सदर्थस्य तथतायाः ख्यातता आश्रयपरावृत्तिर्वेदितव्या । तया हि तदख्यानं ख्यानं च । सैव च मोक्षो वेदितव्य: । किं कारणं । कामचारत: । तदा हि स्वतन्त्रो भवति स्वचित्तवशवर्त्ती प्रकृत्यैव निमित्तासमुदाचारात् ॥; cp. XX-XXI.47, p. 185; cp. p. 186 : आश्रयपरिशुद्धिरात्मभावस्यादानस्थानत्यागवशितया ।; on आश्रय *vide*, Sino-Indian Studies, I; EB, s.v. āśraya.

कृत्वा सुविशुद्धमालम्बनज्ञानं। कार्यपरिनिष्पत्तिकाले प्रवर्तते। अभिरतिश्च [।] तेनोच्यते चत्वारि योगस्य करणीयानीति ॥

**तत्र कति योगाचाराः।** आह त्रयस्तद्यथा। **आदिकर्मिकः, कृतपरिचयः। अतिक्रान्त[5]मनस्कारश्च ॥**

**तत्रादिकर्मिको योगाचारः।** मनस्कारादिकर्मिकः। क्लेशविशुद्ध्यादिकर्मिकश्च ॥

तत्र **मनस्कारादिकर्मिकः।** तत्र प्रथमकर्मिक एकाग्रतायां यावन्मनस्कारं न प्राप्नोति। चित्तैकाग्रतां न स्पृशति।

**तत्र क्लेशविशुद्ध्यादिकर्मिकः।** अधिगतेपि मनस्कारे क्लेशस्य चित्तं विमोचयितुकामस्य यल्ल[6]-क्षणप्रतिसंवेदिनो मनस्कारस्यारम्भः प्रतिग्रहश्चाभ्यासः। अयं क्लेशविशुद्ध्यादिकर्मिकः।

**तत्र कृतपरिचयः कतमः।** लक्षणप्रतिसंवेदिनं मनस्कारं स्थापयित्वा तदन्येषु षट्सु मनस्कारेषु प्रयोगनिष्ठापन्नेषु कृतपरिचयो भवति।

**तत्रातिक्रान्तमनस्काराः(रः)**प्रयोगनिष्ठाफलमन[7]स्कारे वेदितव्यः। अतिक्रान्तोऽसौ भवति। प्रमो(यो)गभावनामनस्कारं। स्थितो भवति। भावनाफले[।]तस्मादतिक्रान्तमनस्कार इत्युच्यते।

अपि च कुशलं धर्म[च्]छन्दमुपादाय। प्रयुज्य-

मानो यावन्निर्वेधभागीयानि कुशलमूलानि नोत्पादयति। **तावदादिकर्मिको** भवति। यदा पुर्नानिर्वेधभागी[8]-यान्युत्पादयति। तद्यथा ऊष्मगतानि। मूर्धानः (मूर्ध्नः), सत्यानुलोमाः। क्षान्तयो(न्तीः) लौकिकान-ग्रधर्मान्। तदा **कृतपरिचयो** भवति। यदा पुनः सम्यक्त्वं न्याममवतरति। सत्यान्यभिसमागच्छति। अपरप्रत्ययो भवत्यनन्यनेयः। शास्तुः शासने **तदाति-**
9B—9// **क्रान्तमनस्कारो** भवति। परप्रत्ययं मनस्कार//[1]-मतिक्रम्यापरप्रत्यये स्थितः। तस्मादतिक्रान्तमनस्कार इत्युच्यते॥

**तत्र योगभावना कतमा।**[1] आह। द्विविधा। **संज्ञाभावना बोधिपक्ष्या**[2] **भावना** च।

तत्र **संज्ञाभावना** कतमा।[3] तद्यथा लौकिकमार्ग-

1. Asaṅga mentions four yogas, viz. kāma, bhava, dṛṣṭi and avidyā yoga, see Asm., p. 47 : योगश्चतुर्विधः। कामयोगः भवयोगः दृष्टियोगः अविद्यायोगश्च। विसंयोगपरिपन्थकरो योगार्थः। विशुद्धि विपर्ययतः। ते पुनर्यथायोगमेषणात्रयभावना।, the three eṣaṇās are काम० भव० and ब्रह्मचर्य० (ibid, loc. cit.); this classification of yoga is found nowhere else in Buddhist literature.
2. Asaṅga defines भावना as शमथ प्रग्रहोपेक्षानिमित्तेषु सम्यगुपलक्षणा-पूर्विका शमथविपश्यनोपेक्षाभ्यासरतिः, (Bodhi, p. 59); भावना.... समासतश्चतुर्विधा वेदितव्या। शमथो विपश्यना शमथविपश्यनाभ्यासः शमथवि-पश्यनाभिरतिश्च (ibid, p. 77); cp. भावना चित्तवासनात्, A. K., IV. 123; see also, AKV; Vsm., as quoted in BDD, p. 69, n. 1; Asm., p. 75.
3. In the Pāli canons, seven saṁjñās, viz. असुभ०, मरण०, आहारे पटिक्कूल०, सब्बलोके अनभिरति, अनिच्च०, दुक्ख०, अनत्त० have

*(contd. on p. 286)*

प्रयुक्तः[1] । सर्व्वास्वधरिमासु भूमिष्वादीनवसंज्ञा[ं]-भावयति ।[2] [प्रहा[3]]णाय वा पुनः प्रयुक्तः । प्रहाणधातौ, विरागधातौ, [2] निरोधधातौ, शान्तदर्शी प्रहाणसंज्ञां, विरागसंज्ञां, निरोधसंज्ञाञ्च भावयति ।[4] शमथाय[5] वा पुनः प्रयुक्तः । ऊर्ध्वमधः संज्ञां शमथ-

---

(contd. from p. 285)

been enumerated, see, A. N., III.268; at some places, this numbering goes to ten, adding पहान०, विराग० and निरोध० to this list, ibid, IV.183 (पठमसञ्ञासुत्त); Asaṅga mentions above (pp. 182-3) these saṁjñās आदीनव०, प्रहाण०, विराग०, निरोध०, शमथ०, विपश्यना०, अशुचि(भ), and आलोकसंज्ञा ।

1. On लौकिकमार्ग, see, *supra*, pp. 35-6 and notes added thereto; AKV, VI.45-d, 46.
2. On आदीनव, see, Vsm., XXI.35-42, XXII.120; but Asaṅga here does not intend to say what is meant by आदीनवञाण (Vsm., loc. cit.), but he simply points out towards the bhāvanā of आदीनवसंज्ञा (i.e.) दोषसंज्ञा, *vide*, Śabdakalpadruma, I, s.v. आदीनव; PTSD, s.v. ibid.
3. Letters lost by pin-hold.
4. See, *supra*, p. 235 sq.; Adv., p. 371 : ए एते त्रयो धातव एव तिस्रः संज्ञाः प्रहाणविरागनिरोधसंज्ञाः; see also, pp. 371-2.
5. cf. समथो चित्तेकग्गता (ANA, Bālavagga, Sutta 3); पञ्चनीवरणानं समनट्ठेन समथं (ibid; see BDD, p. 41); cp. Adv., p. 404 : शमथः खलु माज्ञा कुशला चित्तैकाग्रता ध्यानमित्युच्यते; Bodhi, p. 77 : तत्र शमथः कतमः । यथापि तद्वोधिसत्त्वः अष्टाकारायाश्चिन्तायाः सुसमाप्तत्वान्निरभिलाप्ये वस्तुमात्रेऽर्थमात्रे आलम्बने चित्तमुपनिबध्य सर्वप्रपञ्चापगतेन सर्वचित्तपरिप्लवापगतेन संज्ञामनसिकारेण सर्वा-

(contd. on p. 287)

पक्ष्यां भावयति । विपश्यनायां[1] प्रयुक्तः । पश्चात्पुनः संज्ञां विपश्यनापक्ष्यां भावयति । विपश्यनायां प्रयुक्तः । पश्चात्पुर इममेव कायं यथास्थितं यथाप्रणिहितं ऊर्ध्वं पादतलादधः केश[3]मस्तकात्पूर्णं नानाविधस्याशुचेः प्रत्यवेक्षते । सन्त्यस्मिन्काये केशा रोमाणीति[2] पूर्व्ववत् । तत्र पश्चात्पुनः । संज्ञी तथा तदेकत्येन प्रत्यवेक्षणानिमित्तमेव । साधु च, सुष्ठु च, सूद्गृहीतं भवति । सुमनसीकृतं, सूत्कृष्टं । सुप्रतिविद्धं । तद्यथा स्थितो निषण्णं प्रत्यवेक्षते । निषण्णो वा निपन्नं । पुरतो वा गच्छन्तं, पृष्ठ[4]तो गच्छन्प्रत्यवेक्षते । सा खल्वेषा त्रैयध्विकानां संस्काराणां प्रतीत्यसमुत्पन्नानां विपश्यनाकारा प्रत्यवेक्षा परिदीपिता ।। तत्र यत्तावदाह—स्थितो निषण्णं

---

*(contd. from p. 286)*

लम्बनान्यधिमुच्यमानः अध्यात्मसमाधिनिमित्तेषु चित्तं संस्थापयति अवस्थापयति विस्तरेण यावदेकोतीकरोति समाधत्ते । अयमुच्यते शमथः ।; for the four kinds of शमथ see, ibid, p. 177; see also, Asm., p. 75; Vsm., p. 499.

1. विपस्सना ति सङ्खारपरिग्गाहकञाणं ANA, loc. cit.; सङ्खारे अनिच्चतो दुक्खतो अनत्ततो विपस्सति, BDD, p. 39, f.n.; see, Vsm., p. 499; Asm., p. 75; Bodhi, p. 77 : विपश्यना कतमा । तेनैव पुनः शमथ-परिभावितेन मनस्कारेण यथाचिन्तितानां धर्माणां निमित्तमनसिक्रिया विचयः प्रविचयो धर्मप्रविचयः विस्तरेण यावत्पाण्डित्यं प्रज्ञाचारः । इयमुच्यते विपश्यना, see also p. 177.
2. cp. Vsm., p. 163 sq.; cp. अशुभसंज्ञा Adv., 371-2; Vsm., III.105, VI.1; p. 120 sq.

प्रत्यवेक्षते । अनेन वर्तमानेन मनस्कारेण अनागतज्ञेयं प्रत्यवेक्षते । वर्तमानापि मनस्कारावस्था उत्पन्ना स्थितेत्युच्यते । अनागता पुनः ज्ञेयावस्था । [5]अनुत्पन्नत्वादुत्पादाभिमुखत्वाच्च निषण्णेत्युच्यते । यत्पुनराह । निषण्णो वा निपन्नं प्रत्यवेक्षत इत्यनेन प्रत्युत्पन्नेन मनस्कारेणातीतस्य ज्ञेयस्य प्रत्यवेक्षणा परिदीपिता । प्रत्युत्पन्ना हि मनस्कारावस्था । निरोधाभिमुखा निषण्णेत्युच्यते । अतीता पुनः निरुद्धत्वाज्ज्ञेयावस्था निपन्नेत्युच्यते । [6]यत्पुनराह । पुरतो वा गच्छन्तं प्रत्यवेक्षत इत्यनेन प्रत्युत्पन्नेन मनस्कारेण । अनन्तरनिरुद्धस्य मनस्कारस्य प्रत्यवेक्षा परिदीपिता । तत्र य उत्पन्नोत्पन्नो मनमिकारो[अ]नन्तरनिरुद्धः स पुरतो यायी [।] तत्र अनन्तरोत्पन्नः । अनन्तरोत्पन्नो मनस्कारः । नवनवो[ऽ]नन्तरनिरुद्धस्यान[7]न्तरनिरुद्धस्य ग्राहकः । स पृष्ठतो यायी । तत्र शमथं च विपश्यनां च भावयन्स्तदुभयपक्ष्यामालोकसंज्ञां भावयति । इयं संज्ञाभावना ।

**तत्र बोधिपक्ष्यभावना कतमा ।**[1] यः षट्(सप्त)-

---

1. The thirty-seven bodhipākṣika-dharmas find mention in Milinda, p. 232 : देसेन्ता च भन्ते नागसेन सब्बेपि तथागता सत्तातिसबोधिपक्खियधम्मे देसेन्ति····; A. N., III.249 : भावनं अनुयुत्तस्स····नेव चित्तं विमुच्चति । तं किस्स हेतु ? अभावितत्ता तिस्स

*(contd. on p. 289)*

त्रिंशतां बोधिपक्ष्याणां धर्माणामभ्यासः। परिचयः। आसेवना बहुलीकार इयमुच्यते बोधिपक्ष्यभावना। तद्यथा **चतुर्णां** [8] **स्मृत्युपस्थानानां, चतुर्णां**

---

*(contd. from p. 288)*

वचनीयं। किस्स अभावितत्ता ? चतुन्नं सतिपट्ठानानं चतुन्नं सम्मप्पधानानं चतुन्नं इद्धिपादानं, पञ्चन्नं इन्द्रियानं, पञ्चन्नं बलानं, सत्तन्नं बोज्झङ्गानं, अरियस्स अट्ठङ्गिकस्स मग्गस्स।···· A. N., I.39 sq.; Milinda, p. 23; Vsm., XXII.33; SDP, p. 258; MSA, pp. 159-77; ASPP, p. 97; LV, p. 303; Mtu., II.290; KP., p. 127 (BD, p. 80); DBS., pp. 19 sq., 27 sq., 34; Da., 217; Avs.; 32, 35, 39; Bodhi, p. 1, 29, 176 sq., 232 sq.; Dh. Saṁ., 43, MSS, I, pp. 331-2 (also see 44-50); cp. AVS, XIII-XIX, MSS, I.321-3; Asm., pp. 71-4; AK, VI.67; Adv., pp. 356-65; Ada., pp. 113-7; Vbh., p. 300; D.N., III.76 mentions only the seven bodyaṅgas as Bodhipakkhiya dhaṁmas, for which see SVA, p. 349; cp. S. N., IV.197; NP; Ads., VII.25-35; Asaṅga further explains the bodhipakṣīya-dharmas as बोध्यनुकूलाः, Bodhi, p. 29.1; cp. Adv., p. 358; see also, Hardayal, BDBSL, p. 81; thus Bodhipakṣīya dharmas are 'the principles conducive to enlightenment' (ibid, loc. cit.); Bodhi is the knowledge of the extinction and further non-origination of the phenomenal afflictions and impurities, cp. Aa., V.18; Aaa., p. 521 : क्षयानुत्पादयोर्ज्ञाने मलानां बोधिरुच्यते।; also, Adv., p. 357, Vs. 441 :

क्षयज्ञानं मता बोधिस्तथानुत्पादधीरपि।
दश चैकश्च तत्पक्ष्याः सप्तत्रिंशत्तु नामतः॥

see also, AK., VI.67 sq.; AKB, VII.7; Adv., p. 357, f.n. 3.

**सम्यक्प्रहाणानां**[1], **चतुर्णां ऋद्धिपादानां । पञ्चाना-मिन्द्रियाणां, पंचानां बलानां, सप्तानां बोध्यंगानामा-मार्याष्टाङ्गस्य मार्गस्य** [।]

**कायस्मृत्युपस्थानस्य वेदनाचित्तधर्मस्मृत्युपस्था-**
10A—1// **नस्य ।** अनुत्पन्नानां//[1]धर्मणां पापकानामकुशलानां धर्मणामनुत्पादाय[च]छन्दं जनयति । व्यायच्छते, वीर्यमारभते । चित्तं प्रगृह्णाति । प्रदधाति । सम्यक्प्रहाणस्य (ण्णाय) । उत्पन्नानां पापकानाम-कुशलानां धर्मणां प्रहाणाय । अनुत्पन्नानां कुशलानां धर्मणामुत्पादाय । उत्पन्नानां कुशलानां धर्मणां स्थितये । असंमोषाय भावनापरिपूरये[2](य यो[2]) भाववृद्धिविपुलतायै छन्दं व्यायच्छते । वीर्यमारभते । चित्तं प्रगृह्णाति, प्रदधातीति सम्यक्प्रहाणस्य छन्द-समाधिप्रहाणसंस्कारसमन्वागतस्य (।) ऋद्धिपादस्य, श्रद्धावीर्यचित्तमीमान्सा ( मांसा )समाधिप्रहाणसंस्कार-समन्वागतस्य ऋद्धिपादस्य, वीर्यचित्तमीमान्सा (मांसा)-समाधिप्रहाणसंस्कारसमन्वाग[3]तस्य ऋद्धिपादस्य,

---

1. Hardayal aptly remarks : "It is clear that prahāṇa is a wrongly saṁskritized form. The usual Pāli word is padhāna and the correct sanskrit rendering would be pradhāna derived from the root 'dhā' " ...., ibid, p. 102; see also p. 103; Saund, Ka., XVII.24, Mtu., III.120.
2. This may be deleted.

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञेन्द्रियश्च श्रद्धास्मृतिसमाधिप्रज्ञाबलानां स्मृतिसंबोध्यंगस्य [।] सम्यग्दृष्टेः। सम्यक्संकल्पस्य, सम्यग्वाक्कर्मान्ताजीवानां, सम्यग्व्यायामस्य, सम्यक्स्मृतेः सम्यक्समाधेश्च ॥

**तत्र**[1] **कतमः कायः**[2]**। कतमा काये कायानुपश्यना [।] कतमा (।) स्मृतिः [।] कतमा[नि] (।) स्मृतेरुपस्थाना[4]नि [।] आह। कायः पञ्चत्रिंशद्विधः।** तद्यथा आध्यात्मिको, बाह्यश्च।[3] इन्द्रियसंगृहीतः।

---

1. See D. N., III.173 : इधावुसो, भिक्खु काये कायानुपस्सी विहरति आतापी सम्पजानो सतिमा, विनेय्य लोके अभिज्झादोमनस्सं। वेदनासु वेदनानुपस्सी····चित्ते चित्तानुपस्सी····धम्मे धम्मानुपस्सी विहरति····; see also, pp. 109, 213; Vbh., pp. 238-54; SVA, p. 217 sq.; AK, and AKV, VI.14 sq.; Asm., p. 71; BDBSL, p. 83 sq.; Abdv., p. 315 sq. : चतुष्टवमपि चतुर्विपर्यासप्रतिपक्षत्वात्। अशुचौ शुचिसंज्ञाविपर्यासप्रतिपक्षो हि कायपरीक्षा। दुःखे सुखसंज्ञाविपर्यासप्रतिपक्षो वेदनापरीक्षा। अनित्ये नित्यसंज्ञाविपर्यासश्चित्तपरीक्षा, चित्तस्य लघुपरिवर्तित्वात्। अनात्मन्यात्मसंज्ञाविपर्यासप्रतिपक्षो धर्मपरीक्षा। धर्मस्मृत्युपस्थानस्य वैचित्र्यादेकात्मसंज्ञाविपर्यासो निवर्तते।; cp. Ada., p. 113 : यस्माच्चतुरो विपर्यासान् भिन्दन्ति तस्माच्चत्वार्येवोच्यन्ते स्मृत्युपस्थानानि। न न्यूनाधिकानि।; see also, SVA, p. 218; AK, VI.15-6 and AKV, p. 529 sq.; Adv., pp. 317-8 (extract from AKB); see M. N., satipaṭṭhānasutta.
2. See Vsm., XIV.41.
3. अध्यात्मं कायः कतमः। यान्यस्मिन् काये आध्यात्मिकानि रूपीण्यायतनानि। बहिर्धा कायः कतमः। बहिर्धा रूपीण्यायतानि। अध्यात्मबहिर्धा कायः कतमः। आध्यात्मिकायतनसंबद्धानि बाह्यान्यायतनानि। इन्द्रियाधिष्ठानानि पारसान्तानिकानि चाध्यात्मिकानि रूपीण्यायतनानि। Asm., pp. 71-2; see also, SVA, pp. 224-6 sq.

अनिन्द्रियसंगृहीतश्च । सत्त्वसंख्याता (तो) [ऽ]सत्त्वसंख्याता (त) श्च । दौष्ठुल्यसहगतः, प्रश्रब्धिसहगतश्च । भूतकायः, भौतिककायश्च । नामकायो, रूपकायश्च । नारकस्तैर्यग्योनिकः । पैतृविषयिकः । मानुष्यो, दिव्यश्च । सविज्ञा[5]नकः । अविज्ञानकं (को) वा । अन्तःकायो, बहिःकायश्च [।] विपरिणतो[अ]विपरिणतश्च ।। स्त्रीकायः, पुरुषकायः, षण्ड (ढ) ककायश्च । मित्रकायः, अमित्रकायः । उदासीनकायश्च । हीनकायो, मध्यकायः, प्रणीतकायश्च, दह्लकायः, यून (युव) कायो, वृद्धकायश्च । अयं तावत्कायश्च प्रभेदः ।

**तत्रानुपश्यना त्रिविधा । या का[6]यमधिपतिं कृत्वा—श्रुतमयी वा प्रज्ञाभावनामयी वा**[1] [।] यया प्रज्ञया सर्वकायं सर्व्वाकारं सम्यगेवोपपरीक्षते । संतीरयत्यनुप्रविशति । अनुवुप्यते ।

तत्र स्मृतिपदस्य कायमधिपतिं कृत्वा (।।) ये धर्मा उद्गृहीतास्तेषामेव च धर्माणां योर्थः (।) चिन्तितो, ये

1. cp. AK. and AKB, VI.16, Adv., pp. 317-8, f.n. 3; Ada., p. 113 (XIV.2) : नित्यं स्मृतिरक्षिणी प्रज्ञोच्यते स्मृत्युपस्थानं । त्रिधा कायस्मृतौ भाविता प्रज्ञोच्यते कायस्मृत्युपस्थानं । काये कायानुपश्यना····या विकल्पप्रतिबिम्बकायेन प्रकृतिबिम्बकायस्यस मतानुपश्यना ।, Asm., p. 72; see also SVA, p. 224 sq.; see also Ada., XIV.4, p. 113, also f.n. to p. 113; Vsmt., XXII.39; Vsm., p. 483, cp. also, pp. 169-75; XXII.34; on smṛti, see *supra*, pp. 36-7.

च भावनया साक्षात्कृता[:]। तत्र व्यंजने, चार्थे च, सा[7]क्षात्क्रियायां च यश्चेतसः असंमोषः सूद्‌गृहीता वा मे ते एते धर्मा न वेति ।। सूपलक्षिता वा तत्र तत्र प्रज्ञया न वेति । सुसंस्पर्शिता[:](सुसंस्पृष्टाः) तत्र तत्र विमुक्त्या न वेति रुपस्थिता[1] भवतीदं स्मृते-रुपस्थानं । अपि च स्मृत्या रक्षायै स्मृतेरुपस्थानं विषयासंक्लेशायालम्बनोपनिबद्धाय (निबन्धनाय) च । तत्र स्मृत्या रक्षा **यथोक्तं[2] पूर्व्वं**[8]**मेवारक्षितस्मृति-र्भवति । निपकस्मृतिरिति । तत्र विषयासंक्लेशाय । यथोक्तं स्मृत्या रक्षितमानसः । समावस्थाचारको, न निमित्तग्राही । नानुव्यंजनग्राही । यावद्विस्तरेण**
10B—1// **रक्षति । मन इन्द्रियं**//[1]**मन इन्द्रियेण सम्वरमा-पद्यते ।** तत्रालम्बनोपनिबन्धाय । यथोक्तं चतुर्विधे आलम्बने स्मृतिमुपनिबध्नतः[3] । तद्यथा व्याप्या-लम्बने, चरितविशोधने, कौशल्यालम्बने, क्लेशविशो-धने वा एभिस्त्रिभिराकारैर्या सूपस्थितस्मृतिता इदमुच्यते स्मृतेरुपस्थानं ।।

तत्र वेदना[4] कतमा [।] तद्यथा सुखा, दुःखा,

---

1. स्मृति seems to have been omitted in the MS.
2. See Yogasthāna I, pp. 37 sq., 63 sq.; ŚS., pp. 67-8.
3. See *supra*, p. 193 sq.; Asm., pp. 80-1.
4. cp. Vsm., XVII.48 : वेदयतीति वेदना, M. N., I.361 : वेदेति वेदेतीति खो, आवुसो, तस्मा वेदना, ति वुच्चति । कि च वेदेति ? सुखं पि वेदेति,

*(contd. on p. 294)*

अदुःखासुखा[2]च वेदना। तत्र सुखापि कायिकी। दुःखाप्यदुःखासुखापि [।] यथा कायिकी। एवं चैतसिकी। सुखापि सामिषा, दुःखाप्यदुःखासुखापि। एवं निरामिषापि, एवं गर्ध(वा)श्रिते(ता), नैष्क्रम्याश्रिता वेदना, सुखापि दुःखाप्यदुःखाप्यदुःखासुखापि। सैषा एकविंशतिविधा वेदना भवति। नवविधा वा॥

**तत्र चित्तं कतमत्।** [3] तद्यथा—सरागं चित्तं, सद्वेषं, विगतद्वेषं, समोहं, विगतमोहं, संक्षिप्तं, विक्षिप्तं, लीनं, प्रगृहीतं। उद्धतमनुद्धतं, व्युपशान्तमव्युपशान्तं। समाहितमसमाहितं, सुभावितमसुभावितं। सुविमुक्तं चित्तमसुविमुक्तं चित्तं। तदेतदभिसमस्य विंशतिविधं चित्तं भवति।[1]

**तत्र धर्माः कतमे** [।] रागो, राग[4]विनयश्च।

---

*(contd. from p. 293)*

दुक्खं पि वेदेति, अदुक्खमसुखं पि वेदेति, वेदेति वेदेती ति खो, आवुसो, तस्मा वेदना ति वुच्चती ति। cp. Vsm., XIV.125-8; Buddhaghosa enumerates eighty-nine kinds of vedanā, ibid, pp. 399-400; cp. SVA, pp. 181-2; for the description of वेदना and the kinds thereof mentioned above, see SVA, pp. 266-70; Asaṅga defines the three kinds (अध्यात्मं, बहिर्धा and अध्यात्मबहिर्धा) of वेदना as 'अध्यात्मं वेदना कतमा। अध्यात्मं कायमुपादायोत्पन्ना वेदना। बहिर्धा वेदना····बहिर्धा कायमुपादायोत्पन्ना वेदना। अध्यात्मबहिर्धावेदना····अध्यात्मबहिर्धाकायमुपादायोत्पन्ना वेदना।', Asm., p. 72.

1. See SVA, p. 271; Ads., I; Vsm., pp. 284-5, XX.31 (89 kinds of citta).

द्वेषो, द्वेषविनयश्च । मोहो मोहविनयश्च । संक्षेपो, विक्षेपः । लयः, प्रग्रह, औद्धत्यमनौद्धत्यं । व्युपशमः । अव्युपशमस्सुसमाहि[त[1]]ता, न सुसमाहितता । सुभावितमार्गता, न सुभावितमार्गता । सुभावितमुक्तता, न सुभावितमुक्तता च । इतीमे कृष्णशुक्ल-[पक्ष]व्यवस्थिता विंशतिधर्मा वेदितव्याः[2] । [5]-संक्लेशव्यवदानपक्ष्ये (क्ष्याः) ।

तत्र **सुखावेदना**[3] यत्सुखवेदनीयं स्पर्शं प्रतीत्योत्पद्यते [।] सातं[4], वेदितं, वेदनागतं । सा पुनर्या पञ्चविज्ञानसंप्रयुक्ता । सा कायिकी । या मनोविज्ञानसंप्रयुक्ता सा चैतसिकी[5] । यथा सुखवेदनीयमेवं

1. MS omits this, added by us.
2. cp. SVA, p. 272 sq.
3. cp. SAS, MSS, I.103 : स्पर्शानुभवो वेदना, तिस्रो वेदनाः । सुखा दुःखा अदुःखासुखा च । प्रतीत्यसमुत्पादादिविभङ्गनिर्देशसूत्रम् ibid, p. 118; Ms, ibid, p. 112; यज्जातीयः स्पर्शो भवति तज्जतीया वेदना प्रवर्त्तते ।; cp. also p. 104; cp. Tvbh., p. 24 : वेदना अनुभवस्वभावा । सा पुनर्विषयस्याह्लादक-परितापक-तदुभयाकारविविक्तस्वरूपसाक्षात्करणभेदात् त्रिधा भवति । सुखा दुःखा अदुःखासुखा च ।; cp. AK with vyākhyā, II.7-8, p. 9 sq.; see also, III.32.
4. cp. K. N., IV, part I, p. 26; 'असाता' वेदना has been explained as उपघातिका, AKV, II, p. 10; cp. RAK, II.7-8 : सातं मनोऽनुकूलम्, असातं मनः प्रतिकूलम् (p. 23).
5. cp. AK., III.32 :

   तज्जाः षड्वेदनाः पञ्च कायिकी चैतसी परा ।
   पुनश्चाष्टादशविधा सा मनोपविचारतः ॥

   see, AKV, III, p. 63 sq., cp. also, pp. 62.20.

दुःखवेदनीयमदुःखासुखवेदनीयं स्पर्शं प्रतीत्योत्पद्यते असातं, नैव[6]सातं नासातं वेदितं [विगतराग[1]]। वेदनागतमिदमुच्यते दुःखा अदुःखासुखा वेदना। सा पुनर्या पञ्चविज्ञानकायसंप्रयुक्ता। सा कायिकी। या मनोविज्ञानसंप्रयुक्ता। **सा चैतसिकी।** या निर्व्वाणानुकूला[सा[2]]नैर्व्वेधिकी। अत्यन्तनिष्ठतायै अत्यन्तविमलतायै। अत्यन्तब्रह्मचर्यपर्यवसानायै(य?)। सम्वर्त्तते। **सा निरा[7]मिषा॥** या पुनर्धातुपतिता, भवपतिता सा **सामिषा**[1] [।] या पुन(ना)रूपारूप्य[3] प्रतिसंयुक्ता, वैराग्यानुकूला वा, सा **नैष्क्रम्याश्रिता।** या पुनः कायप्रतिसंयुक्ता, न च वैराग्यानुकूला, सा **गर्धाश्रिता॥**[4]

**तत्र सरागं चित्तं।** यद्रंजनीये वस्तुनि रागपर्यवस्थितं [।]

---

1. A separate hand adds this.
2. MS. omits this.
3. May also be पुनररूपारूप्य० ?
4. The three निरामिसा वेदनाs have been defined by Buddhaghosa as : निरामिसा सुखा नाम छ नेक्खम्मनिस्सितसोमनस्स वेदना,· · · ·दुक्खा नाम छ नेक्खम्मनिस्सितदोमनस्सवेदना,· · · ·अदुक्खमसुखा नाम छ नेक्खम्मनिस्सितउपेक्खा वेदना। SVA, p. 270; Buddhaghosa defines the three सामिसावेदनाs as 'सामिसा सुखा नाम पञ्चकामगुणामिसनिस्सिता छ गेहसितसोमनस्सवेदना,· · · ·दुक्खा नाम छ गेहसितदोमनस्सवेदना,· · · · · ·अदुक्खमसुखा नाम छ गेहसितउपेक्खावेदना। ibid, loc. cit.; see, M. N., II.196.

**विगतरागं** [8] यद्रागपर्यवस्थानापगतं [।]

**सद्वेषे(षं)** य[द्]द्वेषणीये वस्तुनि द्वेषपर्यवस्थितं ।

**विगतद्वेषं** यद्द्वेषपर्यवस्थानापगतं ।

**तत्र सम्मो(मो)हं** । यन्मोहनीये वस्तुनि [......[1].]

तान्येतानि षट्चित्तानि चारसहगतानि वेदितव्या-

10A—2// //[1]नि । तत्र त्रीणि संक्लेशपक्ष्याणि । त्रीणि संक्लेशप्रातिपक्षिकाणि ।

**तत्र संक्षिप्तचित्तं** यच्छमथाकारेणाध्यात्ममात्मनोपनिबद्धं ।

**विक्षिप्तं** । यद्बहिर्धा पञ्चसु कामगुणेष्वनुविसृतं ।

**तत्र लीनं** चित्तं । यत्स्त्यानमिद्धसहगतं, **प्रग्रहीतं** यत् प्रसदनीयेनालम्बनेन संप्रतिष्ठितं [।]

**उद्धतं चित्तं** यदति संप्रग्रहा[2]दौद्धत्यपर्यवस्थित-**मनुबद्धचित्तं** यत्प्रग्रहकाले चाभिसंक्षेपकाले चोपेक्षाप्राप्तं [।]

**तत्र प्रशान्तंचित्तं** यन्निवरणेभ्यो विमुक्तमभ्युपशान्तं पुनर्यदविमुक्तं ।

**तत्र समाहितं चित्तं** यन्निवरणविमोक्षान्मौलध्यानप्रविष्टं, न सुसमाहितं यदप्रविष्टं [।]

**तत्र सुभावितं चित्तं** यदस्यैव समाधेर्दीर्घ[3]-कालपरिचयान्निकामलाभी भवत्यकृच्छ्रलाभी । आशुसमापत्ता ।

---

1. मोहपर्यवस्थितं seems to have been omitted in the MS.

तत्र न **सुभावितं** चित्तमेतद्विपर्ययेण वेदितव्यम्। तत्र **सुविमुक्तं** चित्तं यत्सर्वतश्चात्यन्ततश्च विमुक्तं [।]

न **सुविमुक्तं**। चित्तं यन्न सर्व्वतो ना(ना)-प्यत्यन्ततो विमुक्तमितीमानि चतुर्दश चित्तानि (।) विहारगतानि वेदितव्यानि।

तत्र[4]निवरणभूविशुद्धा(द्धि)भूमिमारभ्य विहार-गतान्यष्टौ चित्तानि वेदितव्यानि। **विक्षिप्तं**[1] **संक्षिप्तं**[2] यावद् **व्युपशान्तमव्युपशान्तमिति**। क्लेशविशुद्धि पुनरारभ्य **विहारगतानि षट् चित्तानि** यावत्सुविमुक्तं चित्तं न सुविमुक्तमिति[3] [।]

यत्पुनः सत्यध्यात्मं निवरणे अस्ति मे निवरणमिति जानाति। असति निवरणे[4] नास्ति मे निवरणमिति जानाति। यथा चा[5]नुत्पन्नस्य विवरणस्योत्पादो भवति। तदपि यथा योत्पन्नस्य विगमो भवति। तदपि प्रजानाति। यत्र सति चक्षुःसंयोजने यावत्पुनः(न्मन)

---

1. cp. विक्खित्तं ति उद्धच्चसहगतं। एतञ्हि विसटचित्तं नाम।, SVA, p. 271.
2. cp. सङ्खित्तं ति थीनमिद्धानुपतितं। एतञ्हि संकुचितचित्तं नाम, ibid, loc. cit.
3. Regarding citta, see SVA, p. 271 sq.; Bhikkhu J. Kashyapa, Abhidhamma Philosophy, part I, pp. 1-43; Vsm., XIII.11-2, p. 435; Adv., pp. 78-9, 168-70, 293, 363.3-7, 369; A. K., II.66-73, cp. II.29; cp. ŚS, pp. 126-7.
4. On निवरण and निवरणविशुद्धि see, Yogasthāna I, p. 13.

संयोजने अस्ति मे यावत्पुन:(मन:) संयोजनमिति । असति यावत्पुन:(न्मन:)संयोजने नास्ति मे मन: संयोजनमिति प्रजानाति । यथा चानुत्पन्नस्य यावन्मन: संयोज[6]नस्योत्पादो भवति । तदपि प्रजानाति । यथा चोत्पन्नस्य निरोधो भवति । तदपि प्रजानाति । सत्यध्यात्मं स्मृतिसंबोध्यंगे अस्ति मे [स्मृति[1]] संबोध्यंगमिति प्रजानाति । असति नास्ति मे प्रजानाति । यथा चानुत्पन्नस्य स्मृतिसंबोध्यंगस्योत्पादो भवति । तदपि प्रजानाति । यथा चोत्पन्नस्य स्थितिर्भवति । असंमोषो भावना (।) [7] परिपूरिर्भूयो भाववृद्धिर्विपुलता तदपि प्रजानाति । सत्यध्यात्मं स्मृतिसंबोध्यंगमेवं धर्मविनयवीर्यप्रश्रब्धिसमाध्युपेक्षासंबोध्यंगं वेदितव्यमिति यदेवं स्वभावादीनवप्रतिप[2]क्षाकारै: संक्लिष्टधर्म्मपरिज्ञानमिदं शरीरं धर्म्मस्मृत्युपस्थानस्य, यथा काये कायानुपश्यना स्मृत्युपस्थानपक्षमे(क्षए)वं[8]वेदना[यां]यच्चित्ते (यावच्चिते) धर्मेषु यथायोगं वेदितव्यम् ।

तत्र **कथमध्यात्मं काये कायानुदर्शी विहरति।** **कथं बहिर्धा कथमध्यात्मबहिर्धा** [।] यदा अध्यात्मं प्रत्यात्मं सत्व(त्त्व)संख्याते काये कायानुपश्यी(दर्शी) विहरति । एवमध्यात्मं काये कायानुदर्शी विहरति ।

1. A separate hand adds this, dim and illegible.
2. Syllables blurred and illegible.

कथं बहिर्धा कथमध्यात्मबहिर्धा [।] यदा अध्यात्मं
10B—2// प्रत्यात्मं, यदा बहिर्धा //[1] असत्त्वसंख्यातं रूपमालम्बनीकरोत्येवं बहिर्धाकाये कायानुदर्शी विहरति। यदा बहिर्धा(र्धो)परक्तं सत्त्वसंख्यातं रूपमालम्बनीकरोत्येवमध्यात्मबहिर्धा काये कायानुदर्शी विहरति।

तत्राध्यात्मं रूपमुपादाय। सूक्ष्मं सत्त्वसंख्यातं। या उत्पन्ना वेदना, चित्तं, धर्मास्तानालम्बनीकुर्वन् [।] अध्यात्मं वेदना[यां], चित्ते, धर्मेषु धर्मानुदर्शी वि[2]हरति। बाह्यमसत्त्वसंख्यातं रूपमुपादाय। या उत्पन्ना वेदना, चित्तं, धर्मास्तानालम्बनीकुर्वन्। बहिर्धा वेदनायां, चित्ते, धर्मेषु धर्मानुदर्शी विहरति। बहिर्धा बाह्यं रूपसत्त्वमुपादाय। या उत्पन्ना वेदना, चित्तं, धर्मास्तानालम्बनीकुर्व्वन्नध्यात्मबहिर्धा वेदनायां, चित्ते धर्मेषु धर्मानुदर्शी विहरति ॥

अपरः पर्यायः। इन्द्रिय सं[3]गृहीतं रूपमालम्बनीकुर्व्वन्, अध्यात्मं काये कायानुपश्यी(दर्शी) विहरति। अनिन्द्रियसंगृहीतं। रूपगतमनुपादत्तमालम्बनीकुर्व्वन् बहिर्धा काये कायानुदर्शी विहरति। अनिन्द्रियसंगृहीतमेव। रूपमध्यात्ममुपगतमुपादत्तं रूपमालम्बनीकुर्व्वन्नध्यात्मबहिर्धा काये कायानुपश्यी (दर्शी) विहरति। [[1]अनिन्द्रियसंगृहीतं रूपगतमनुपादत्तमालम्बनीकुर्व्वन् बहिर्धा काये कायानुदर्शी

1. Added by a separate hand in a footnote.

विहरति । अनिन्द्रियसंगृहीतमेव रूपमध्यात्ममुपगत-मुपादत्तं रूपमालम्बनीकुर्व्वन्नध्यात्मबहिर्धा काये काया-नुदर्शी विहरति[1]] [।] एवं पूर्व्वं[ ] त्रिविधं रूपमुपादाय । [4] यदु(यो)त्पन्ना वेदना, चित्तं, धर्मास्तान्यथायोग-मालम्बनीकुर्व्वन् तथादर्शी विहरतीति वेदितव्यं ।

अपरः पर्यायः । यत्समाहितभूमिकं प्रश्रब्धिसहगतं रूपमालम्बनीकरोत्येवमध्यात्मं काये कायानुदर्शी विहरति । यत्सूक्ष्ममेवाध्यात्मं समाहितभूमिकं दौष्ठुल्य-सहगतं रूपमालम्बनीकरोति । एवं बहिर्धा काये काया[5]नुपश्यी(दर्शी) विहरति । परदौष्ठुल्यसहगतं प्रश्रब्धिसहगतं च रूपमालम्बनीकुर्व्वन् अध्यात्मबहिर्धा काये । कायानुदर्शी विहरति । एवं तदुपादायोत्पन्ना वेदना, चित्तं, धर्मा यथायोगं वेदितव्याः ।

अपरः पर्यायः । अध्यात्मं भूतरूपमालम्बनी-कुर्व्वन्नध्यात्मं काये कायानुदर्शी विहरति । बाह्यं भूतरूपमालम्ब[6]नी कुर्व्वन् बहिर्धा काये कायानुदर्शी विहरति । तच्च भूतरूपमुपादाय । यदुत्पन्नमिन्द्रिय-विषयसंगृहीतमुपादाय । रूपं चालम्बनीकुर्व्वन्नध्यात्म-बहिर्धा काये कायानुदर्शी विहरति । एवं तदुपादाय या उत्पन्ना वेदना चित्तं धर्मास्तेपि यथायोगं वेदितव्याः । अपरः पर्यायः । यदा सविज्ञानकं कायमध्यात्ममालम्बन[7]नीकरोति । एवमध्यात्मं

1. Added by a separate hand in a footnote.

काये कायानुदर्शी विहरति। अविज्ञानकं रूपं
सत्त्वसंख्यातं। विनीलकादिष्ववस्थास्वालम्बनी-
कुर्व्वन्बहिर्धा काये कायानुदर्शी विहरति। अ(स)-
विज्ञानकस्य च रूपस्यातीते काले सविज्ञानतां [।]
अविज्ञान[क[1]]स्य च रूपस्यानागते काले अविज्ञानतां,
तुल्यधर्मतां, समधर्म्मतां आलम्बनीकुर्व्वन्नध्यात्मबहिर्धा
काये कायानु[8]दर्शी विहरत्येवं तदुपादाय, या उत्पन्ना
वेदना, चित्तं, धर्मास्तेपि यथायोगं वेदितव्याः। अपरः
पर्यायः [।] आत्मनः अन्त[ः]कायं केशरोमनखादिभिः
आकारैरालम्बनीकुर्व्वन्नध्यात्मबहिर्धा काये कायानुदर्शी
विहरति॥ परेषामन्तः कायं केशरोमनखादिभिरा-
कारैरालम्बनीकुर्व्वन्बहिर्धा काये कायानुदर्शी
10A—3// विहरत्यध्या//[1]त्मं चित्तं च बहिःकायविपरिणतं
विनीलकादिभिराकारैः। बहिर्धा च बहिःकायं
विपरिणतमविपरिणतं च। विनीलकादिभिराकारै-
स्तुल्यधर्म्मतया आलम्बनीकुर्व्वन् बहिर्धा काये कायानु-
दर्शी विहरति।[2] तदुपादाय या उत्पन्ना वेदना, चित्तं,

---

1. A separate hand adds this.
2. cp. Ada., p. 113 (XIV.4) : कायस्मृत्युपस्थानं कतमत्। यस्मात् शुचिसंज्ञाविपर्यासं व्यन्तीकरोति तस्मात् कायसत्यलक्षणं प्रत्यवेक्षते यदिदं षट्त्रिंशदशुचयः। तथा हि मृते कृमिजन्म पूतिगन्धः अस्थिकानां स्थितिरित्यादि। एवं पश्यन् कायं शुचिसंज्ञाविपर्या संक्षपयति।; see also, Asm., pp. 71-2; ŚS, pp. 115, 124.1-125.21; SVA, pp. 221-3, 225 sq. वेदनास्मृत्युपस्थानं कतमत्। पश्यति सर्वासां वेदनानां उत्पादं स्थितिं निरोधं दुःखतां।
(contd. on p. 303)

धर्मास्तेपि यथायोगं वेदितव्याः । इत्येवंभागीया काये वेदनाचित्तधर्मप्रभेदेन[2]बहवः पर्याया वेदितव्याः । इमे तु कतिपयाः(ये)पर्यायाः । संप्रकाशिताः [।]

तत्र चतुर्णाम्विपर्यासानां प्रतिपक्षेण भगवता चत्वारि स्मृत्युपस्थानानि व्यवस्थापितानि । तत्राशुचौ शुचीति विपर्यासे प्रतिपक्षेण कायस्मृत्युपस्थानं व्यवस्थापितं । तथा हि भगवता कायस्मृत्युपस्थान-भावनायां । अशुभाप्रतिसंयुक्ताश्च[3]तस्रः शिवपथिका देशिताः । या अस्य बहुलं कुर्व्वन् मनसिकुर्व्वतः । अशुचौ शुचीति विपर्यासः प्रहीयते । तत्र सुखे सुखमिति । विपर्यासप्रतिपक्षेण वेदनास्मृत्युपस्थानं व्यवस्थापितं । वेदनानुदर्शी विहरन् । यत्किंचिद्वेदित-मिदमत्र दुःखस्येति यथाभूतं प्रजानात्येवमस्य यो दुःख-सुखे सुख[4]मिति । विपर्यासः । स प्रहीयते

---

*(contd. from p. 302)*

सुखायां वेदनायां रागसंयोजनं दुःखायां वेदनायां द्वेषसंयोजनं अदुःखासुखायां वेदनायामविद्यासंयोजनं । पश्यति सर्वमिदं अनित्यं दुःखं शून्यं अनात्मकं । Ada., p. 114; cp. SVA, p. 266 sq.; Asm., p. 72; ŚS, pp. 125-6 : चित्तस्मृत्युपस्थानं कतमत् । पश्यति क्लिष्टं चित्तं अक्लिष्टं चित्तं समाहितं चित्तं असमाहितं चित्तं । पश्यत्यनित्यादिकं ।—Ada., p. 115; SVA, p. 271; Asm., loc. cit.; ŚS, pp. 126-7: धर्मस्मृत्युपस्थानं कतमत् । पश्यत्यध्यात्मधर्मान् । पश्यति बहिर्धा धर्मान् । पश्यत्यध्यात्मबहिर्धा-धर्मान् । पश्यति योऽतीतो धर्मो यश्चागतः । पश्यति संयोजनानि कति हीनानि कत्यहीनानि । पश्यति दुःखं यदनित्यं । पश्यति समुदयहेतून् । पश्यति निरोधं । ····Ada., p. 115 (XIV.7); Asm., p. 72; ŚS, p. 127; SVA, p. 272 sq.

(प्रहीयते) । अनित्ये नित्यमिति विपर्यासः । प्रतिपक्षेण स्मृत्युपस्थानं व्यवस्थापितं । तस्य सरागादिचित्तप्रभेदेन तेषां तेषां रात्रिंदिवसानामत्ययात्क्षणलवमुहूर्त्ताना-(णा)मनेकविधानां बहुनानाप्रकारतां चित्तस्योपलभ्य यः अनित्ये नित्यमिति विपर्यासः [स[1]] प्रहीयते । यत्रा[ना[1]]त्मन्यात्मेति विप[5]र्यासप्रति-पक्षेण धर्मस्मृत्युपस्थानं व्यवस्थापितं । तस्य येषां आत्मदृष्ट्यादिका[नां]संक्लेशानां सद्भावाद्येषां नानात्मदृष्ट्यादिकानां कुशलानां धर्माणाम-सद्भावात्स्कन्धेष्वात्म दर्शनं भवति । नान्यस्य, स्वलक्षणतः । सामान्यलक्षणतश्च धर्माधर्मानु[2]दर्शिनो यथाभूतं पश्यतः । योनात्मन्यात्मेति विपर्यासः । [6]स प्रहीयते ।[3]

---

1. MS. omits this.
2. MS. photo blurred and illegible.
3. See *supra*, p. 185, f.n. 1 (Adv, p. 315 sq.); AK, VI.14-6 :

निष्पन्नशमथस्यैव स्मृत्युपस्थानभावना ।
कायविच्चित्तधर्माणां द्विलक्षण-परीक्षणात् ॥
प्रज्ञा श्रुतादिमयी अन्ये संसर्गलम्बनात् क्रमः ।
यथापपत्ति चत्वारि विपर्यासविपक्षतः ॥
स धर्मस्मृत्युपस्थाने समस्तालम्बने स्थितः ।
तानेव पश्यत्यनित्य-दुःख-शून्य निरात्मतः ॥,

see also AKV and AKB; cp. Buddhaghosa, SVA, p. 218.11 : सुभ-सुख-निच्च-अत्त-भावविपल्लासपहानत्थं वा कायो हि असुभो । तत्थ सुभविपल्लासविपल्लट्ठा सत्ता । तेसं तत्थ असुभभावदस्सनेन

*(contd. on p. 305)*

अपरः पर्यायः । प्रायेण हि लोक एवं प्रवृत्तः । स्कन्धेषु स्कन्धमात्रं, धर्म्ममात्रं, यथाभूतमप्रजानन् यथा काये आश्रितः । यदाश्रितश्च सुखदुःख ज[1] धर्माधर्माभ्यां संक्लिश्यते व्यवदा(दी)यते च । तत्रात्मन आश्रयवस्तुसंमोहापनयनार्थं । कायस्मृत्युपस्थानं व्यवस्थापितं । तस्यैवात्मनः अनुभ[7]वनवस्तुसंमोहापनयनार्थं वेदनास्मृत्युपस्थानं व्यवस्थापितं । यत्रैव च ते चित्ते, मनसि, विज्ञाने, आत्मग्राहेण संमूढा, आत्मवस्तुसम्मोहापनयनार्थं धर्मस्मृत्युपस्थानं व्यवस्थापितम् ।

10B—3// अपरः पर्यायः । यत्र //[1] च कर्म करोति । यदर्थं च करोति । यश्च कर्म करोति । (यदर्थं च करोति । यश्च [कर्म[2]] करोति ।) ( ˙ )[3] येन च

*(contd. from p. 304)*

तस्म विपल्लासस्स पहानत्थं पठमं सतिपट्ठानं वुत्तं । सुखं, निच्चं, अत्ता' ति गहितेसु पि च वेदनादीसु वेदना दुक्खा, चित्तं अनिच्चं, धम्मा अनिच्चा । एतेसु च सुख-निच्च-अत्तभावविपल्लासविपल्लट्ठा सत्ता । तेसं तत्थ दुक्खादिभावदस्सनेन तेसं विपल्लासानं पहानत्थं सेसानि तीणि वुत्तानी ति । एवं सभ सुखनिच्चअत्तभावविपल्लासप्पहानत्थं वा चत्तारो व वुत्ता अनूना अनधिका ति वेदितब्बा । न केवलञ्च विपल्लासप्पहानत्थमेव, अथ खो चतुरोघयोगासवगन्थउपादानअगतिप्पहानत्थम्पि चतुब्बिधाहारपरिञ्ञत्थञ्च चत्तारो व वुत्ता ति पि वेदितब्बा ।; cp. also Y. S., II.5 : अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या, MSA, pp. 140-1; Saund. Kā, XVII.25; ŚS, pp. 109-10; ŚSPP, p. 478 (the four viparyāsas); see BDBSL, pp. 85-91; Bodhi, p. 177.

1. MS. photo blurred and illegible, letters indistinct.
2. A separate hand adds this.
3. This is a repetition and may be deleted.

करोति । तत्सर्व्वमेकत्यमभिसंक्षिप्य चत्वारि स्मृत्युपस्थानानि व्यवस्थापितानि । तत्र काये करोति । वेदनार्थं । चित्तेन कुशलाकुशलैर्धर्मैः ।

अपरः पर्यायः । यत्र च संक्लिश्यते । विशुध्यते । यतश्च यश्च येन क्लिश्यते । विशुध्यते यतश्च य[2]श्च येन संक्लिश्यते विशुध्यते च । तदेकत्यमभिसंक्षिप्य चत्वारि स्मृत्युपस्थानानि व्यवस्थापितानि । तत्र काये संक्लिश्यते, विशुध्यते च । वेदनाभ्यश्चित्तं धर्मैः संक्लिश्यते । विशुध्यते च ॥

**तत्र स्मृत्युपस्थानमिति[को[1]]र्थं** आह । यत्र च स्मृतिमुपस्थापयति । येन च स्मृतिमुपस्थापयति । तदुच्यते स्मृत्युपस्थानं ।[2] यत्र स्मृ[3]तिमुपस्थापयति । तदालम्बनस्मृत्युपस्थानं । येन स्मृतिमुपस्थापयति । तत्र या प्रज्ञा स्मृतिश्च समाधिसंग्राहिका तत्स्वभावस्मृत्युपस्थानं । तदन्ये तत्संप्रयुक्ताश्चित्तचैतसिका धर्माः । संसर्गस्मृत्युपस्थानं । अपि[च[3]] कायवेदनाधिपतेयो

---

1. Letters damaged by pin-hold, reconstructed by us.
2. See, Psm., p. 497; SVA, p. 217 : पतिट्ठाति अस्मि ति पट्ठानं । का पतिट्ठाति ? सति । सतिया पट्ठानं सतिपट्ठानं, पधानं ठानं ति वा पट्ठानं, सतिया पट्ठानं सतिपट्ठानं हत्थिट्ठान—अस्सट्ठानादीनि विय ।····पतिट्ठातीति पट्ठानं उपट्ठाति ओक्कन्दित्वा पक्खन्दित्वा पवत्ततीति अत्थो, सति येव पट्ठानट्ठेन सतिपट्ठानं, अथवा मरणत्थेन मति, उपट्ठानट्ठेन पट्ठानं । इति सति च सा पट्ठानं चा ति पि सति पट्ठानं ।; cp. M. N., III.144; also, SRS, IX. 29-a—स्मृतेरुपस्थानकथां कथित्वा····; VI.21-a : स्मृतेरुपस्थान इह येव गोचरः ।; see, BDBSL, pp. 83-6.
3. Letter damaged by pin-hold.

मार्गः समुत्पन्नः कुशलः सास्रवः । अनास्रवश्च [।] तत्स्मृत्युपस्थानं । स पुनः [4] श्रुतमयश्चिन्तामयो भावनामयश्च । तत्र श्रुतचिन्तामयः । सास्रव एव [।] भावनामयः स्यात्सास्रवः स्यादनास्रवः ।।

स[1] एवं चतुर्षु स्मृत्युपस्थानेषु कृतपरिचय औदारिको(कौ)दारिकं विपर्यासमपीनय कुशलाकुशल-धर्माभिज्ञः । तदनन्तरमनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादाय । उत्पन्नानां प्रहा[5]णाय । अनुत्पन्नानां कुशलानां धर्माणामुत्पादाय । उत्पन्नानां स्थितय इति विस्तरेण पूर्व्ववद्यावच्चित्तं प्रगृह्णाति । प्रदधाति ।।

तत्र कतमे पापका अकुशला धर्मा[:] [।] यत्कामावचरं क्लिष्टं कायकर्म, वाक्कर्म, मनस्कर्म, कायवाङ्मनोदुश्चरितसंगृहीतं । येन तत्समुत्थापकाः क्लेशास्ते पुनर्ये असमवहिता, असंमुखीभूतास्ते उत्पन्ना,

1. From here begins the account of the सम्यक्प्रहाण (Pāli—सम्मप्पधानानि); cp. Vbh., p. 255 : चत्तारो सम्मप्पधाना—इध अनुप्पन्नानं पापकानं अकुसलानं धम्मानं अनुप्पादाय छन्दं जनेति वायमति विरियं आरभति चित्तं पग्गण्हाति पदहति, उप्पन्नानं, पापकानं अकुसलानं धम्मानं पहानाय····, अनुप्पन्नानं कुसलानं धम्मानं उप्पादाय'····, उपन्नानं कुसलानं धम्मानं ठितिया····SVA, pp. 291-303; Adv., Vs. 444 :

दोषप्रहाणमनुत्पादं गुणोत्पादं विवर्धनम् ।
सकृत् करोति यत्तद्धि स प्रहाणचतुष्ट्यम् ।।

see Vṛtti, p. 358, lines 15-7; Ada., p. 115, XIV.8; Asm., pp. 72-3; for details see Hardayal, ibid, pp. 101-3; MSA, p. 141; Saun. Ka., XVII.24; ŚS, p. 190.

[6] ये समवहिताः संमुखीभूतास्ते उत्पन्नाः [।] तत्र कुशला धर्मा ये तत्प्रातिपक्षिका धर्मादुश्चरितप्रातिपक्षिका, निवरणप्रातिपक्षिकाः, संयोजनप्रातिपक्षिका वा तेप्यनुत्पन्नास्तथैव वेदितव्याः। उत्पन्नाश्च पापका अकुशला धर्मास्तत्र यदा अनुत्पन्नानां पापकानाम-
10A—4// कुशलानां धर्माणामनुत्पादाय स्पृहामुत्पा//[1]दयति। प्रणिधत्ते, सर्वेण सर्व्वं सर्व्वथा नोत्पादयिष्यामीत्येवं छन्दं जनयति। उत्पन्नान्वा पुनः समवहितान्सर्व्वेण-सर्व्वं नाधिवासयिष्यामि प्रहास्यामि। प्रतिविनोदयिष्यामि य[द[1]]नुत्पन्नेषु पापकेष्वकुशलेषु पूर्व्वमेवोत्पाद(।)स्पृहामुत्पादयति। प्रणिधत्ते [।] नाधिवासय(यि)तुकामो भवति। अयमुत्पन्नानां प्रहाणाय[च्]छन्दः [।]

[2]ते पुनः पापका अकुशला धर्मा अतीतवस्त्वालम्बना वा, अनागतवस्त्वालम्बना वा, वर्तमानविषयालम्बना वा उत्पद्यन्ते, भवन्ति। येनोक्तविषयालम्बना[:], प्रत्यक्षविषयालम्बनाश्च ये अतीतानागतावस्थालम्बनास्ते; ये चोक्तविषयालम्बना, ये वर्तमानविषयालम्बनास्ते प्रत्यक्षविषयालम्बना[: ।]

तत्र परोक्षालम्बनानां पाप[3]कानामकुशलानां धर्माणामनुत्पादाय। उत्पन्नानां च प्रहाणाय। व्यायच्छते [।] प्रत्यक्षविषयालम्बननानां पुनः।

1. A separate hand adds this.

अनुत्पन्नानामनुत्पादायोत्पन्नानां च प्रहाणाय वीर्यमारभते । तथा हि तेषां दृढतरेण वीर्यारंभेणानुत्पत्तिः । प्रहाणं वा भवति । अपि च मृदुमध्यानां समवस्थानामनुत्पन्नानामनुत्पादाय । उत्पन्नानां प्र[4]हाणाय व्यायच्छते । अधिमात्राणां समवस्थानां अनुत्पन्नानामनुत्पादाय । उत्पन्नानां च प्रहाणाय वीर्यमारभते । स चेदतीते आलम्बने चरति । तथा चरति । यथास्य तेनालम्बनेन क्लेशो नोत्पद्यते । स चेत्पुनः स्मृतिसंप्रमोषादुत्पद्यते नाधिवासयति । प्रजहाति । व्यन्तीकरोति । यथा अतीते आलम्बने एवमनागते[अ]पि वेदितव्यम् । एवमयमनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादायोत्पन्नानां च प्रहाणाय व्यायच्छत इत्युच्यते । स चेदयम्वर्त्तमाने आलम्बने चरति, तथा तथा चरति । यथा तेनालम्बनेन क्लेशो नोत्पद्यते । स चेत्पुनः स्मृतिसंप्रमोषादुत्पद्यते । उत्पन्नं नाधिवासयति । प्रजहाति । विनोदयति । व्यन्तीकरोति । [6] एवमनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादाय । उत्पन्नानाञ्च प्रहाणाय वीर्यमारभत इत्युच्यते ।

सन्ति पापका अकुशला धर्मा ये संकल्पवशे(बले)-नोत्पद्यन्ते । न विषयबलेन । सन्ति ये संकल्पबलेन च । विषयबलेन च ।[1] तत्र संकल्पबलेनोत्पद्यन्ते । तद्यथा विहरतः । अतीतानागतालम्बना ये उत्पद्यन्ते ।

1. उत्पद्यन्ते seems to have been omitted in the MS.

[7] तत्र संक्लेशवशे(ले)न च विषयबलेन चोत्पद्यते(न्ते)। तद्यथा चरतो वर्तमानेनालम्बनेनोत्पद्यन्ते। अवश्यं तत्रायोनिशः संकल्पो भवति। तत्र ये संकल्पबलेनोत्पद्यन्ते तेषामनुत्पन्नानामनुत्पादाय। उत्पन्नानां च प्रहाणाय। व्यायच्छते। तत्र ये विषयब[लेन[1]] संकल्पब[लेन[1]] चोत्पद्यन्ते। तेषामनुत्पन्नानामनुत्पादाय। [8]उत्पन्नानाञ्च प्रहाणाय व्यायच्छ(ते) तत्र ये विषयबलेन संकल्पबलेन चोत्पद्यन्ते। तेषामनुत्पन्नानाममनुत्पादाय उत्पन्नानाञ्च प्रहाणाय वीर्यमारभते। तत्रानुत्पन्नानां कुशलानां धर्माणामनु(मु)त्पादाय छन्दं जनयतीति। ये कुशलाधर्मा अप्रतिलब्धा [अ]संमुखीभूतस्य(ताः)
10B—4// तेषां प्रतिलम्भाय संमुखीभावाय च स्मृ//[1]तिमुत्पादयति [।] चित्तं प्रणिधत्ते [।] तीव्रा प्रतिलब्धुकामता। संमुखीकर्तुकामता चास्य प्रत्युपस्थिता भवति। अयमनुत्पन्नानां कुशलानां धर्माणामुत्पत्तये।

कृ(य)त्तु उत्पन्नानां च कुशलानां धर्माणां स्थितये, असंमोषाय, भावनापरिपूरये छन्दं जनयतीति। उत्पन्नाः कुशला धर्मा ये प्रतिलब्धास्संमुखीभूताश्च, तत्र प्रतिलंभावि[2]गमं प्रतिलब्धां पारिहाणिमधिकृत्याह। स्थितय इति संमुखीभावादधन्धायितत्वमधिकृत्याहासंमोषायेति। तेषामेव च कुशलानां

1. Letters illegible.

धर्माणाम्प्रतिलब्धानां सम्मुखीभूतानामासेवनान्वयात्परिनिष्पत्तिं निष्ठागमनमधिकृत्याह । भावनापरिपूरये इति । तत्र च स्पृहामुत्पादयति । चित्तं प्रणिधत्ते । तीव्रा चास्य स्थि[3]तिकामता असम्मोषकामता । भावनापरिपूरिकामता प्रत्युपस्थिता भवति । अयमुच्यते । उत्पन्नानां कुशलानां धर्माणां स्थितये असंमोषाय भावनापरिपूरये[च्]छन्दः । तत्र व्यायच्छत इति । प्रतिलब्धानां संमुखीभावाय वीर्यमारभते । अप्रतिलब्धानां प्रतिलम्भाय [।]

तत्र व्यायच्छते । उत्पन्नानां स्थितये, असंमोषा[4]य, वीर्यमारभते । भावनापरिपूरये, अपि च मृदुमध्यानां कुशलानां धर्माणामनुत्पन्नानामुत्पादाय, उत्पन्नानां च स्थितये । असंमोषाय व्यायच्छते । अधिमात्राणां कुशलानां धर्माणामनुत्पन्नानामुत्पादाय, उत्पन्नानां च यावद् भावनापरिपूरये वीर्यमारभते ।

तत्र चित्तं प्रगृह्णाति । यदा तच्चित्तं शमथभावनाया[5]मेकाग्रतायां प्रयुक्तं भवति । अनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादाय । एवं विस्तरेण यावदुत्पन्नानां कुशलानां धर्माणामनुत्पन्नानामुत्पादाय । उत्पन्नानाञ्च यावद् भावनापरिपूरये वीर्यमारभते । तत्र चित्तं प्रगृह्णाति । यदा तच्चित्तं शमथभावनायामेकाग्रतायां[1] प्रयुक्तं भवति । अनुत्पन्ना-

1. cf. Bodhi, pp. 59.1, 77.

[6]नां पापकानां अकुशलानां धर्माणामनुत्पादाय। एवं विस्तरेण यावदुत्पन्नानां कुशलानां धर्माणां स्थितये। असंमोषाय भावनापरिपूरये। तच्च तथा अध्यात्ममभिसंक्षिप्तं लीनत्वाय परैति। लीनत्वाभिशंकि चैवं पश्यति। तदा अन्यतमान्यतमेन प्रग्राहकेन(ण) निमित्तेन प्रसदनीयेन प्रतिगृह्णाति। संहर्षयत्ये[7]वं चित्तं प्रगृह्णाति।

**कथं प्रदधाति।** पुनरुद्धतमौद्धत्याभिशंकि वा प्रग्रहकाले पश्यति। तदा पुनरप्यध्यात्ममभिसंक्षिपति। शमथाय प्रणिदधाति। तान्येतानि भवन्ति। चत्वारि सम्यक्प्रहाणानि। कृष्णपक्ष्याणां धर्माणामनुत्पन्नानामनुत्पादाय। उत्पन्नानां च प्रहाणाय [च्]छन्दो व्यायामो वीर्यारम्भः। चित्त[8]प्रग्रहः। **प्रदधनमिमे** द्वे सम्यक्प्रहाणे शुक्लपक्ष्याणां धर्माणामनुत्पन्नानामुत्पादाय [।]

विस्तरेण द्वे सम्यक्प्रहाणे वेदितव्ये। तद्यथा कृष्णपक्ष्याणां तत्रैकं **सम्वरणप्रहाणं** यदुत्पन्नानाम्पापकानामकुशलानां धर्माणां प्रहाणाय [च्]छन्दं जनयतीति
10A—5// विस्तरेण। द्वितीयं **प्रहाणप्रहाणं** यद//[1]नुत्पन्नानामनुत्पादाय [च्]छन्दं जनयतीति विस्तरेण, उत्पन्नं हि संवर्गयितव्यं। पापकं च वस्तु। अनुत्पन्नं च यत्तदसमुदाचारतः प्रहीणमेवं तदसंमुखीभावतः प्रहातव्यमिति कृत्वा। प्रहीणस्य प्रहाणं प्रहाणप्रहाण[ं]।

**तत्र भावनाप्रहाणमेकं** यदाह । अनुत्पन्नानां कुशलानां धर्माणामुत्पादायेति विस्तरे[2]ण यावच्चित्तं प्रगृह्णाति, प्रदधातीति । तथा हि कुशला धर्मा आसेव्यमाना, भाव्यमाना, अप्रतिलब्धाश्च प्रतिलभ्यन्ते । प्रतिलब्धाश्च सम्मुखीक्रियन्ते ।

तत्रानुरक्षणाप्रहाणमेकं । यदाह । उत्पन्नानां कुशलानां धर्माणां स्थितये । विस्तरेण यावच्चित्तं प्रगृह्णाति । प्रदधाति । तथा हि प्रतिलब्धेषु संमुखी-[3]कृतेषु च । कुशलेषु धर्मेषु यावत्प्रमादवर्जना अप्रमादनिषेवणा च । सा कुशलानां धर्माणां स्थितये, असम्मोषाय, भावनापरिपूरये । एवमनुत्पन्नाः कुशला धर्मा अनुरक्षिता भवन्त्ययं तावत्सम्यक्प्रहाणानां विस्तरविभागः ।

**समासत (सार्थ) : पुनः कतमः ।** आह । कृष्णशुक्लप[1]क्षिक[4]स्य त्यागात्पुनर्वस्तुनः । प्राप्तये पूर्वमेव स्पृहायुक्तेन भवितव्यं । पर्यवस्थानप्रहाणाय च । **अस्त्याशयसम्पत्प्रयोगसम्पच्च ।** परिदीपिता भवति । तत्रास्या (स्त्या) शयसम्पत् । छन्दजननतया, प्रयोगसम्पत्पुनः व्यायामवीर्यारम्भचित्तप्रग्रहाप्रमादधनैः । एतावच्च योगिना करणीयं । [5]यत्प्रहातव्यस्य वुस्तनः प्रहाणाय, प्राप्तव्यस्य वस्तुनः प्राप्तये पूर्व्वमेव स्पृहाजातेन भवितव्यं, पर्यवस्थानप्रहाणाय, वीर्यमारब्धव्यमनुशयप्रहाणाय च, कालेन कालं शमथप्रग्रहोपेक्षानि-

मित्तानि भावयितव्यानि । पर्यवस्थानप्रहाणानुशय-प्रहाणाय च ये प्रातिपक्षिका धर्माः [6]कुशलास्ते समुदानयितव्याः । तच्चैतत्सर्व्वं चतुर्भिः सम्यक्प्रहाणैः परिदीपितं भवत्ययं समासार्थः ।।

**तत्र चत्वारः समाधयः**[1], तद्यथा **छन्दसमाधिः । वीर्यसमाधिः, चित्तसमाधिः, मीमांसासमाधिश्च ।**

---

1. These samādhis are also called ṛddhipādas, for this viewpoint, cp., Asm., p. 73; Ada., p. 115(XIV.9), AK, VI.69 : **ऋद्धिपादाः समाधयाः** ।; समाधिः कस्मात् ऋद्धिपाद उक्तः? तत्प्रतिष्ठितत्वात् सर्वगुणसम्पत्तेः । येत्वाहुः समाधिरेर्वद्धिः पादास्तु च्छन्दादयः' इति । तेषां द्रव्यतस्त्रय एव बोधिपक्ष्याः प्राप्नुवन्ति । सूत्रं च विरुध्यते ।.... (AKB); see also AKV, p. 602; on different kinds of ṛddhis, see RAK, VII.42, pp. 212-3; VII.48; Adv., pp. 398-9, Vs. 524 :

   समाधी ऋद्धिरित्युक्ता फलमैश्वर्यमष्टधा ।...., ऋद्धिः खलु समाधिरूपा तत्फलत्वात्तु प्रातिहार्यमृद्धिरित्युक्तं सूत्रे । अङ्गपरिगृहीते समाधौ सति सर्वमेतत् प्रातिहार्यमृद्ध्यति । तस्मात् समाधिरेव ऋद्धिः । तस्याः फलमष्टविधमैश्वर्य-मणिमादि । see, pp. 400-1; Y. B., III.45; Vsm., VII.61 with Tika; Vm. with dīpika :

   अणिमा महिमा लघिमा पत्ति पाकम्ममेव च ।
   ईसित्तं च वसित्तञ्च यत्थकामावसायितं ति ।।

   (quoted from Gaṇṭhi); see also Asm., p. 73 (last three lines).

2. चत्तारो इद्धिपादा—इध भिक्खु छन्दसमाधिपधानसंखारसमन्नागतं इद्धिपादं भावेति, विरिय....चित्त....वीमंसा....इद्धिपादं भावेति, Vbh., p. 264; see SVA, p. 305 sq. for various interpretations of ṛddhipādas in Pāli literature; AKV, VI.69-d; Adv., Vs. 445 :

(contd. on p. 315)

तत्र छन्द(समाधि[1])मधिपतिं[7]कृत्वा यः प्रतिलभ्यते समाधिरयं छन्दसमाधिः। वीर्यं, चित्तं, मीमांसामधिपतिं कृत्वा प्रतिलभ्यते(प्रतिलभ्यते[1]) समाधिरयं[......[2]]मीमान्सा(मांसा) समाधिः। यदा

---

(contd. from p. 314)

छन्दव्यायाममीमांसा चित्ताकृष्टाः समाधयः।
ऋद्धिपादास्तु चत्वारो गुणसम्पत्तियोनयः ॥,

छन्दमधिपतिं कृत्वा यो निष्पद्यते समाधिः स छन्दसमाधिः। कुशलमूलच्छन्दमूलकत्वात् समाध्यादिगुणनिष्पत्तेः, तस्मादसौ छन्दसमाधिरित्युच्यते। तत्प्रभवाः सर्वा गुणार्द्धयः। एवं वीर्यं चित्तं मीमांसामधिपतिं कृत्वा निष्पन्नस्समाधिः स एष च्छन्दवीर्यचित्तमीमांसासमाधिश्चतुर्विधः। ibid, p. 359, lines 3-6; cp. Ada., p. 115 : चत्वार ऋद्धिपादाः कतमे। छन्दसमाधिः वीर्य····चित्त ····मीमांसा समाधिः। एतेभ्यः सर्वपुण्यगुणप्राप्तिरित्युच्यते ऋद्धिपादाः। छन्दसमाधिप्रहाणसंस्कार समन्वागतः प्रथम ऋद्धिपादः। इच्छाकरणादुच्यते च्छन्दः। चित्तं न विक्षिप्तं भवतीत्युच्यते समाधिः। छन्दः वीर्यं स्मृतिः प्रज्ञा प्रीतिः प्रस्रब्धिः—इत्येते सर्वसंस्काराः छन्दसमाधिसहगताः। एवं वीर्यं चित्तमीमांसाच्छन्दाधिमात्रच्छन्दतः। समाधिलाभ इत्युच्यते च्छन्दसमाधिः। एवं वीर्यचित्तमीमांसासमाधयः। इति चत्वार ऋद्धिपादाः।; see also, Adv., p. 359, lines 7-17; Asm., p. 73 : चतुर्ऋद्धिपादानामालम्बनं कतमत्। निष्पन्नेन समाधिना यत्करणीयं कृत्यम्। स्वभावः कतमः। समाधिः। सहायः कतमः। छन्दो वीर्यं चित्तं मीमांसा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः॥ छन्दसमाधिः कतमः। यत्सत्कृत्यप्रयोगमागम्य स्पृशति चित्तस्यैकाग्रताम्। वीर्यसमाधिः····सातत्यप्रयोगमागम्य स्पृशति चित्तस्यैकाग्रताम्। चित्तसमाधिः···· पूर्वसमाधिभावनामागम्य स्वरसेन स्पृशति चित्तस्यैकाग्रताम्। मीमांसासमाधिः ····देशनाधर्मश्रवणमागम्य प्रत्यात्मं प्रति संख्याय स्पृशति चित्तस्यैकाग्रताम्॥ ····भावना कतमा। अष्टानां प्रहाणसंस्काराणामभ्यासः। कतमे अष्टौ। छन्दः व्यायामः श्रद्धा प्रश्रब्धिः स्मृति सम्प्रजन्यं चेतना उपेक्षा च।····

1. This may be deleted.

2. MS seems to have omitted here वीर्य-चित्त.

10B—5// तावदयं छन्दमेव केवलं ज[1]//[1]नयति। छन्दजातश्च तान्पापकानकुशलान्धर्मान् स्वभावतो, निदानत, आदीनवतः, प्रतिपक्षतश्च। सम्यगेवोपनिदध्याति। एकाग्रां स्मृतिं प्रवर्त्तयति। एवं कुशला[न्]धर्मास्स्व(धर्मान्स्व)-भावतो निदानतश्च। अकुशलतो निःसरणतः सम्यगेवोपनिदध्या(धा)ति। एकाग्रां स्मृतिमवस्थापयति। तद्बहुलाकारामेका[2]ग्रतां स्पृशति। समवस्थानसमुदाचारदूरीकरणयोगेन। न त्वस्याप्यनुशयमुत्पादयति। पापकानामकुशलानां धर्माणामयमप्युच्यते। छन्दाधिपतेयः। स(सा) अतीता(ते) वा, अनागतप्रत्युत्पन्ने वा पुनरालम्बने पापकाकुशलाधर्मास्थानीये(लधर्मस्थानीये) मृदुमध्याधिमात्रक्लेशसमवस्थानीये, अनुत्प[3]न्नस्य वा अनुत्पादाय, उत्पन्नस्य वा प्रहाणाय, व्यायच्छमानो वीर्यमारममाणः। तत्रालम्बने विचरत्यन्तस्य वालम्बनस्य स्वभावतो निदानतः प्रतिपक्षतश्च। सम्यगुपनिध्यायतः। एकाग्रां स्मृतिमुपस्थापयतो यत्तद्बहुलविहारिणश्चित्तैकाग्रता उत्पद्यते। समवस्थानदूरीकरणयोगे[4]न त्वस्याप्यनुशयमुद्घातयति। पापकानामकुशलानां धर्माणामयं वीर्याधिपतेयः। समाधि[ः।]लीनम्वा पुनश्चित्तं प्रगृह्णतः। प्रगृहीतं चित्तं समादधतः। कालेन च कालमध्युपेक्षितः। यत्पापकानामकुशला-

1. MS. blurred and illegible; the first line is very dim and its ink is washed out.

नान्धर्माणां पापकाकुशला(ल)धर्मस्थानीयान्वयात् कुशल[त]: । कुशलान्धर्मान् [5]कुशलाकुशलस्थानीयांश्च धर्मान् स्वभावतो, निदानत, आदीनवत:, अनुशंसत:, प्रतिपक्षतो, नि:सरणत:, सम्यगुपनि(द)-ध्यायत: । एकाग्रतां स्मृतिमुपस्थापयत: । तद्बहुलविहारिणो या उत्पद्यन्ते चित्तस्यैकाग्रता: विस्तरेण यावदयं । चित्ताधिपतेय: समाधि: ।

तत्र ये पापकाकु[6]शला(ल)धर्मस्थानीया धर्मा भवन्ति । अयोनिशो मनसिकुर्व्वत: । त एव कुशलधर्म्मस्थानीया भवन्ति । योनिशो मनसिकुर्व्वत: । तस्यैवं समवस्थानेषु दूरीकृतेषु । समवस्थानप्रतिपक्षे च । समाधिप्रमुखेषु धर्मेष्वनुत्पन्नेषु ते पापका अकुशला धर्मा धर्मं मु[7]दा हरन्ति । तस्यैवं भवति । किं सत: सम्विद्यमानान्पापकानकुशलान्धर्मान् न प्रतिसंवेदयाम्याहोस्विदसत: । असंविद्यमानान्यन्व(न्न्व)हं परिमीमान्से(मांसये)यं । स मीमान्सा(मांसा)मनस्कारमधि[8][1]पतिं कृत्वा प्रहीणाप्रहीणतां मीमान्स(मांस)-ते । सम्यगेवोपनिध्यापयति । तद्बहुलविहारी च
10A—6// [स्पृशति[2]] //[1][3] चित्तस्यैकाग्रतां येन च निरभिमानो भवति । पर्यवस्थानमात्रकाच्च्य(च्च)चित्तं विमुक्तं,

1. MS. dim, ink washed out, letters illegible.
2. Letters illegible, ink completely washed out.
3. MS. photo blurred and indistinct, often illegible.

न तु सर्व्वेण सर्व्वमनुशयेभ्यः। तत्प्रतिपक्षाश्च मे समाधिप्रमुखाः कुशला धर्मा[श्] च प्रतिलब्धा, भाविता, न त्वनुशयप्रातिपाक्षिका इति यथाभूतं प्रजानाति। अयमस्योच्यते मीमान्सा(मांसा)समाधिः।

स तं चतुर्व्विधं समाधि[2]मधिपतिं कृत्वा पर्यवस्थानेषु दूरीकृतेषु। सर्व्वेण सर्वमनुशयसमुद्घ(ा)ताय पापकानामकुशलानां धर्माणां, तत्प्रातिपाक्षिकाणाञ्च कुशलानां (।) धर्माणां समुदागमाय[च्]छन्दं जनयति। व्यायच्छत इति विस्तरेण चतुर्भिः सम्यक्प्रहाणैः प्रयुज्यते। तथा प्रयुज्यमानस्य तथभूतस्या[3]**ष्टौ प्रहाणसंस्कारा भवन्ति**[1]। ये[अ]स्यानुशयसमुद्घाताय च प्रवर्त्तन्ते। समाधिपरिपूरये च तद्यथा—**छन्दः**[2]

---

1. The eight prahāṇa-saṁskāras are : छन्दः, व्यायाम, श्रद्धा, प्रस्रब्धि, स्मृति, सम्प्रजन्य, चेतना and उपेक्षा, Asm., p. 73; cp. Ads., VII.34; Adv., p. 359.7 sq. : प्रहाणसंस्कारैः च्छन्दवीर्यस्मृतिबुद्धिश्रद्धाप्रश्रब्धिचेतनोपेक्षाभिः प्रत्येकं ममन्वागतः मर्वगुणसमृद्धिनिष्पादको भवति छन्दवीर्यमीमांमापग्ग्रिहमामर्थ्यात्; Asaṅga further divides these eight dharmas into four sub-groups : व्यावसायिक, अनुग्राहक, औपनिबन्धिक and प्रातिपक्षिक, ibid, loc. cit.
2. cp. (i) छन्दोऽभिप्रेते वस्तुन्यभिलाषः। अभिप्रेते वस्तुन्यभिलाष इति प्रतिनियतविषयत्वं ज्ञापितं भवति, अनभिप्रेते छन्दाभावात्। दर्शनश्रवणादिक्रियाविषयत्वेन यदभिमतं वस्तु तदभिप्रेतम्। तत्र दर्शनश्रवणादि प्रार्थना छन्दः। स च वीर्यारम्भसंनिश्रयदानकर्मकः। Tvbh., 10, pp. 30-1; छन्द····ईप्सिते तत्तदुपसंहृता कर्तृकामता। वीर्यादानसन्निश्रयदानकर्मकः। Asm., p. 6;
   (ii) व्यायाम is another term for वीर्य, i.e. उत्साह, *vide* BHSD s.v. Vyāyāma;

*(contd. on p. 319)*

कदाचित्समाधिं परिपूरयिष्यामि। अनुशयांश्च प्रहास्यामि। पापकानामकुशलानां धर्माणां व्यायामो यावत्प्रतिपक्षभावनायामविन्यस्तप्रयोगया, श्रद्धायाम-

---

(contd. from p. 318)

(iii) श्रद्धा कर्मफलसत्यरत्नेष्वभिसंप्रत्ययः प्रसादश्चेतसोऽभिलाषः। श्रद्धा हि त्रिधा प्रवर्त्तते। सति वस्तुनि गुणवत्यगुणवति वा संप्रत्ययाकारा। सति गुणवति च प्रसादाकारा। सति गुणवति च प्राप्तुमुत्पादयितुं वा शक्येऽभिलाषाकारा। चेतसः प्रसाद इति श्रद्धा हि चित्तकालुष्यवैरोधिकीत्यतस्तत्संप्रयोगे क्लेशोपक्लेशमलकालुष्यविगमाच्चित्तं श्रद्धामागम्य प्रसीदतीति चेतसः प्रसाद उच्यते, Tvbh., p. 32; श्रद्धा···· अस्तित्व-गुणवावशक्तत्वेष्वभिसंप्रत्ययः प्रसादोऽभिलाषः। छन्दसन्निश्रयदानकर्मिका, Asm., p. 6;

(iv) प्रश्रब्धिः दौष्ठुल्यप्रतिपक्षः कायचित्तकर्मण्यता। दौष्ठुल्यं कायचित्तयोरकर्मण्यता सांक्लेशिकधर्मबीजानि च। तदपगमे प्रश्रब्धिसद्भावात्। ····Tvbh., p. 33; प्रश्रब्धिः····कायचित्तदौष्ठुल्यानां प्रतिप्रश्रब्धेः कायचित्तकर्मण्यता सर्वावरणनिष्कर्षणकर्मिका। Asm., p. 6;

(v) स्मृतिः संस्तुते वस्तुन्यसंप्रमोषश्चेतसोऽभिलपनता। संस्तुतं वस्तु पूर्वानुभूतम्। आलम्बनग्रहणाविप्रणाशकारणत्वादसंप्रमोषः। पूर्वगृहीतस्य वस्तुनः पुनः पुनरालम्बनाकारस्मरणमभिलपनता। सा पुनरविक्षेपकर्मिका। आलम्बनाभिलपने सति चित्तस्यालम्बनान्तरे आकारान्तरे वा विक्षेपाभावादविक्षेपकर्मिका, Tvbh., p. 31; स्मृतिः····संस्मृते वस्तुनि चेतसः असंप्रमोषोऽविक्षेपकर्मिका।, Asm., p. 6; see, Yogasthāna, I;

(vi) on सम्प्रजन्य see Yogasthāna, I;

(vii) चेतना····चित्ताभिसंस्कारो मनस्कर्म। कुशलाकुशलाव्याकृतेषु चित्तप्रेरणकर्मिका। ibid, pp. 5-6; cp. Tvbh., p. 24;

(viii) cp. Asm., p. 6: उपेक्षा····सवीर्यकानलोभद्वेषामोहान्निश्रित्य या संक्लिष्ट विहारवैरोधिकी चित्तसमता चित्तप्रशठता चित्तस्यानाभोगावस्थितता। संक्लेशानवकाशसन्निश्रयदानकर्मिका।, for details and elaboration, see, Vsm., pp. 322-5 sq., cp. pp. 266-7; see also Vbh. p. 259 sq., 255.56; Psm., pp. 466-76.

विन्यस्त[4]योगस्य विहरतः। उत्तरे[अ]धिगमे **श्रद्दानता।** अभिसंप्रत्ययः।

तत्र **प्रश्रब्धिः।** यच्छ्रद्धाप्रमादपूर्व्वंगमं प्रामोद्यं, प्रीतिः, प्रीतमनसश्चानुपूर्व्वा पापकाकुशल(ा)धर्मपक्षस्य दौष्ठुल्यस्य प्रतिप्रश्रब्धिः।

तत्र **स्मृतिर्या** नवाकारा नवाकारायाश्चित्तस्थितेः शमथपक्ष्यायाः संग्राहिका।

**छंदसं[5]प्रजन्ये।** या विपश्यनापक्ष्या प्रज्ञा। तत्र **चेतनायाश्चित्ता**भिसंस्कारः। प्रहीणाप्रहीणतो मीमान्स(मांस)मानस्य यश्चित्ताभिसंस्कारः शमथ-विपश्यनानुकूलः कायकर्म वाक्कर्म समुत्थापयति।

तत्रोपेक्षया अतीतानागतप्रत्युत्पन्नेषु पापकाकुश-ल(ा)धर्म(ा)स्थानीयेषु चरतः चित्ताभिसंक्लेशश्चि[6]-त्तंगमता। आभ्यां द्वाभ्यां कारणाभ्यां प्रहीणतामनु-शयानां परिच्छिनत्ति जानाति। यदुत विषयविप-रोक्षया चेतनया विषयविपरोक्षया चा(चो)पेक्षया। इमे[अ]ष्टौ प्रहाणसंस्कारा भवन्ति। ते चैतेष्टौ (स चैषोऽष्ट) प्रहाणसंस्कारयोगो भवत्यनुशयसमुद्घाताय। तत्र छन्द(च्छन्द)श्च, एत(ष)एव यो व्यायामः, इदं वीर्यं, या[7]श्रद्धा सा शुद्धा, या च प्रश्रब्धिर्या च स्मृतिर्यच्च संप्रजन्यं। या च चेतना, या चोपेक्षा। अय(इदं ?)मुपादाय। तदिदं सर्वमभिसमस्य ये च पूर्व-काश्छन्दसमाधयः। ये च इमे प्रहाणसंस्काराः प्रहीणे-

ष्वनुशयेषु, परिक्षिप्ते समाधौ, छन्दसमाधिप्रहाण-
संस्कारसमन्वागत ऋद्धिपाद इत्युच्यन्ते(ते)। वीर्य-
10B—6// चित्तमीमा//[1]न्सा(मांसा) समाधिप्रहाणसंस्कार
समन्वागत ऋद्धिपाद इत्युच्यते[1]।

**केन कारणेन ऋद्धिपाद इत्युच्ते।** आह। तद्यथा। यस्य पादः सम्विद्यते सो[अ]भिक्रमप्रतिक्रम-(म)पराक्रमसमर्थो भवति। एवमेव यस्यैते धर्माः संविद्यन्ते। एष च समाधिः संविद्ययते। परिपूर्णः-[।]स एवं परिशुद्धे चित्ते, पर्यवदाते, अनं[2]गणे, विगतोपक्लेशे, ऋजुभूते कर्मण्यस्थिते, आनिंज्यप्राप्ते, अभिक्रमप्रतिक्रमसमर्थो भवति। लोकोत्तराणां धर्माणां प्राप्तये, स्पर्शनायै। एषा हि परा ऋद्धिः, परा समृद्धिः। यदुत लोकोत्तरा धर्मास्तेनोच्यन्ते(ते?)-ऋद्धिपाद इति॥

स[2] एवं समाधिप्रतिष्ठितः। समाधिं निश्रित्य।

1. cp. S. N., IV.228-31, 238, 241; Vbh., pp. 264-75; Psm., ibid; Vsm., ibid.
2. From here begins the account of the five indriyas; the five इन्द्रियs are श्रद्धेन्द्रियं, वीर्येन्द्रियं, स्मृतीन्द्रियं, समाधीन्द्रियं and प्रज्ञेन्द्रियं, see, S. N., IV.169-75; SVA (pp. 127-31) ad इन्द्रियविभंग of Vbh.; cp. Adv., p. 45, Vs. 76 : ऐश्वर्यार्थो विपश्चिद्भिरिन्द्रियार्थो विकल्प्यते।; cp. Asm., p. 30 : विषयग्रहणाधिपतितोपि कुशलप्रबन्धाधिपतितोपि निकायसभागस्थानाधिपतितोऽपि शुभाशुभकर्मफलभागाधिपतितोऽपि, लौकिकवैराग्याभिपतितोऽभिलोकात्तरवैराग्याधिपतितोऽपि इन्द्रियं द्रष्टव्यम्।;

*(contd. on p. 322)*

[अधि]चित्तं शिक्षा[या]मधिप्रज्ञं[3]शिक्षायां योगं करोति । तत्रास्य योगं कुर्व्वतः । परेषां चाधिगमे शास्तुः श्रावकाणां च यो[अ]भिसंप्रत्ययः । प्रसादः, श्रद्धानता । समापत्त्यर्थेन **श्रद्धेन्द्रियमित्युच्यते** । कुत्र पुनरस्याधिपत्यं । आह । लोकोत्तरधर्मोत्पत्तिप्रमुखानां वीर्यस्मृतिसमाधिप्रज्ञानामुत्पत्तये आधिपत्यं । ये [अ]-पि ते वीर्यादयः[4]तेषामपि लोकोत्तरधर्मोत्पत्तये आधिपत्यं । यावत् प्रतिपत्तये आधिपत्यं । यावत् प्रज्ञया लोकोत्तरधर्मोत्पत्तये । आधिपत्यं । तैनैतानि श्रद्धादीनि पंचेन्द्रियाणि भवन्ति[1] ।

या पुनः पूर्व्वेणापरं विशेषाधिगमं सजानतः-(संजानतः) । तदनुसारेण तदुत्तरलोकोत्तरधर्माधि-गमायाभिसंप्रत्ययः, [5]प्रसादः, श्रद्दधानता । सा अनवमृद्यनार्थेन[2] **श्रद्धाबलमित्युच्यते** । केन पुनर्न

---

*(contd. from p. 321)*

Ada., p. 75 : इन्द्रियार्थः कतमः । बलकत्वं पटुत्वञ्चेति····; for different interpretations of the word indriya, see AKV, II.1, p. 1 sq.; these five इन्द्रियs are also called the five balas, S. N., IV.214 sq. (balasaṁyutta); Psm., pp. 425-6; see also Vsm., p. 160.

1. cp. Ada., p. 115 : श्रद्धा वीर्यं स्मृतिः समाधिः प्रज्ञा चेत्युच्यन्ते पंचेन्द्रियाणि । चतुर्ष्वक्षोभ्यश्रद्धेषु या श्रद्धा सोच्यते श्रद्धेन्द्रियं । चतुर्षु सम्यक्प्रहाणेषु वीर्यमुच्यते वीर्येन्द्रियं । चतुर्षु समृत्युपस्थानेषु स्मृत्यसंप्रमोष उच्यते स्मृती-न्द्रियम् । चतुः सत्येषु प्रज्ञोच्यते प्रज्ञेन्द्रियं इन्द्रियं(इन्दतेः) दक्षत्वात् क्षिप्रत्वात् अप्रियत्वात् । इतीन्द्रियार्थः ।; cp. also, Adv., p. 48.
2. cp. ibid, loc. cit. : श्रद्धादीनि पञ्चबलानि । पापकाकुशलधर्मैरपरिक्षेयमिति

*(contd. on p. 323)*

शक्यते। अवमृदितुं। असंहाया(र्या) सा श्रद्धा देवेन वा, मारेण वा, ब्रह्मणा वा। केनचिद्वा पुनर्लोके, सह धर्मेण क्लेशपर्यवस्थानेन वा तेन सा अनवमृद्येत्युच्यते। तत्प्रमुखास्तत्पूर्व्वंगमा ये वीर्यादयस्तेपि[6]बलानीत्युच्यन्ते। तैः स **बलैर्बलवान्** सर्व्वं मारबलं विजित्य प्रयुज्यते। आस्रवाणां क्षयाय। तस्माद्बलानीत्युच्यन्ते।

तत्र यश्च(यच्च) श्रद्धेन्द्रियं, यच्च श्रद्धाबलं चतुर्ष्वेतदवेत्य प्रसादेषु द्रष्टव्यं। तत्कस्य हेतोः। योऽसौ सम्यक्त्वन्यामावक्रान्तस्यावेत्य प्रसादः। स तद्धेतुकस्तत्प्रत्ययस्तन्निदानः। [7] तस्माद्धेतुफलसम्बन्धेन तस्यास्तदधिपतिफलमिति कृत्वा। तत्र द्रष्टव्यमित्**युक्तं भगवता।** न तु तच्छरीरतां तल्लक्षणतां [।] तत्र **वीर्येन्द्रियं** चतुर्षु सम्यक्प्रहाणेषु द्रष्टव्यं। (तत्कस्य हेतोः[1]) यानि(तानि)कतमानि। सम्यक्प्रहाणानि
10A—7// यानि दर्शनप्रहातव्यक्लेशप्रहाणाय//[1]प्रायोगिकाणि सम्यक्प्रहाणानि, तान्यत्र सम्यक्प्रहाणान्यभिप्रेतानि तानि ह्यत्यन्ततायै पापकानामकुशलानां धर्माणां प्रहाणाय सम्वर्त्तन्ते॥

तत्र **स्मृतीन्द्रियं** चतुर्षु स्मृत्युपस्थानेषु द्रष्टव्य-

---

*(contd. from p. 322)*

बलं। परित्तानि भवन्तीन्द्रियाणि महान्ति भवन्ति बलानि; Asm., p. 74 : यथा पञ्चेन्द्रियाणि तथा पञ्च बलानि। एषां विशेषः तैः विपक्षान्तराय-निर्ल्लेखोऽनवमृद्यतेति बलानीत्युच्यन्ते। cp. Adv., p. 361.3-4.

1. This may be deleted.

मितीमानि चत्वारि स्मृत्युपस्थानान्यविशेषविशेष विपर्यासप्रहाणाय सम्वर्त्तन्ते ।

तत्र समाधीन्द्रियं चतुर्षु (स्था) [1]ध्यानेषु[2]द्रष्टव्यं । यानि ध्यानान्यगामितायां प्रायोगिकानि (णि) तत्र प्रज्ञेन्द्रियं चतुर्ष्वार्यसत्येषु द्रष्टव्यमिति । यत्सत्यज्ञानं चतुर्ण्णामार्यसत्यानामभिसमाय सम्वर्त्तन्ते- (ते) । श्रामण्यफलप्राप्तते, प (य) पेन्द्रियाणि[2] । एवं बलानि वेदितव्यानि । स एषामिन्द्रियाणामे- तेषां च बलानामासेवनान्वयाद्भावनान्वयादबहु[3]- लीकारान्वयान्निर्वेधभागीयानि कुशलमूलान्युत्पा- दयति ।[3] मृदुमध्याधिमात्राणि । तद्यथा ऊष्म- गतानि । मूर्धगतानि । मूर्धानः सत्यानुलोमाः क्षान्तयः लौकिकान (द) ग्रधर्मात्तद्यथा । कश्चिदेव पुरुषः अग्निना अग्निकायं कर्त्तुकामः । अग्निनार्थी अधरारण्यामुत्तरारणिं प्रतिष्ठाप्यास[-]न्नुत्स[4][1]हते, घटते, व्यायच्छते । तथोत्सहतो, घटतो, व्यायच्छ- तश्च । तत्प्रथमतो[ऽ]धरारण्यामूष्मा जायते । सैव

1. This may be deleted.
2. MS. blurred, letters illegible.
3. Asaṅga remarks : श्रद्धेन्द्रियेण सत्येषु अभिसंप्रत्ययसमुत्थानं प्रयोग- भावना । वीर्येन्द्रियेण सत्येपूत्पन्नस्याभिसंप्रत्ययस्याभिसंबोध्यर्थं व्यायामसमुत्थान- प्रयोगभावना । स्मृतीन्द्रियेण सत्येष्वारब्धवीर्यस्य स्मृतिसंप्रयोगार्थमसंमोषस- मुत्थानप्रयोगभावना । समाधीन्द्रियेण सत्येषु संप्रयुक्तस्मृतेः चित्तैकाग्रतासमुत्थान- प्रयोगभावना । प्रज्ञेन्द्रियेण सत्येषु समाहितचित्तस्य प्रविचयसमुत्थानप्रयोग- भावना । भावना फलं····सत्याभिसमयसमुत्थानतः ऊष्मगतमूर्धपरिकर्मतश्च क्षान्तिर्लौकिकाग्रधर्मनिर्हारः ॥ Asm., p. 74; see Adv., pp. 359-61.

चोष्मा । अभिवर्धमाना ऊर्ध्वमागच्छति । भूयस्या मात्रया अभिवर्द्धमाना [।] निरर्च्चिषमग्निं पातयत्यग्नि-पतनसमनन्तरमेव चार्चिर्जायते । यथा अर्च्चिषा उत्प-न्नया (नेन) जातया (तेन) संजातया (तेन) अग्निका[5]र्यं करोति । यथा अभिमन्थन व्यायाम एवं पञ्चानामि-न्द्रियाणामासेवना द्रष्टव्या । यथा अधरण्या तत्प्रथमत एव ऊष्मगतं भवति । एवमूष्मगतानि द्रष्टव्यानि । पूर्व्वंगमानि । निमित्तभूतानि । अग्निस्थानीयानामना-स्रवाणां धर्माणां क्लेशपरिदाहकानामुत्पत्तये । यथा तस्यैवोष्मण ऊर्ध्वं[मा[1]]गमनमेवं **मूर्धानो**[6]द्रष्टव्याः ।

यथा धूमप्रादुर्भाव एवं सत्यानुलोमाः क्षान्तयो द्रष्टव्याः ।। यथाग्नेः पतनं निरर्च्चिष एवं लौकिका अग्रधर्मा द्रष्टव्याः ।

यथा तदनन्तरमर्च्चिषः (।) उत्पाद एवं लोको-त्तरा अनास्रवा धर्मा द्रष्टव्या (।) ये लौकिका अग्रधर्मसगृहीतानां पञ्चानामिन्द्रियाणां समनन्तर-मुत्पद्यन्ते । ते पुनः कतमे[7]आह । **सप्तबोध्यं-गानि**[2] । योऽसौ यथाभूतावबोधः । सम्यक्त्वन्या-

1. Added by a separate hand.
2. cp. S. N., IV.61 sq. (bojjhaṅgasamyutta): "सन्तिमे, आवुसो, बोज्झङ्गा । कतमे सत्त ? सति सम्बोज्झङ्गो, विरियसम्बोज्झङ्गो, पीतिसम्बोज्झङ्गो, पस्सद्धिसम्बोज्झङ्गो, समाधिसम्बोज्झङ्गो, उपेक्खासम्बो-ज्झङ्गो····(p. 67); for an elaborate account of the

(contd. on p. 326)

मावक्रान्तस्य पुद्गलस्यैतान्यंगानि [।] स हि यथाभूतावबोधः। सप्तांगपरिगृहीतः। त्रिभिः शमथपक्ष्यैः त्रिभिर्विपश्यनापक्ष्यैरेकेनोभयपक्ष्येण[।]तस्माद्बोध्यंगानीत्युच्यन्ते ।

10B—7// तत्र यश्च धर्मविनयः। //[1] यच्च वीर्यं, या च प्रीतिरितीमानि त्रीणि विपश्यनापक्ष्याणि। तत्र या च प्रश्रब्धिर्यश्च समाधिया चोपेक्षा इतीमानि त्रीणि शमथपक्ष्याणि [।] स्मृतिरभयपक्ष्या(स्) सर्व्वत्रगेत्युच्यते। स तस्मिन् समये तत्प्रथमतो बोध्यंगलाभाच्छैक्षो भवति। **प्रातिपदः** [।] दर्शनप्रहातव्याश्चास्य क्लेशाः प्रहीणा भवन्ति।[1] भावनाप्रहातव्या-

---

*(contd. from p. 325)*

bodhyaṅgas in the theravāda Pāli literature, see, Psm., pp. 363-78; Vbh., pp. 276-84; SVA, pp. 311-20; AS, AKB and AKV, VI.71; Adv., p. 361; cp. AKB, VI.70 : तत्र धर्मविचयसम्बोध्यङ्गं बोधिः, बोध्यङ्गञ्च, सम्यग्दृष्टिमार्गो मार्गांगञ्चेति वैभाषिकाः। Ada., pp. 115-6 (XIV.12) : स्मृतिः धर्मविचयः वीर्यं प्रीतिः प्रश्रब्धिः समाधिः उपेक्षा चेति सप्त बोध्यङ्गानि।····; Asm., p. 74 : सप्तबोध्यङ्गानामालम्बनं कतमत्। चतुर्णामार्यसत्यानां यथाभूतता। स्वभावः कतमः। स्मृतिः····उपेक्षा च। स्मृतिः संनिश्रयाङ्गम्। धर्मविचयः स्वभावाङ्गम्। वीर्यं निर्याणाङ्गम्। प्रीतिरनुशंसाङ्गम्। प्रश्रब्धिः समाधिरुपेक्षा चासंक्लेशाङ्गम्। असंक्लेशतः असंक्लेशाश्रयतः असंक्लेशस्वभावतश्च। सहायः—तत्सम्प्रयुक्ताश्चित्तचैतसिका धर्माः। भावना विवेकनिश्रितं विरागनिश्रितं निरोधनिश्रितं व्यवसर्गपरिणतं स्मृतिसंबोध्यङ्गम्।····यावत् उपेक्षा संबोध्यङ्गम्। एभिश्चतुर्भिः पदार्थैः चतुःसत्यालम्बना बोध्यङ्गभावना परिदीपिता ॥

1. cp. Ada., p. 116 : विविधप्रज्ञाभिः ध्यानसमापत्तिबलप्राप्तिः। सर्वक्लेशहानिः। फलं। cp. also Asm., ibid, भावनाफलं दर्शनहेयानां प्रहाणम्।

[2]श्चावशिष्टाः [।]स तेषां प्रहाणाय त्रिस्कन्ध-मार्याष्टंगं मार्गं भावयति ।

तत्र या च सम्यग्दृष्टिर्यश्च सम्यक्संकल्पः, यश्च सम्यग्व्यायामः । **अयं प्रज्ञास्कन्धः ।**

तत्र ये सम्यक्कर्मान्ताजीवाः । अयं **शीलस्कन्धः ।**

तत्र या च सम्यक्स्मृतिः, यश्च सम्यक्समाधिरयं **समाधिस्कन्धः ।**[2]

केन कारणेनार्याष्टांगो मार्ग इत्युच्य[3]ते । आह् । आर्यस्य शैक्षस्य दृष्टपदस्यायं मार्ग इयं प्रतिपदष्टाभिरंगैः संगृहीता(:) ।। अपरिशेषः । सर्व्वक्लेशप्रहाणाय विमुक्तिसाक्षात्क्रियायै तेनोच्यते **आर्याष्टांगो मार्गः**[3] ।

तत्र यश्च बोध्यंगकाले तत्त्वावबोधः (।।) प्रतिलब्धः, प्रतिलभ्य च यत्तस्यैव प्रज्ञया व्यवस्थानं करोति ।। यथा[4]विगतस्यावबोधस्य, तदुभयमे-कत्यमभिसंक्षिप्य सम्यग्दृष्टिरित्युच्यते । तां सम्यग्दृष्टिमधिपतिं कृत्वा । यन्नैष्क्रम्यसंकल्पं संकल्पयत्यव्यापादसंकल्पमविहिन्सा (हिंसा) संकल्पमय-मुच्यते **सम्यक्संकल्पः** । स चेत्तावद्वितर्केषु चित्तं

1. see, S. N., IV.361; Vbh., pp. 133-5, 285-90; Psm., pp. 327-31, 334-5; SVA, p. 321 sq.
2. cp. Adv., p. 373, 72, 2. cp. RAK, V.59.
3. *Vide*, S. N., IV.361; for references, *vide* PTSD s.v. magga; Psm., 330.12 sq.

क्रामति। स एवं रूपाद्वितर्काद्वितर्कयति [।] स चेत्पुनः कथायां चित्तं [5]क्रामति। सम्यग्दृष्टिमधिपतिं कृत्वा तेने(न)कुशलात्संकल्पां(लसंकल्पां) धर्म्यां कथां कथयति। सास्य भवति **सम्यग्वाक्**।

स चेच्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैरर्तीर्थी(र्थी) भवति। तत्पर्येषणाम्वापद्यते। सोभिक्रमः। प्रतिक्रमे संप्रजानम्वि(द्वि)हारी भवत्यालोकितव्यवलोकिते [।] तस्मिमजित(संमिजित) [6]प्रसारिते। सांघटीचीवरपात्रधारणे, अशितपीतखादितास्वादिते। विहारगतो वा पुनः पर्येषितेषु चीवरादिषु गते, स्थिते, निषण्णे। यावन्निद्राक्लम[प्रति[1]] विनोदने संप्रजानद्विहारी भवति। अयमस्योच्यते **सम्यक्कर्मान्तः**। स तच्चीवरं यावद्भैषज्यपरिष्कारं धर्मेण पर्येषते। यावन्मिथ्या [7][......[2]] धर्मविवर्जितः सोस्य भवति। **सम्यगाजीवः**।

ये पुनर्विरतिसंगृहीताः। सम्यक्कर्मान्ताजीवाः। ते अनेन पूर्व्वमेव मनस्कारलाभाद्बोध्यंगैरेव सह लब्धा भवन्ति। योप्य(ा)पकान्तानि शीलान्युच्यन्ते। केन

10A—8// कारणेन दीर्घं //[1] कालं ह्येतदार्याणां सतां सम्यग्गतानामिष्टं कान्तं प्रियं मन आपं कच्चिदहं तद्वाग्दुश्चरितस्य, कायदुश्चरितस्य, मिथ्याजीवस्याकरणं।

---

1. A separate hand adds this.
2. MS. leaf obstructed by another leaf, syllables illegible.

सम्वरं प्रतिलभेयं । यदस्य दीर्घरात्रमिष्टं । कान्तं प्रियं मन आपं तदनेन तस्मिन्समये प्रतिलब्धं भवति । **तस्मादापकान्तमित्युच्यते** । तथा हि स लब्धेष्वापकान्ते[2]षु शीलेषु, न संप्रजा[ना]नो मृषां वाचं भाषते । न संविध्य प्राणिनं (।) जीविताद् व्यपरोपयति । नादत्तमादत्ते[।]न (।)कामेषु मिथ्या चरति । न चाधर्मेण चीवरादीनि पर्येषते । इति तान्यापकान्तानि शीलान्यधिपतिं कृत्वा मार्गभावनाकाले यावत्प्रवर्तते । यच्च कायकर्म यश्चाजीवः तेपि सम्यग्वाक्कर्मान्ता[3]जीवा इत्युच्यन्ते ।[1]

तस्य सम्यगदृष्टिसम्यक्संकल्प(: ।[2]) वाक्कर्मान्ताजीवसन्निश्रयेण भावनाप्रयुक्तस्य । यच्छन्दो (यश्छन्दो), वीर्यं, व्यायामो, निष्क्रमः, पराक्रमस्थाम आरंभः । चेतसः संप्रग्रहः । सातत्यमयमुच्यते । सम्यग्व्यायामशमथः । यच्चत्वारि स्मृत्युपस्थानान्यधिपतिं कृत्वा अविपर्यायसंगृहीता स्मृतिः[4]नवाकारा नवाकारचित्तस्थितिसंग्राहिका[।]इयमुच्यते **सम्यक्स्मृतिः** । सम्यक्समाधिश्च ।

---

1. cp. Asm., pp. 74-5 : सम्यग्दृष्टिः परिच्छेदाङ्गम् । सम्यक्सङ्कल्पः परसंप्रापणाङ्गम् सम्यग्वाक्कर्मान्ताजीवाः परसंप्रत्ययाङ्गम् । दर्शनशीलाजीवविशुद्धितामुपादाय । सम्यग् व्यायामः क्लेशावरणविशोधनाङ्गम् ।; for a detailed account of the eight mārgāṅgas, see, AVS, 7, MSS, I.315-6; Vsm., XVI.76-83, see *supra*, pp. 326-7 sq.
2. May be deleted.

तदेतत्सर्व्वमभिसमस्य आर्याष्टांगो मार्गश्चारकरणीये च विहारकरणीये चावस्थितः ।

तत्र सम्यग्वाक्कर्मान्ताजीवाः **चारकरणीये** [।]

**विहारकरणीयं** पुनर्द्विविधं । शमथो विपश्यना च [।] तत्र या [5] सम्यग्दृष्टिः । यश्च सम्यक्संकल्पः । यश्च सम्यग्व्यायाम इयं **विपश्यना** ।

तत्र या च सम्यक्समृतिर्यश्च सम्यक्समाधिस्यं **शमथः** । एवं परिशुद्धान् सम्यग्वाक्कर्मान्ताजीवान्निश्रित्य शमथविपश्यनां भावयति । कालेन कालं निरवशेषसंयोजनप्रहाणं साक्षात्करोत्यग्रफलमर्हत्त्वं, प्राप्नोति ।[6] प्राकर्षिकश्च (कश्च) भावनामार्गः- (र्गं) [।] कालान्तराभ्यासेन क्लेशान् प्रजहाति । ज्ञानमात्रप्रतिबद्धवस्तुदर्शनमार्गः ज्ञानोत्पत्तिमात्रेण क्लेशान् प्रजहात्यनेन कारणेन वाक्कर्मान्ताजीवा भावनामार्गे व्यवस्थापिताः ।[1]

इति य एवमेषामनया आनुपूर्व्या सप्तत्रिंशतां बोधपक्ष्याणां धर्माणामभ्यासः,[7]परिचयः । इयमुच्यते बोधिपक्ष्या भावना ।[2]

---

1. cp. Asm., p. 77, para 1; p. 75.4-6.
2. cp. Ada., p. 116 : श्रद्धा वीर्यं स्मृतिः समाधिः प्रज्ञा प्रीतिः प्रश्रब्धिः उपेक्षा संकल्पः शीलं ।····; for details, see ibid, pp. 116-7 (XIV.14-5); there are seven kramas in the contemplation of the thirty-seven bodhyaṅgas :

(contd. on p. 331)

**तत्र भावनाफलं कतमत्** । आह । **चत्वारि श्रामण्यफलानि । स्रोत आपत्तिफलं, सकृदागामिफलं ।**
10B—8// **अनागामिफलमग्रफ//[1]लमर्हत्त्वं ।**

**तत्र कतमच्छ्रामण्यं**[1] । **कतमत्फलं** । आह । मार्गः, क्लेशप्रहाणं फलं । अपि च पूर्व्वोत्पन्नस्य मार्गस्य पश्चादुत्पन्नो मार्गः । फलं, मध्यो, विशिष्टो

---

*(contd. from p. 330)*

(i) आदिकर्मिक practices the स्मृत्युपस्थान,
(ii) ऊष्मगत practices the four सम्यक्प्रहा(धा)णs,
(iii) मूर्धन् practices the four ऋद्धिपादs,
(iv) the pudgals called मृद्विन्द्रिय, practice the five indriyas,
(v) the तीक्ष्णेन्द्रिय pudgalas develop the five balas;
(vi) the pudgalas following the bhāvanāmārga, contemplate upon the seven bodhyaṅgas, and
(vii) the pudgalas following the darśanamārga practice the eight mārgāṅgas, see Ada., p. 117, f.n.; cp. also, AK, VI.70 :

आदिकर्मिक-निर्वेधभागीयेषु प्रभाविता ।
भावनायां च दृशि च सप्तवर्गा यथाक्रमम् ॥;

RAK, p. 188 : आदिकर्मिके स्मृत्युपस्थानानि, ऊष्मगते सम्यक्प्रधानम्, मूर्द्धिन ऋद्धिपादाः, क्षान्तौ श्रद्धावीर्यादीन्द्रियाणि, अग्रधर्मेषु बलानि, भावनामार्गे बोध्यङ्गानि, दर्शनमार्गे मार्गाङ्गानि ।; for details, vide, Adv., p. 362, Vs. 450; AKB, VI; AKV, p. 603 sq.

2. cp, A. K., VI.51 : श्रामण्यममलो मार्गः, cp. AKV, p. 655 : संस्कृतं श्रामण्यफलं विमुक्तिमार्गस्वभावम् ।; cp. Adv., p. 395 : या खल्वेषा चतुष्फलमयी माला तस्याः प्रथमं स्रोत आपत्तिफलमन्त्यमर्हत्त्वं मध्ये सकृदागाम्यनागामिफले ।· · · ·; cp. also Ada., p. 126 : चत्वारि श्रामण्यफलानि षड्धर्माः पंचस्कन्धाः प्रतिसंख्यानिरोधः । इति चतुः फलविभागः, see also, p. 127 sq.; on श्रामण्य, cp. AK, VI.54; Ada., pp. 126-7, f.n.

वा, पुनः [।]तत्र केन कारणेन चत्वारि[1] व्यवस्थापितानि । आह । चतुर्विधक्लेशप्रहाणप्रतिपक्षतया । तद्यथा निर्व्वस्तुकानां क्लेशानाम[2]पायगमनहेतुभूतानां प्रहाणात्प्रतिपक्षोत्पादाच्च स्रोत आपत्तिफलं व्यवस्थापितं । त्रयाणां तु संयोजनानां प्रहाणाद्व्यवस्थापितं । भगवता त्रिषु पक्षेषु, गृहिपक्षे, दुराख्यातधर्म्मविन[3]य पक्षे च, त्रयाणां संयोजनानां मार्गोत्पत्तये विवृद्धाकरत्वात् । तत्र गृहिपक्षे सत्कायदृष्टिः । यया यमादित एव न प्रयुत्यत इत्यादित उ[त्]त्रासिका सत्कायदृष्टिः । दुराख्यातेधर्मविनये शीलव्रतपरामर्शः । उच्चलितस्यापि मिथ्याप्रतिपादयति । येनार्यमार्गो नोत्पद्यते । स्वाख्याते धर्मविनये विचिकि[4]त्सातश्चोच्चलितश्च भवति । न च मिथ्याप्रतिपन्नः । अपि स्वाभ्यासात्तस्य यावद् यथाभूतदर्शनं न भवति । ज्ञेयवस्तुनि तावत्कांक्षा विमतयो विबन्धकरा भवन्ति । मार्गस्योत्पत्तये । अनेन तावत्कारणेन **स्रोत आपत्तिफलव्यवस्थानं** ।।[2]

---

1. श्रामण्यफलानि seems to have been omitted in the MS.
2. cp. Adv., p. 144 : स्रोत आपन्नस्यापि निर्मलज्ञानलाभात् । *vide* also, p. 302 sq.; MKV(V), p. 211; AKV, p. 492; AKB, V.43; Pu. P., p. 215.27 : तिण्णं यंजोजनानं पहानाय पटिपन्नो पुग्गलो सोतापत्तिफलसच्छिकिरियाय पटिपन्नो । यस्स पुग्गलस्स तीणिसंयोजनानि पहीनानि—अयं वुच्चति पुग्गलो 'सोतापन्नो.

तस्यास्य स्रोत आपन्नस्य परं सप्त भवा अवशिष्टा भवन्ति। स चास्य[5]जन्म प्रबन्धः। यदा जन्मप्राबन्धिकान्क्लेशान्प्रजहाति। देवभव-संगृहीतान्मनुष्यसंगृहीतांश्च [।] येषां प्रहाणात्परमेकं देवभवमभिनिर्व्वर्त्तयत्येकं मनुष्यभवं [।] तस्मिन्समये **सकृदागामिफलं व्यवस्थाप्यते**।[1]

यदा तु देवभवमेव केवलमभिनिर्व्वर्त्तयति। इह प्रत्यागमजन्मिकं क्लेशं प्रहाय तदा अनागामिफलं-[6] व्यवस्थाप्यते ।।[2] सर्व्वभवोपपत्तिसंवर्त्तनीयक्लेश-प्रहाणादग्रफलमर्हत्त्वफलं व्यवस्थाप्यते।[3]

---

1. cp. AK, VI.40; Adv., p. 343 sq.; MKV(V), p. 212; Pu. P., p. 27 : कामरागव्यापादानं तनुभावाय पटिपन्नो पुग्गलो अनागामिफलसच्छिकिरियाय पटिपन्नो। यस्स पुग्गलस्स कामरागव्यापादा तनुभूता अयं वुच्चति पुग्गलो 'सकदागामी'।
2. cp. AK, VI.40; Adv., p. 343 sq.; MKV(V), p. 212; Pu. P., ibid. : कामरागव्यापादानं अनवसेसप्पहानाय पटिपन्नो पुग्गलो अनागामिफलसच्छिकिरियाय पटिपन्नो। यस्स पुग्गलस्स कामरागव्यापादा अनवसेसा पहीना—अयं वुच्चति पुग्गलो 'अनागामी'।
3. cp. समितत्ता हि पापानं समणो ति, Dh. P., p. 265; Pu. P., p. 28 : रूपरागअरूपरागमान उद्धच्च अविज्जाय अनवसेसप्पहानाय पटिपन्नो पुग्गलो अरहत्तफलसच्छिकिरियाय पटिपन्नो। यस्स पुग्गलस्स रूपरागो अरूपरागो मानो-उद्धच्चं अविज्जा अनवसेसा पहीना—अयं वुच्चति पुग्गलो 'अरहा'; cp., AK, VI.45 अशैक्षोऽर्हन्नसौ तदा; Adv., p. 350 (Vs. 434) :

   तदवाप्तेरशैक्षोऽसावर्हंस्त्रैलोक्यसत्कृतः।
   सर्वक्लेशविसंयुक्तः शिक्षात्रितयपारगः ।।; cp. Vsm., VII.25 :
   आरकत्ता हतत्ता च किलेसारीन सो मुनि।
   हतसंसारचक्कारो पच्चयादीन चारहो।
   न रहो करोति पापानि अरहं तेन वुच्चती ति ।।; cp. MKV.

   (V), p. 212; *vide* अर्हन्तवग्ग of Dh. P., pp. 25-6; *vide*, PD., pp. 421-2.

तत्पुनः सकृदागामिफलं त्रयाणां संयोजनानां प्रहाणाद्रागद्वेषमोहानां च। तनुत्वाद् भगवता व्यवस्थापितं। पंचानामवरभागीयानां संयोजनानां प्रहाणादनागामिफलं। पर्यादाय सर्व्वक्लेशप्रहाणादर्हत्त्वफल [7]मिदमुच्यते **भावनाफलं**।[1]

तत्र ये रागद्वेषमोहमानवितर्कचरितेषु(ताः) पुद्गलेषु(लाः) पूर्व्वं[तैः] तावच्चरितविशोधने आलम्बने चरितं विशोधयितव्यं। ततः पश्चाच्चित्तस्थितिमधिगच्छन्ति। तेषां प्रतिनियतमेव तदालम्बनमवश्यं तैस्ते-
10A—9// नालम्बनेन प्रयोक्तव्यं। समभा//[1]गचरितस्य तु यत्र प्रियारोहिता। तत्र तेन प्रयोक्तव्यं केवलं चित्तस्थितये। न तु चरितविशुद्धये। यथा समभागचरित एवं मन्दरजस्को वेदितव्यः। अयं त्वेषां विशेषो रागादिचरितः प्रयुज्यमानश्चिरेणाधिगन्ता भवति। समभागचरितो नातिचिरेण, मन्दरजस्कस्तु आशु त्वरितत्वरितं चित्तस्थितमधिगच्छति। [2] तत्रोक्तानि पूर्व्वं रागचरितानां पुद्गलानां लिंगानि।

**समभागचरितस्य पुद्गलस्य मन्दरजस्कस्य च कतमानि लिंगानि।** आह। समभागचरितस्य पुद्गलस्य सर्व्वाणि तानि लिंगानि संविद्यन्ते। यानि रागादिचरितानां, तानि रागा[दी]नि तु नाधिमात्राणि, न प्रधानानि। तथा रागादिचरितानां

1. cp. Pu. P., pp. 25-8.

समप्राप्तानि भवन्ति[3] प्रत्ययेषु सत्सु न प्रज्ञायन्ते। तत्र मन्दरजस्कस्य पुद्गलस्य लिंगानि। अनावृतो भवत्यादिशुद्धसंभारसंभृतः। प्रसादबहुलो मेधावी पुण्यवान् गुणान्वितश्च भवति।

**तत्र त्रीण्यावरणानि।**[1] **कर्मावरणं। क्लेशावरणं। विपाकावरणं।**

तत्र **कर्मावरणं।** पञ्चानन्तर्याणि कर्माणि।[2] यच्चान्यदपि किंचित्कर्माणि (कर्म)। [4] सं(T)-चेतनीयं। गुरुकर्म, विपक्वविपाकं। मार्गोत्पत्तये। निबद्धकारकं। तत्र **क्लेशावरणं।** तीव्रक्लेशता। आयतक्लेशता च। या दृष्टे धर्मे चरितविशोधने-नालम्बनविशोधनेन न शक्यते विशोधयितुं।

तत्र **विपाकावरणं** यत्रार्यमार्गस्य अप्रवृत्तिरप्रसाद उपपत्त्यायतने[।]तत्र वा विपाक[5]मभिनिर्व्वर्त्तयति। यत्र वा आर्यमार्गस्य प्रवृत्तिः। तत्रोपपन्नो जातो भवत्येडमूको हस्तसंबाधिकः अप्रतिबलो भवति। सुभावितदुर्भावितानां धर्माणामर्थमाज्ञातुं। तत्रादि-

1. cp. Ada., p. 124 (XV.20) : क्लेशः अकुशलकर्म अकुशलकर्मविपाकः। इति त्रीण्यावरणानि। पंच आनन्तर्याणि कर्माणि अत्यन्तगुरुक्लेशेभ्यस्त्रिदुर्गतिविपाकेभ्यो भवन्ति। त्रिषु वस्तुषु चेदेकमपि वस्तु न भवत्यार्यधर्मलाभः। इत्युच्यते आवरणम्।; cp. AKB, IV.96; SVA, p. 466.
2. cp. AKV, IV.103; see, Vsmt., XIII.90; V.41 : (मातुघातो, पितुघातो, अरहन्तघातो, दुट्ठेन चित्तेन तथागतस्स लोहितुप्पादनं, सङ्घभेदो ति इमानि पञ्च आनन्तरिय कम्मानि)····; see Paṭṭhāna, quoted therein.

शुद्धिः, **शीलं** च **सुविशुद्धं** दृष्टिश्च **ऋज्वी** [।] तत्र **शीलं सुविशुद्धं**। दशभिः कारणैर्वेदितव्यम्। तत्र दृष्टि तृप्तिता जाता[1][6] श्रदधां(द्धा) संप्रयोगात्। अधिमुक्तिसंप्रयोगाद्धि तमार्या[अ]शाठ्यतया सुचिन्तित धर्मार्थस्य निःकांक्षनिर्विचिकित्स(ा)प्रयोगनिर्याणतया या दृष्टिः **श्रद्धया** संप्रयुक्ता। अस्माद्धर्म विनयादसंहार्यादधिमुक्त्या च संप्रयुक्ता बुद्धानां बुद्धश्रावकाणां च। अनित्यमनुभव[न]मनित्यानि चोपपत्त्यायतना [7]नि। गंभीरां च देशनां, अव्याकृतवस्तु चाधिमुच्यते। नो[त्]त्रसति, न संत्रासमापद्यते। विगतमायाशाठ्या च या दृष्टिः यया ऋजुको भवति। ऋजुकजातीयः। यथानुशिष्टश्च प्रतिपद्यते। यथाभूतं चात्मानमाविष्करोति। धर्माणां वाऽनित्यतामारभ्य, दुःखतां, शून्यतामनात्मतामर्थः सुविचिन्तितो[8]भवति। सुतुलितः सूपपरीक्षितः। यद्धेतोरयं निःकाङ्क्षो भवति। निर्विचिकित्सः। द्वेधा पथा गतो विशेषाय परैति। इतीयं चतुराकारा दृष्टिर्यथोद्दिष्टा। दृष्टिऋजुतेत्युच्यते। तत्र संभारसंभृतताविस्तरेण संभारः। पूर्व्वमेव निर्दिष्टः समासतः। पुनश्चर्विधो भवति।
10B—9// **पुण्यसंभारो, ज्ञानसंभा**//[1]**रः, पूर्व्वको, दृष्टधार्मिकश्च।**

1. Letters illegible.

**तत्र पुण्यसंभारो**[1] येनाप्येतर्हि आनुलोमिकाः परिष्काराः प्रादुराभवन्ति । प्रदक्षिणाः । कल्याणमित्राणि च प्रतिलभते । अनन्तरायश्च प्रयुक्तस्य भवति ।

**तत्र ज्ञानसंभारः ।**[2] येन मेधावी भवति, प्रतिबलः । सुभाषितदुर्भाषितानां धर्माणामर्थमाज्ञातुं[।]-लाभी भवति । आ[2]नुलोभिकाया धर्मदेशनायाः, अर्थदेशनायाः, अववादानुशासन्याः ।

**तत्र पूर्व्वको** येनैतर्हि(र्हि) प[रि[3]]पक्वानीन्द्रियाणि लभते । पूर्वकुशलमूलोपचयात् । **तत्र दृष्टधार्मिकस्तद्यथा ।** कुशलो धर्मछ(च्छ)न्दः । तथा परिपक्वेन्द्रियस्य शीलसम्वर, इन्द्रियसम्वर इति विस्तरेण पूर्व्ववत् ।

**तत्र प्रसादबहु[3]लता [।]** न शास्तरि कांक्षति । न विचिकित्सति । प्रसीदत्यधिमुच्यते । यथाशास्तर्येवं धर्मे, शिक्षायामिति विस्तरेण पूर्व्ववत् ।

**तत्र मेधा** यया आशु धर्ममुद्गृह्णाति । चिरेण धर्ममर्थं च न विस्तारयति । आशु धर्ममर्थं च प्रतिविध्यति ।

---

1. पुण्यसंभार is the term denoting the five Pāramitās except the Prajñāpāramitā, *vide* MSA, XVIII.38-9.
2. This is the Prajñāpāramitā, *vide*, MSAB, VI.6, XVI. 19-20; XVIII.38-9.
3. Syllable damaged by pin-hold.

**तत्र कृतपुण्यता।** यया अभिरूपो भवति। दर्शनीयः। प्रासादिको[4]दीर्घायुर्भवत्यादेयवाक्यो, महेशाख्यो, ज्ञातो भवति। महापुण्यो, लाभी चीवरादीनां। स सत्कृतो, गुरुकृतश्च। राजादीनां।

**तत्र गुणान्वित इति।** गुणा अल्पेच्छतादयो वेदितव्याः। **यथोक्तं श्रमणालंकारे**[1] तैरयं प्रकृत्यैव समन्वागतो भवति। इतीमान्येवं भागीयानि मन्द-रजस्कस्य[5]पुद्गलस्य लिंगानि वेदितव्यानि॥

**तत्र षट् पुद्गलपर्यायाः। तद्यथा श्रमणो, ब्राह्मणो, ब्रह्मचारी, भिक्षुर्यति[:], प्रव्रजितश्चेति।**

**तत्र चत्वारः श्रमणाः। मार्गजिनः। मार्ग-देशिकः। मार्गजीवी। मार्गदूषी च।**

तत्र यः सुगतः **स मार्गजिनः।** यो धर्मवादी स **मार्गदेशि[6]कः।** तत्र यः प्रतिपन्नः। स **मार्गजीवी।** यो मिथ्याप्रतिपन्नः स **मार्गदूषी।**

**सुगतश्चोच्यते।** योशेषं रागद्वेषमोहक्षयमनु-प्राप्तः।[2] धर्मवादी। यो रागद्वेषमोहविनयाय धर्मं देशयति। सुप्रतिपन्नो यो रागद्वेषमोहविनयाय

1. *supra* (Ys., I), p. 155 sq.
2. cp. Vsm., VII.33 : सोभणगमनत्ता, सुन्दरं ठानं गतत्ता, सम्मा च गतत्ता सुगतो। गमनम्पि गतं ति वुच्चति तञ्च भागवतो सोभणं परिसुद्धमनवज्जं। किं पन तं ति? अरियमग्गो। तेन हेस गमनेन खेमं दिसं असज्जमानो गतो ति सोभणगमनत्ता सुगतो। सुन्दरञ्चेस ठानं गतो अमतं निब्बानं' ति सुन्दरं ठानं गतत्ता पि सुगतो। see also VII.34-5.

प्रतिपन्नः । दुःशील[ः], पापधर्मा, मिथ्या प्र[7]-तिपन्नः ।

अपि च । **शैक्षाशैक्षा मार्गजिना** इत्युच्यन्ते । दर्शनभावनाप्रहातव्यानां क्लेशानां विजयात्तत्र तथागतो बोधिसत्त्वश्चायत्यां बोधाय प्रतिपन्न(ा)ः । श्रावकाश्च सूत्रधरा, विनयधरा, मातृकाधराश्च । ये सांकेतिकं धर्मविनयं धारयन्ति । धर्मनेत्रीं प्रवर्त्तयन्ति । इम उच्यन्ते **मार्ग[8]देशिकाः** । तत्र ये पृथग्जनकल्याणका आत्महिताय प्रतिपन्ना शज्जिनः (मार्गदेशिकाः) । **कौकृतिकाः** शिक्षाकामाः । अप्राप्तस्य प्राप्तये अनधिगतस्याधिगमाय आसाक्षात्कृतस्य साक्षात्क्रियायै प्रयुक्ता, भव्याश्च प्रतिबला, यावदसाक्षात्कृतस्य साक्षात्क्रियायै[।]इम उच्यन्ते
11A—1// **मार्ग जीविनः** । //[1]अप्येषामूष्मा येने[य]मस्य[1] आर्यस्य प्रज्ञेन्द्रियस्योत्पत्तये, न मृता जीवन्तीत्युच्यते । तेनोच्यन्ते मार्गजीविन इति । तत्र योयं पुद्गलो दुःशीलः पापधर्मा यावदब्रह्मचारी[ब्रह्मचारी[2]](रि) प्रतिज्ञः । अयमुच्यते **मार्गदूषी** दूषितोनेन मार्गो भवति मूलत आदितः । येनायमभव्यो भवत्यप्रतिबलः । अभाजनभूतो मार्ग[2]स्योत्पत्तये । सत्यां संविद्यमानायां मार्गदेशनायां सति संविद्यमाने-

1. A mistake for येने[द]मस्य.
2. Added by a separate hand in a footnote.

धिगमे [।] तस्मान्मार्गवृषीत्युच्यते ।

**इदं च सन्धायोक्तं** *भगवता* ।[1] **इह कतमः श्रमणः । इह यावच्चतुर्थः । शून्याः परप्रवादाः । श्रमणैर्ब्राह्मणैश्च । यत्रार्याष्टांगो मार्गः प्रज्ञायते । तत्र प्रथमश्रमणस्तत्र यावच्चतुर्थ इति ॥**

त[3]त्र(य)त्रयो **ब्राह्मणाः । तद्यथा जाति-ब्राह्मणः । संज्ञाब्राह्मणः । प्रतिपत्तिब्राह्मणश्च । तत्र जातिब्राह्मणः ।** योयं जातिब्राह्मणः कुलजातो, योनिजो, मातृसम्भूतः । उत्पन्नो मातृतः, पितृतः । तत्र **संज्ञाब्राह्मण** इति लोके नाम भवति, संज्ञा, सम[ा]ज्ञा, प्रज्ञप्तिर्व्यवहारः । **प्रतिपत्ति-ब्राह्मणः ।** योत्यन्तनि(न्तं) भवति कृतार्थः । [4]वाहिता भवन्त्यनेन पापका अकुशला[2] धर्माः ।

1. cp. A. N., II.253 : इधेव, भिक्खवे, पठमो समणो, इध दुतियो समणो, इध ततियो समणो, इध चतुत्थो समणो, सुञ्ञा परप्पवादा समणेहि अञ्ञेही ति—एवमेतं, भिक्खवे, सम्मा सीहनादं नदथ ।; cp., D. N., II.116-7 : यस्मिं खो, सुभद्द, धम्मविनये अरियो अट्ठङ्गिको मग्गो न उपलब्भति समणोपि तत्थ न उपलब्भति । दुतियोपि तत्थ समणो न उपलब्भति । ततियोपि···· चतुत्थो पि····न उपलब्भति । यस्मिंच खो, सुभद्द, धम्मविनये अरियो अट्ठङ्गिको मग्गो उपलब्भति, समणोपि तत्थ उपलब्भति । दुतियोपि····ततियोपि ····चतुत्थोपि तत्थ समणो उपलब्भति । इमस्मिं खो, सुभद्द, धम्मविनये अरियो अट्ठङ्गिको मग्गो उपलब्भति । इधेव सुभद्द, समणो, इध दुतियो समणो, इह ततियो समणो इह चतुत्थो समणो । सुञ्ञा परप्पवादा समणेभि अञ्ञेहि । इमे च, सुभद्द, भिक्खू, सम्मा विहरेय्युं, असुञ्ञो लोको अरहन्तेहि अस्सा' ति ।
2. वाहित पापोति ब्राह्मणो Dh., p. 388; cp. ibid, 267 : पापं···· वाहित्वा चरति स वे भिक्खूति; वन्तमलो थेरो, ibid, Vs.269; cp. also, Vs.263; see, Brāhmaṇavagga of Dh. P.; Ada., p. 126, f.n.; for reference, *vide*, PTSD, s.v. brāhmaṇa.

**यथोक्तं न कार्यं ब्राह्मणस्यास्ति । कृतार्थो ब्राह्मणः स्मृत इति ।**

तत्र **त्रयो ब्रह्मचारिणः ।** तद्यथा **विरति-समावायी । तदन्तरप्रहायी, तदत्यन्तप्रहायी च ।** तत्र **विरतिसमावायी ।** यो ब्रह्मचर्या[त्]पुनर्धर्मात्प्रति-विरतो भवति । समादत्तशिक्षः । तत्र **तदन्तर-प्रहायी** यो लौ[5]किकेन मार्गेण कामवीतरागः पृथग्जनः । तत्र **तदत्यन्तप्रहायी ।** तद्यथानागामी । अर्हत्वात्पुनः (अर्हन्वा पुनः) ।।

**तत्र पञ्च भिक्षवः । भिक्षतीति भिक्षुः । प्रतिज्ञा-भिक्षुः । संज्ञाभिक्षुः । भिन्नक्लेशत्वाद्भिक्षुः । ज्ञप्तिचतुर्थेन कर्मणोपसम्पादितो भिक्षुः ।।**

तत्र **त्रयो यतयः । दौःशील्यसंयमाद् यतिः ।** योकुशलाद् वाक्कायकर्मणः [6] प्रतिविरतः । **विषय-संयमाद्यतिः ।** य इन्द्रिये गुप्तद्वारः । आरक्षित-स्मृतिः । निपकस्मृति [:।] विस्तरेण पूर्व्ववत् । **क्लेश-संयमाद्यतिः ।** यस्य दर्शनप्रहातव्याः क्लेशाः प्रहीणा उत्पन्नोत्पन्नश्च । वितर्कं व्यापादविहि[तं]वितर्क-मभिध्याव्यापाददृष्टिमिथ्यादृष्टिक्रोधोपनाहम्रक्षप्रदाशा-दीन्यापायिकानि स्थानानि [7]नैरयिकानि(णि) । दुर्गतिगामी[नि] (।) अश्रमणकारकाण्युत्पन्नोत्पन्नानि नाधिवासयति । प्रजहाति । विशोधयति । व्यन्ती-करोति । सोयं **द्विविधः क्लेशसंयमो भवति ।**

**पर्यवस्थानसंयम, उभयसंयमश्च ।।**

**तत्र द्वौ प्रव्रजितौ । स्वाख्यातधर्मविनयो, दुराख्यातधर्मविनयश्च ।** तत्र **स्वाख्यातधर्मविनयः । भिक्षुर्भिक्षुणी, [8]शिक्षमाणा, श्रामणेर[:], श्रामणेरी ।** अपि च प्रव्राजयत्यात्मनः पापकानकुशलान् धर्मान् स **प्रव्रजित** इत्युच्यते । परमार्थतः । तत्र दुराख्यातधर्मविनयः । तद्यथा **तीर्थिक**[:], **परिव्राजो(व्राड्), निर्ग्रन्थो वा,** परिव्राजकोपाण्डुरोग इति । यो वा पुनरप्येवंभागीयः । तेनाहं(ह)
11B—1// श्रमणो, ब्राह्मणो, ब्रह्मचारी, भिक्षुर्यतिः, प्रव्र//[1]
[1.........................................................1]
र—च । **कालप्रभेदः** दीर्घकालभावितमार्गो, न दीर्घकालभावितमार्गश्च । इतीमे चत्वारः प्रभेदाः कथंनिदानानि भवन्ति । यद्वा संप्र[2][2] [1.....................................................1] ज्ञ उपायज्ञ[:]-कुशल इत्यर्थः । सातत्यपक्षे प्रयोगो(गः) साततिको निपक्व इत्युच्यते । दीर्घकालभावितभावित[3] [3] [1...............................1] त्रयेण भेदेन । योगप्रयोगकालभेदेनाप्तानां पुद्गलानां व्यवस्थानं यस्तावद्पुद्गलः अपरिपक्वेन्द्रियः । स तावदुपायज्ञोपि सातितिकोपि कृतपरिचयोपि नाराधको भवति ।

1. MS. damaged, torn on sides.
2. Syllables illegible. May also be महासंप्र.
3. Syllables illegible.

ध्याय्यस्य धर्मस्य कुशलस्य । तत्र परिपक्वेन्द्रिय-श्च[4] [.....................1] ज्ञो भवति । परिपक्वेन्द्रियो भवति । उपायज्ञो न क्षिप्राभिज्ञो भवति । तत्र परिपक्वेन्द्रियो, भवत्युपायज्ञो, न साततिको, न कृतपरिचयः । न तावत्कृतस्वार्थो भवति । कृतकृत्यः । यश्च परिपक्वेन्द्रियो भवत्यु-पायज्ञः । साततिकः, कृतपरिचयश्च भवत्येवं स आराधको भवति । [5]क्षिप्राभिज्ञश्च । कृतस्व-कार्यश्च भवति कृत्यकृत्यः ॥

**तत्र चत्वारो माराः[2] संबहुलानि मारकर्माणि ।**

---

1. MS. damaged. Letters missing. May be restored as : अपरिपक्वेन्द्रियश्च पुद्गलः । अपरिपक्वेन्द्रियः क्षिप्राभि.
2. Māra represents the evil spirit of hindrance in the acquisition of kuśala dharmas and specially Nirvāṇa. In the Pāli canons and the Buddhist Sanskrit literature, Māra has been described as the 'lord of the evil forces, as the tempter' and as the "ruler of the highest of the Kāmadevaloka, (the paranimmitavasavatti-devaloka)' dividing 'with Sakka (Indra) the sovereignity of the Kāmāvacaradevaloka. Like Sakka and Mahābrahman he is possessed of vast powers and reigns with great magnificence in his devaloka." (Childers, PED, p. 241); on māra, see, Hardayal, Boddhisattva Doctrine in Buddhist Sanskrit Literature, pp. 64, 74, 306-16; A. E. Windisch, "The Mara" (quoted by Hardayal, ibid, loc. cit.); B. C. Law :

*(contd. on p. 344)*

वेदितव्यानि योगिना । योगप्रयुक्तेन । ते च परिज्ञाय परिवर्जयितव्याः । तत्र **चत्वारो माराः** । तद्यथा—**स्कन्धमारः**, **क्लेशमारः**, **मरणमारः** । **देवपुत्रमारश्च** । पंचोपादानस्कन्धाः **स्कन्धमारः** । त्रैधातुकावचराः क्लेशाः । तेषां तेषां सत्त्वानां । तस्मात्तस्मात्सत्त्वनिकायाः य(याद्य)न्मरणं कालक्रिया

---

*(contd. from p. 343)*

Conception of Māra in Buddhist literature; the four māras have been enumerated in the Pāli literature (see, Childers, PED, p. 241); Buddhaghosa mentions five māras, Vsm., VII.59 : सङ्खेपतो वा पञ्च किलेस-खन्ध-अभिसङ्खार-देवपुत्त-मच्चुमारे अभञ्जि, तस्मा भग्गत्ता एतेसं····भगवा' ति वुच्चति ।; the Mahāyāna and the Buddhist Sanskrit Texts omit अभिसंस्कार from this list; see, Dh. Saṁ., 80, MSS, I.335 : चत्वारो माराः । तद्यथा—स्कन्धमारः, क्लेशमारः, देवपुत्र-मार, मृत्युमारश्चेति, ŚS, p. 109.28; see also, AKV, II, p. 16 (II.10); AKB, II.10-a; on मारकर्म, see, ŚS, pp. 31-3 : संक्षेपाद्धर्मभाणकधर्मश्रवणिकयोर्या काचिद्विधुरता, सर्व्वं तन्मारकर्म । (PP); यावदकुशलधर्मानुवर्त्तनता, कुशलधर्मोत्सर्गश्च सर्वं तन्मारकर्मेति । (आर्यगगनगंजसूत्रम्, p. 31); the eleven माराङ्कुशs have also been mentioned (ibid, p. 32); cp. also, ibid, loc cit. : अतश्च गगनगञ्जसूत्रेऽभिहितम्—अकालप्रतिकाङ्क्षणता मारकेर्मेति; cp. also., ibid, p. 33 : कथं····बोधिसत्त्वो मारकर्मपरिहारोपायकुशलो भवति ? इह बोधिसत्त्वो कल्याणमित्रं सर्व्वेण सर्व्वं परिवर्जयति ।····अप्रतिरूपदेशवासं लोकायतमन्त्रसेवनभावनां लाभसत्कारपूजोपस्थानबहुमानं·····परिवर्जयति । ये चान्ये उपक्लेशा बोधिपथमार्गान्तरायिकास्तान्····परिवर्जयति । तेषां च प्रतिपक्षं भजते ।; see, ASPP, XI (मारकर्मपरिवर्तं) pp. 115-24; AAA, pp. 430-4; cf. LV, XXI (मारधर्षणपरिवर्तः) pp. 218-49; BCAP, IX.36, p. 199 : चतुर्मारजयाज्जिनो भगवान् ।

**मरणमारः ।** योप्यकुशलपक्षप्रयुक्तस्य स्कन्धक्लेश-मृत्युसमतिक्रमाय कामधातूपपन्नो देवपुत्रः । निश्चय-प्राप्तः अन्तरायमुपसंहरति । व्याक्षेपकरणे । अय-मुच्यते **देवपुत्रमारः ।** तत्र यत्र च म्रियते । [7] यश्चासौ मृत्युर्येन च मृत्युं नमयति, कामयत्यन्त-रायिकेन वस्तुना [।] इत्येतदधिकृत्य चत्वारो मारा व्यवस्थापिताः ।

तत्र पञ्चसूपादानस्कन्धेषु जातेषु वर्द्धमानेषु म्रियते । क्लेशां(शान्)जनयत्यायत्यां जातश्च म्रियते । च्युतिश्च च्यवनता सत्वानां जीवितेन्द्रिय-निरोधः । कालक्रिया स्वभाव एव मृत्युः । देव-पुत्रमारश्च मरण [8] समतिक्रमाय प्रयुक्तस्यान्तराय-मुपसंहरति । येन नैव वा शक्नोति मरणधर्म्मतां समतिक्रमितुम् ।। कालान्तरेण वा समतिक्रामति । तत्रावशगतो मारस्य भवति लौकिकमार्गवीतरागः पृथग्जनः ।। इहस्थस्तत्रोपपन्नो वा, [अ]वशगतः । पुनर्यः अवीतरागः ।

तत्र यो वीतरागः (।) एव हस्तगतो यथाकामं करणी[9]यः । वीतरागो वा पुनर्बद्धो मारबन्धनैः । अपरिमुक्तो मारपाशैर्यस्मात्स पुनरप्यागन्ती(न्ता) इमां(मं)धार्न्तुम्(धातुम्) ।

**तत्र मारकर्माणि ।** यस्य कस्यचित्कर्मणो धर्मच्छन्दः समुत्पन्नो नैष्क्रम्योपसंहितः । कामप्रे-

11A—2// धमधिपतिं कृत्वा प्रवर्त्तन्ते । वेदितव्यं मारकर्मे//[1] तदिति । इन्द्रियैर्गुप्तद्वारस्य विहरतः । यस्य रंजनीयेषु रूपेषु सहगत्वरसम्प्रष्टव्यधर्मेषु निमित्तग्राहितायामनुव्यंजनग्राहितायां चित्तं प्रस्कन्दति । वेदितव्यं मारकर्मैतदिति । एवं भोजनेषु मात्रज्ञस्य विहरतः प्रणीतेषु रसेषु छन्दरागमनुनयेन चित्तं प्रस्कन्दति । भक्तवैषम्ये एवं पूर्वरात्रापररात्रं जागरिकायो [2]गमननुयुक्तस्य विहरतः । निद्रासुखे, शयनसुखे, पार्श्वसुखे चित्तं प्रस्कन्दति । वेदितव्यं मारकर्मैतदिति । तथा संप्रजानद्विहारिणो विहरतः । अभिक्रमप्रतिक्रमादिषु शिशुमुदारवर्ण्णं रंजनीयं मातृग्रामं दृष्ट्वा अयोनिशो निमित्तग्राहेण चित्तं प्रस्कन्दति । लोकचित्राणि वा दृष्ट्वा चित्तं प्रस्कन्दति । बह्वर्थतां (तायां), बहु[3]कृत्यतायां, चित्तं प्रस्कन्दति । तद्यथा गृहस्थप्रव्रजितैः संसर्गारामतायां, पापमित्रैः सह एकव्यवसितायां, दृष्ट्यनुमते चित्तं प्रस्कन्दति । वेदितव्यं मारकर्मैतदिति ।। तथा बुद्धे, धर्मे, संघे, दुःखे, समुदये, निरोधे, मार्गे । इहलोके, परलोके कांक्षा विमतय उत्पद्यन्ते । वेदितव्यं मारकर्मैतदिति । अर[4]ण्यगतो वा, वृक्षमूलगतो वा, शून्यागारगतो वा, महान्तम्भयभैरवं पश्यत्यु[त्]त्रासकरं रोमहर्षणं । ब्राह्मणवेषेण, वा मनुष्यवेषेण वा, अमनुष्यवेषेण वा, कश्चिदुपसंक्रम्या-

योनिशः (।) शुक्लपक्षाद्विच्छिन्दयति । कृष्णपक्षे च समादापयति । वेदितव्यं मारकर्मैतदिति । यदा लाभसत्कारे चित्तं प्र[5]स्कन्दति । मात्सर्ये महेच्छतायां । असन्तुष्टौ, क्रोधोपनाह् (।) कुहनालपनादिषु । श्रमणालंकारविपक्षेषु धर्मेषु चित्तं प्रस्कन्दति । वेदितव्यं मारकर्मैतदिति । इतीमान्येवंभागीयानि मारकर्माणि वेदितव्यानि तानि चतुर्ण्णां माराणां यथायोगं ॥

**तत्र चतुर्भिःकारणैः सम्यक्प्रयुक्तस्याप्यारंभो विफलो भवति । [6]तद्यथा इन्द्रियसमुदागमेन । अनुलोमाववादेन । समाधिदुर्ब्बलतया च । इन्द्रियाणि चेन्न समुदागतानि । आनुलोमिकश्चाववादो भवति । समाधिश्च केवलवान् । एवमस्यारम्भो विफलो भवति ।** इन्द्रियाणि चेन्न समुदागतानि भवन्ति । अववादश्च नानुलोमिको भवति । समाधिश्च बलवान् भवति । एवमारम्भो वि[7]फलः । इन्द्रियाणि चेत्समुदागतानि । स अववादश्चानुलोमिको भवति । समाधिश्च दुर्बलो भवत्येवारंभा(वमारम्भो) विफलः । इन्द्रियाणि चेत्समुदागतानि भवन्ति । अ[ा]नुलोमिकश्चाववादो भवति । समाधिश्च दुर्ब्बलो भवत्येव[म]ारम्भो विफलः । **इन्द्रियाणि चेत्समुदागतानि भवन्ति । आनुलोमिकश्चाववादः । समाधिश्च बलवानेवम**

**[8]स्यारम्भः सफलो भवत्येभिस्त्रिभिः कारणैर्विफलो भवति । त्रिभिरेव कारणैः सफलः ।। उद्दानं ।।**

*पुद्गलास्तद्व्यवस्थानं अथो आलम्बनेन च ।*
*अववादश्च शिक्षा च तथा शिक्षानुलोमिका[ः] [।।]*
*योगभ्रंशश्च योगश्च मनस्कारश्च योनिशः ।*
*करणीयं भावना च फलं पुद्गलपर्यायः ।।*
11B—2// *मारश्च मारक//[1]र्माणि आरम्भो विफलो भवेत् ।।*

।। योगाचारभूमौ श्रावकभूमिसंगृहीतायां द्वितीयं योगस्थानम् ।।

# तृतीयं योगस्थानम्

एवं कृते पुद्गलव्यवस्थाने, आलम्बनव्यवस्थाने, यावद्भावनाफलव्यवस्थाने आत्मकामेन पुद्गलेन स्वार्थमनुप्राप्तुकामेन आदिकर्मिकेन(ण)। तत्प्रथमकर्मिकेन(ण) योगज्ञ, आचार्यो वा, उपाध्यायो वा, पुरुषो, गुरुस्थानी[2]यो वा, चतुर्षु स्थानेषु स्मृतिमुपस्थाप्य उपसंक्रमितव्यः। अभिज्ञाभिप्रायेण, नोपालम्भचित्ततया, सगौरवेण, न समानस्तम्भतया। किंकुशलगवेषिणा। नात्मोद्भावनार्थं। आत्मानं परांश्च कुशलमूलेन योजयिष्यामीति। न लाभसत्कारार्थमेवं च पुनरुपसंक्रम्य कालेनावकाशं कृत्वा, एकांसमुत्तरासंगं कृ[3]त्वा, दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य, नीचतरमेवासने निषद्य, सप्रतीशेन योग आयाचितव्यः। अहमस्मि(स्मि)योगेनार्थी, योगं आदिक्ष्वानुकम्पामुपादाय।

इत्येवञ्च पुनरायाचितेन योगिना योगज्ञेन स आदिकर्मिकः, तत्प्रथमकर्मिकः योगमनसिकारे प्रयोक्तु-

कामः। श्लक्ष्णश्लक्ष्णै[4]र्व्वचनपथै[1]रुद्वेजयितव्यः[2]। संप्रहर्षयितव्यः। प्रहाणे चानुशंसो[3] वर्ण्णयितव्यः। साधु, साधु, दुर्मुख, यस्त्वां(स्त्वं) प्रमादापगतायां प्रजायां, विषयनिम्नायां, विषयाध्यवसितायां अप्रमादाय प्रयोक्तुकामः। अपायधारकप्रविष्टायामपायधारकान्निर्गन्तुकामः। रागद्वेषमोहविगतबन्धनायां बन्धनानि क्षेप्तु[5]कामः। संसारमहादावीदुगमार्गप्रविष्टानां(यां) निस्तर्त्तुकामः। क्लेशकुशलमूलमहादुर्भिक्षप्राप्तायां कुशलमूलसुभिक्षमनुप्राप्तुकामः। क्लेशतस्करमहाभयानुगतायां। निर्व्वाणं क्षेममनुप्राप्तुकामः। क्लेशमहाव्याधिग्रस्तायां परममानो निर्व्वाणमनुप्राप्तुकामः। चतुरोत्मा(घा)नुस्रोतोपहतायामो[6]घानुतर्त्तुकामः। महाविद्यानुकारप्रविष्टायां महाज्ञान[ा]लोकमनुप्राप्तुकामः। अन्य(त्र)त्वमायुष्मन्नेवं प्रयुज्यमानः। समोहं च राष्ट्रपिंडं परिभोक्ष्यते। शास्तुर्वचनकरो भविष्यसि। अनिराकृतध्यायी, विपश्यनया समन्वागतः। बृंहयिता शून्यागाराणां स्वकाययोगमनुयुक्तः। अविगर्हितो वि[7]ज्ञैः। सब्रह्मचारिभिस्तुल्यहिताय प्रतिपन्नः। परहिताय, बहुजनहिताय, लोकानुकम्पायै,

1. Wayman reads पथैः.
2. Wayman reads उद्वेजयितव्यः and emends it as उत्तेजयितव्यः.
3. Wayman reads चानुशंसं.

अर्थाय, हिताय, सुखाय देवमनुष्याणामित्येवंभागीयैः श्लक्ष्णैर्वचनपथैः[1]। संहर्षयित्वा (संहर्ष्य) प्रहाणे चानुशंसं दर्शयित्वा, चतुर्षु परिपृच्छास्थानीयेषु धर्मेषु परिप्रष्टव्यः। कश्चिच(च्चि)दायुष्मानेकान्तेन बुद्ध-[8]शरणं गतो, धर्मं, संघं, नो चेतोबहिर्धान्यं शास्तारं वा, दक्षिणीयम्वा संजानाति, कच्चित्ते आदिपरिशोधिताद्ब्रह्मचर्यस्य भावनायै शीलं च ते सविशुद्धं, दृष्टिश्च ऋज्वी[2] कच्चित्ते आर्यसत्याना-मुद्देशविभंगमारभ्य धर्मः श्रुतश्चोद्गृहीतश्च।
11A—3// अल्पो वा, प्रभूतो वा, कच्चित्ते निर्वाणा//[1]धिमुक्तं चित्तं। निर्वाणाभिप्रायश्च प्रव्रजितः।

सचेत्पृष्ट ओमिति[3] प्रजानाति। तत[4] उत्तरि चतुर्षु स्थानेषु चतुर्भिः कारणैः समन्वेषितव्यः। **प्रणिधानतः समन्वेषितव्यः। गोत्रत, इन्द्रियतः। चरिततश्च समन्वेषितव्यः कथया, चेष्टया, चेतः पर्यायस्थानेन पर्येषितव्यः।**

तत्र कथं **पृच्छया प्रणिधान**[2]तः समन्वेषितव्यः। एवं परिप्रष्टव्यः। कुत्रायुष्मान् कृतप्रणिधान

1. Wayman adds here उत्तेजयित्वा (उत्तेज्य) on the basis of the Tib. trans. (Yaṅ dag par gzeṅ bstod parbya).
2. Wayman reads ऋजी and emends it as चर्जी.
3. Wayman reads पृष्कन्द्रमिति and emends it as पृष्ट एवमिति।
4. Wayman reads तत्र.

इति । श्रावकयाने, प्रत्येकबुद्धयाने, [1]महायाने[।]

1. cp. SPS, p. 55 : तत्र केचित्सत्त्वा परघोषश्रवानुगमनमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोश्चतुरार्यसत्यानुबोधाय तथागतशासनेऽभियुज्यन्ते । ते उच्यन्ते श्रावकयानमाकाङ्क्षमाणाः ।····अन्ये सत्त्वा अनाचार्यकं ज्ञानं दमशमथमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोर्हेतुप्रत्ययानुबोधाय तथागतशासनेऽभियुज्यन्ते, ते उच्यन्ते प्रत्येकबुद्ध्यानमाकाङ्क्षमाणाः ।····अपरे पुनः सत्त्वाः सर्वज्ञज्ञानं बुद्धज्ञानं स्वयंभूज्ञानमनाचार्यकं ज्ञानमाकाङ्क्षमाणा बहुजनहिताय बहुजनसुखाय ····सर्वसत्त्वपरिनिर्वाणहेतोस्तथागतज्ञानबलवैशारद्यानुबोधाय तथागतशासनेऽभियुज्यन्ते । ते उच्यन्ते महायानमाकांक्षमाणाः ।; cp. also, p. 204 : अत्र प्रज्ञापारमितायां सर्वाणि त्रीणि यानानि विस्तरेणोपदिष्टानि । तानि पुनरनिमित्तयोगेन अनुपलम्भयोगेन अनुत्पादयोगेन, यावत्पुनः लोकव्यवहारेण अपरमार्थयोगेन । इति विस्तरः ।, (quoted from प्रज्ञापारमिता); also, उक्तं च—

बुद्धैः प्रत्येकबुद्धैश्च श्रावकैश्च निषेविता ।
मार्गस्त्वमेका मोक्षस्य नास्त्यन्य इति निश्चयः ॥;

see on श्रावकयानिक, प्रत्येकबुद्धयानिक and माहायानिक पुद्गल Asm., p. 87; cp. also pp. 93-4 (अभिसमय); on the relation and development of the three yānas, see, R. Kimura, A Historical Study of the Terms Mahāyāna and Hīnayāna and the origin of Mahāyāna Buddhism, JDL, XII(1925); Dutt, AMB, p. 80 sq.; Śānti Bhikṣu, Mahāyāna, Chapter I; Mm. Dr G. N. Kavirāja, BDD, Introd., pp. 14-6; Maitreyanātha and Asaṅga give the following distinctions of Mahāyāna from Hīnayāna (or Śrāvakayāna) :

आशयस्योपदेशस्य प्रयोगस्य विरोधतः ।
उपस्तम्भस्य कालस्य यद्धीनं हीनमेव तत् ॥ MSA, I.10;

श्रावकयाने हि आत्मपरिनिर्वाणायैवाशयस्तदर्थमेवोपदेशस्तदर्थमेव प्रयोगः परीत्तश्च पुण्यज्ञानसम्भारसंगृहीत उपस्तम्भः कालेन चाल्पेन तदर्थप्राप्तिर्यावत्त्रिभिरपि जन्मभिः । महायाने तु सर्वं विपर्ययेण । MSAB, p. 4; cp. also,

आलम्बनमहत्वञ्च प्रतिपत्तेर्द्वयोस्तथा ।
ज्ञानस्य वीर्यारम्भस्य उपाये कौशलस्य च ॥

*(contd. on p. 355)*

स यत्र यत्र कृतप्रणिधानो भविष्यति। त चै(त्रै)-वात्मानं व्याकरिष्यति। एवं पृच्छया प्रणिधानतः समन्वेषितव्यः।

**कथं पृच्छया गोत्रमिन्द्रियं चरितं च** [।] **समन्वेषितव्यं।** स एवं परिप्रष्टव्यः। [3]आयुष्मानात्मनो गोत्रम्वा, इन्द्रियम्वा, चरितं वा[।[1]]किं गोत्रोहं। कीदृशानि मे इन्द्रियाणि मृदूनि, मध्यानि, तीक्ष्णानि, किं रागचरितः। अथ द्वेषचरितः। एवं तावद् वितर्कविचारित(विचारचरित) इति। स चेत्स प्राज्ञो भवति। पू(पौ)र्व्वापर्येण चामुनो गोत्रमिन्द्रियं, चरितञ्चोपलक्षितं भवति। निमित्तीकृतं [।] तञ्चै-(ञ्चैव)व व्याकरोति। [4]स चेत्पुनर्युक्तो भवति। न चानेन पौर्वापर्येण यावन्निमित्तीकृतं भवति। ततश्चरितं चोपलक्षितं भवति। स पृष्टो न व्याकरोति। तस्य तत उत्तरकालं कथया तावत्त्रीणि[2] समन्वेषितव्यानि। तस्य पुरस्ताच्छ्रावकयानप्रति-

---

(*contd. from p. 354*)

उदागममहत्वञ्च महत्त्वं बुद्धकर्मणः।
एतन्महत्त्वयोगाद्धि महायानं निरुच्यते॥

ibid, XIX.59-65, see p. 171; also, Vs.61-2; MVŚ, V.1-31; cp. also, Bodhi, pp. 201-2, p. 199, para 2; cp. also, Dvādaśamukhaśāstra, Introductory remarks of Ch. I. (प्रतीत्यसमुत्पादपरीक्षामुखम्).

1. MS. seems to have omitted here जानामि.

2. यानानि may be added here.

संयुक्ता कथा करणीया । चित्तैर्गमकैर्धुरैर्वचनपथैः स तस्यां कथायां [5]कथ्यमानायां स चेच्छ्रावकगोत्रो भवत्यत्यर्थं तया कथया प्रीयते । हृष्यते, आनन्दीजातः, सौमनस्यजातो भवति । (न) प्रसीदति नाधि(अधि)-मुच्यते । महायानप्रतिसंयुक्तायाम्वा पुनः कथायां कथ्यमानायां यो महायानगोत्रः सोत्यर्थं प्रीयते । हृष्यते । यावत्प्रसीदत्यधिमुच्यते । श्रावकप्रत्येक-बुद्धस्तु न तथा । स चे[6]त्पुनः मृद्विन्द्रियो भवति । सोत्यर्थञ्च प्रीयते । धर्मस्य चार्थस्य चोपलक्षणाय । उद्ग्रह्णाय, प्रतिवेधाय च । मध्ये-न्द्रियो न, तीक्ष्णेन्द्रियस्तु । आशु धर्मं चोपलक्षय-त्युद्गृह्णाति । प्रतिविध्यति । गम्भीरायामपि कथायां कथ्यमानायां । स चेत्पुन[ा]रागचरितो
11B—3// भवति । स प्रसदनीयायां कथायां कथ्यमानाया//[1]
मत्यर्थं प्रसीदति रमते । का(या)व त(द्)ध्यानं प्रविशति । चाप्ता च मग्रु (अश्रु?)प्रपातं च स्निग्धसन्तानतां, मृदुचित्ततां, द्रवचित्ततां चोपदर्श-यति । सचेद् द्वेषचरितो भवति । निर्व्वेधिकायां कथायां कथ्यमानायां निर्व्वाणप्रतिसंयुक्तायां निरा-मिषमु[त्]त्रस्य संत्रासमापद्यते । यथा मृद्विन्द्रिय-स्योक्तं तथात्रापि वेदितव्यम् । स चे [2]त्स धर्मा-नुचरितो भवति । जानात्यर्थं शुश्रूषते । न श्रोत्रमवदधाति । न तथा प्रज्ञाचित्तमुपस्थापयति ।

आवर्जितोऽपि न तथा सानुकारमनुप्रयच्छति। स चेत्पुनर्विचरितो(विचारानुचरितो) भवति। तस्य स्ववहितस्यापि चित्तं विक्षिप्यते। दुर्गृहीतग्राही भवति। न दृढं गृह्णाति। न स्थिरं, उद्गृहीतश्च नाशयति। न पु[3]न[:] कय(थ)या परिपृच्छनकश्च भवति। एवं कथया। गोत्रमिन्द्रियं चरितं च समन्वेषितव्यं। **कथं चेष्टया** [।] यानि पूर्वोक्तानि लिंगानि। श्रावकगोत्रस्य, रागचरितानां च पुद्गलानां तानि चेष्टेत्युच्यते। तया च चेष्टया यथायोगं गोत्रमिन्द्रियं चरितं च समन्वेषितव्यं।

**तत्र कथं चेतःपर्यायज्ञानेन[1] गोत्रेन्द्रि[4]यचरितानि समन्वेषितव्यानि।** यथापि स योगी योगज्ञो लाभी भवति चेतः पर्यायज्ञानस्य[।]स तेन परचित्तज्ञानेन गोत्रमिन्द्रियं, चरितं च यथाभूतं प्रजानाति।

---

1. चेतः पर्यायज्ञान is the knowledge of the minds (cittāni) of all the beings and is derived by the Buddha or bodhisattva, see, Bodhi, p. 49 : तत्र चेतः पर्यायज्ञानं बुद्धबोधिसत्त्वानां कतमत्। इह बोधिसत्त्वो वा तथागतो वा परेषां···सत्त्वानां···चित्तं जानाति। विगतक्लेशपर्यवस्थानमपि क्लेशसानुबन्धं सानुशयमपि क्लेशनिरनुबन्धं निरनुशयमपि मिथ्याप्रणिहितमपि···क्लिष्टमपि···सम्यक् प्रणिहितमपि···हीनमपि, कामधातूपपन्नानां सर्वसत्त्वानामन्ततो मृगपक्षिणामपि···मध्यमचित्तं···प्रणीतं···सुखं···दुःखं······अदुःखासुखवेदनासम्प्रयुक्तमपि चित्तं जानाति।···सा पुनरियमभिज्ञा बुद्धस्य बोधिसत्त्वानामिन्द्रियपरापरज्ञानाय सत्त्वानां नानाधिमुक्तिज्ञानाय नानाधातुचरितज्ञानाय यथायोगञ्च प्रतिपत्सु चित्रासु निर्वाणपुरःसरीषु सम्यक् सन्नियोगाय। इयमस्याः कर्म वेदितव्यम्॥

एतानि चत्वारि स्थानान्येभिश्चतुर्भिः कारणैस्समन्वेष्य पञ्चसु स्थानेषु विनयते । तद्यथा समाधिसंभार-रक्षोपचये, प्राविवेक्ये, चित्तैकाग्रतायाः(यां[1]), [5] आवरणविशुद्धौ, मनस्कारभावनायां च । तत्र **समाधिसंभाररक्षोपचयः** यावता शीलसम्वरेण समन्वागतो भवति । तत्र चाप्रमादविहारी भवत्यपपरिणाय[2] बुद्धानुशिष्टस्य च बुद्धानुज्ञातस्य पुद्गलस्य, शील-स्कन्धस्य शिक्षापदप्रतिपत्त्या वीर्यं न स्रन्स(स्रंस)यति । एवमयमविगताच्छीलप्रतिसम्वराच्छि[3][ 6 ]क्षामार्गान्न परिहीयते । अनधिगतं च शिक्षामार्गमधिगच्छति । यथा शीलसम्वर एवमिन्द्रियसम्वरः, भोजने मात्रज्ञता,
11A—4// पूर्वरात्रापररात्रं जागरिकानुयोगः, संप्रजानद्विहा//[1]-रिता, एवं यावच्छ्रमणालंकार इति ।[4] यस्य यस्य संभारपरिगृहीतस्य धर्मप्रविभागस्य लाभी भवति । स तं वा रक्षत्युत्तरि(रं) च प्रविभागस्य प(ा)रिपूरये । यथोक्तादभूराधिककसमुदाचाराय[3] [च्]छन्दजातो विहेरयु(रेत्)मु(मू)कजात आरब्धवीर्यश्चायमुच्यते समाधिसंभाररक्षोपचयः । स एवं हानभागीयांश्च धर्मान् [2]विरज्यति, शेषभागीयांश्च धर्मान् प्रति-षेवमाणः प्रविविक्तविहारी भवति ।

1. Wayman reads चित्तैकाग्रतायां.
2. This seems to be a corrupt form of परिणीय(?).
3. Too dim and indistinct, text not readable in a correct form.
4. See, Yogasthāna, I, p. 9, 36sq.

**प्राविवेक्यं कतमत् ।**[1] **या स्थानसम्पदीर्यापथ-सम्पत् । तत्र स्थानसम्पत्तद्यथा ।** अरण्यम्वा, वृक्षमूलम्वा, शून्यागारम्वा—तत्र पर्व्वतकन्दरं वा, गिरिगुहा वा, पलालपुंजानि वा शून्यागारमित्युच्यते । तत्र वनप्रस्थं वृक्षमूलमित्यु[3]च्यते । तत्राभ्यवकाशं, श्मशानं, प्रान्तश्च शयनासनमरण्यमित्युच्यते । तदिदमभिसमस्य स्थानं वेदितव्यं । यदुतारण्यवृक्षमूल-शून्यागारपर्वतगिरिगुहापलालपुंजाभ्यवकाशश्मशानवन–प्रस्थानि प्रान्तानि शयनासनानि । **स्थानसम्पत्पुनः पञ्चविधा ।** इह स्थानमादित एवाभिरूपं भवति । दर्शनीयं [4] प्रासादिकमारामसम्पन्नं, वन-सम्पन्नं, पुष्करिणीसम्पन्नं, शुभं, रमणीयं, नोत्कूल-निकूलं, न स्थाणुकण्टकधानं । न बहुपाषाणशर्क-रकपालं । यत्रास्य दृष्टवा चित्तमभिप्रसीदति । वासाय, प्रहाणाय, प्रयोगाय । हृष्टचित्तः । प्रमुदित-चित्तः । प्रहाणं प्रदधाति इयं **प्रथमा स्थानसम्पत् ।** पुनरयं (रिदं) [5]न दिवा अल्पविलोकं भवति । रात्रावल्पशब्दवन्यनिर्घोषमल्पदंशमशकवातातपसरीसृप–संस्पर्शमियं**द्वितीया स्थानसम्पत् ।** यत्पुनरपरं सिंह-व्याघ्र-द्वीपि–तस्करपरचक्रमनुष्यामनुष्यभयभैरवापगतं-भवति । यत्र विश्वस्तो निःशंकितमानसः । सुखं स्पर्शं विहरति । इतीयं **तृतीया स्था[6]नसम्पत् ।**

---

1. See, ibid, p. 12.

पुनरपरं ये ते आनुलोमिका जीवितपरिष्काराश्ची-वरादयः। ते [अ]त्राल्पकृच्छ्रेण सम्पद्यन्ते। येनायं पिण्डकेन न क्लाम्यति। यत्रासम्विधान इयं **चतुर्थी स्थानसम्पत्।** पुनरपत्रं(रं) कल्याणमित्रपरिगृहीतं भवति। तद्रूपा अत्र विज्ञाः सब्रह्मचारिणः प्रति-वसन्ति। येस्याकृतानि नोत्तानीकुर्व्वन्ति। गंभी-[7]रं चार्थपदं प्रज्ञया प्रतिविध्य सुष्ठु च प्रकाश-यन्ति। ज्ञानदर्शनस्य विशुद्धये। इयं **पञ्चमी स्थानसम्पत्।**

**तत्र कतमा ईर्यापथसम्पत्।**[1] दिवा चंक्रमेण वातिनामयति। निषद्य यावता एवं[2] रात्र्याः प्रथमं यामं, मध्यमे न(च)यामे दक्षिणेन पार्श्वेन (ण)[3] शय्यां कल्पयति। पश्चिमे च यामे लघुलघ्वे[8]वोत्तिष्ठते। चंक्रमनिषद्यया वातिनामयति। तस्मिन्निदं सम्पन्ने शयनासने, तथा बुद्धानुज्ञाते मञ्चे वा, पीठे वा, तृणे वा, संस्तरणे वा निषीदति। पर्यङ्कमाभुज्य तु। केन कारणेन पञ्च कारणानि समनुपश्यन् संपिण्डितेन कायेन प्रश्रब्धिरुत्पद्यते। प्रश्रब्ध्युत्पत्तये अनुकूलोय-

---

1. cp. Bodhi, p. 133 : चत्वार ईर्यापथाः। चंक्रमः स्थानं निषद्या शय्या च। तत्र बोधिसत्त्वः चंक्रमनिषद्याभ्यां दिवा रात्रौ वा आवरणीयेभ्यो धर्मेभ्यश्चित्तं परिशोधयंस्तन्निदानं परिश्रमजं दुःखमधिवासयति। न त्वकाले पार्श्वमनुप्रयच्छति मंचे वा पीठे वा तृणसंस्तरे वा पर्णसंस्तरे वा।
2. Wayman reads च ना एवं.
3. Wayman reads पार्क्षेण.

11B—4// मीर्या //[1]पथ इति । तथा चारिका[का]लं[1] निषद्यया-शक्तो[2]व्यतिनामयितुं । ना चास्यानेनेर्यापथेन काय-क्लेशो भवति । तथा असाधारणोयमीर्यापथोन्यती-र्थिकैः । परप्रवादिभिः । तथा परे अनेनेर्यापथेन निषण्णं दृष्ट्वा अत्यर्थमभिप्रसीदन्ति बुद्धैश्च बुद्धश्रावकैश्चायं ईर्यापथो निषेवितश्चानुज्ञातश्च [।] इमा[2]नि पंचकारणानि । संपश्यति निषीदति । पर्यङ्कमाभुज्य ऋजुं कायं प्रणिधाय ।

**तत्र कतमा कायसंज्ञता ।** कायस्य स्पष्टोच्छ्रित-प्रणिहितता । चित्तेन न निःशोच्येन कुहनापगते-नार्जवेन । तत्र ऋजुना कायेन प्रगृहीतेन स्त्यानमिद्धं चित्तं न पर्यादाय तिष्ठति । निष्कुहकेन चित्ते बहिर्धा विक्षे[3]पो न पर्यादाय तिष्ठति । प्रतिमुखां(खीं) स्मृतिमुपस्थाप्य ।

**तत्र कतमा प्रतिमुखा(खी) स्मृतिः ।** यामु-पस्थापयति योनिशो मनसिकारसंप्रयुक्ता स्मृतिः प्र[ति]मुखे(खी)त्युच्यते । सर्वकृष्णपक्षप्रमुखतया, प्रतिविलोमतया । अपि च समाधिनिमित्तालम्बना प्रतिभालम्बना स्मृतिः प्रतिमुखे(खी)त्यु[4]च्यते । सर्व्वसमाहितभूमिकालम्बनप्रमुखतया[।] इयमुच्यते ईर्यापथसम्पत् ।

1. MS. blurred, letters indistinct.
2. MS. dim, letters illegible.

**व्यपकर्षः कतमः** । आह । द्विविधः **कायव्यपकर्षः** । **चित्तव्यपकर्षश्च** । तत्र **कायव्यपकर्षो** यो गृहस्थप्रव्रजितैः सार्धमविहारिता ॥ तत्र **चित्तव्यपकर्षः** यः क्लिष्टमव्याकृतं च मनस्कारं च वर्जयित्वा । [5]समाहितभूमिकं वा समाधिसंभारप्रायोगिकं वा मनस्कारं भावयति । कुशलमर्थोपसंहितमयमुच्यते चित्तव्यपकर्षः । तत्र स्थानसम्पत् या चेयमीर्यापथसम्पत् । यश्चायं कायव्यकर्षः । यश्च चित्तव्यपकर्षः (यश्चित्तव्यपकर्षस्[1])तदेकत्यमभिसंक्षिप्य प्राविवेक्यमित्युच्यते ।

**तत्रैकाग्रता कतमा**[2] । [6]आह । पुनः पुनः स्मृतिसभागालम्बना प्रवाहानवद्यरतियुक्ता । चित्तसन्ततिर्या सा समाधिरित्युच्यते । कुशलचित्तैकाग्रतापि [।]किं पुनः पुनरनुस्मरति । आह । ये धर्मा उद्गृहीता[:]श्रुता, या चाववादानुशासनी[3] प्रतिलब्धा भवति । गुरुभ्यस्तामधिपतिं कृत्वा समाहितभूमिकनिमित्तं संमुखीकृत्य तदालम्ब[7]नां प्रवाहयुक्तां स्मृति

1. Repetition, may be deleted.
2. cp. AK, VIII.1; portion on एकाग्रता and notes; on समाधि see *supra*, pp. 267-8; Bodhi, pp. 77, 177; the four dhyānas, see Ada., pp. 94-7.
3. On avavāda and anuśāsana, see *supra*, pp. 258-61; Asaṅga discusses this point at length in MSAB and names one of the Chapters अववादानुशासन्यधिकार (XIV, p. 90 sq).

मनुवर्त्तयति । उपनिबध्नाति । **तत्र कतमत्स-भागालम्बनं ।** यत्किचित्समाहितभूमिकमालम्बनमने-कविधं । बहुनानाप्रकारं । येनालम्बने चित्तं परं समाहितमिदमुच्यते । सभागमालम्बनं [।] कस्यैतत् । सभागं[1] [।] आह । क्षयस्य वस्तुनः प्रतिरूपकमे-तत्तस्मात्सभागमि[8]त्युच्यते । या पुनरभिक्षयाकारा निछिद्रा(निश्छिद्रा) निरन्तरा स्मृतिः प्रवर्तते । तेनालम्बनेन सततं च सत्कृत्य चेयं प्रवाहयुक्तता । यत्पुनस्तस्मिन्नेवालम्बने अभिरतस्यासंक्लिष्टविहा-रिता । वाहिमार्गता स्मृतिरियमवद्यरतियुक्तता । तेनाह पुनः पुनरपरानुस्मृतिसभागालम्बनप्रव[ा]हान-
11A—5// वद्यरतियुक्ता चि//[1]त्त सन्ततिः । समाधिरिति सा खल्वेषा एकाग्रता शमथपक्ष्या विपश्यनापक्ष्या च । तत्र या नवाकारायां चित्तसंतथौ (स्थितौ) वा [सा] शमथपक्ष्या, या पुनश्चतुर्विधे प्रज्ञाधारे सा विपश्यनापक्ष्या ।

**तत्र नवाकारा चित्तस्थितिः** कतमा । इह भिक्षुरध्यात्ममेव चित्तं स्थापयति । संस्थापयति । अवस्थापयत्युपस्थापय[2]ति । दमयति । शमयति ।

1. सभाग has been defined as : 'इन्द्रियविषयविज्ञानानामन्योन्यभजनं भागः । स एषामस्तीति सभागः । स्पर्शसमानकायत्वाद्वा ।' 'यो हि विषयो यस्य विज्ञानस्य नियतो यदि तत्र तद्विज्ञानमुत्पन्नं भवत्युत्पत्तिधर्मि वा एवं स विषयः सभाग इत्युच्यते ।' AKB, I.39; cp. यः स्वक्रियां भजते स सभाग इति । ····Adv., p. 29.

व्युपशमयति । एकोतीकरोति । समाधत्ते [।]

**कथं स्थापयति ।** सर्व्वबाह्येभ्य आलम्बनेभ्यः प्रतिसंक्षिप्याध्यात्ममविक्षेपायोपनिबध्नाति । यत्तत्प्रथमोपनिबद्धो विक्षेपाय इयं स्थापना ।

**कथं संस्थापयति ।** तत्प्रथमोपनिबद्धं यदेव चित्तं तद्व[ल[1]]मौदारिकमसंस्थित[3]मपरिसंस्थितं तस्मिन्नेवालम्बने प्रवर्द्धनयोगेन प्रसादयोगेन साभिनिग्रहं सूक्ष्मीकुर्व्वन् अभिसंक्षिपन् संस्थापयति ।

**कथमवस्थापयति ।** स चेच्चित्तमेव स्थापयतः । स्मृतिसंप्रमोषाद्बहिर्धा विक्षिप्यते । स पुनरपि तथैव प्रतिसंहरन्ति(ति) । एवमे(म)व स्थापयति ।

**कथं दमयति ।** यै[4]र्निमित्तैरस्य तच्चित्तं विक्षिप्यते । तद्यथा गत्वरसंस्प्रष्टव्यनिमित्तै रागद्वेषमोहस्त्रीपुरुषनिमितैश्च[।]तत्रानेन पूर्व्वमेवादीनवसंज्ञोद्गृहीता भवति । तामधिपतिं कृत्वा तेषु निमित्तेषु तस्य चित्तस्य प्रसरं न ददाति । एवं दमयति ।।

**कथं शमयति ।** यैर्वितर्कैः कामवितर्कादिभिः । यैश्चोपक्ले[5]शैः । काम[च्]छन्दनिवरणादिभिः । तस्य चेतसः संक्षोभो भवति । तत्रानेन पूर्वमेवादीनवसंज्ञोद्गृहीता भवति । तामधिपतिं कृत्वा तस्य चेतसः । तेषु वितर्कोपक्लेशेषु । प्रसरं न ददात्येवं शमयति ।

1. A separate hand adds this.

**कथं व्युपशमयति ।** स्मृतिसम्प्रमोषात्तदुभय-समुदाचार(रे) सत्युत्पन्नोत्पन्नान् वितर्को[6]पक्लेशान् नाधिवासयति । प्रजहाति । एवं व्युपशमयति ।

**कथमेकोतीकरोति**[1] **।** साभिसंस्कारं निच्छि-(श्छि)द्रं निरन्तरं समाधिप्रव[ा]हमा(म)वस्थापयत्येव मेकोतीकरोति ।

**कथं समाधत्ते ।** आसेवनान्वयाद्भावनान्वयाद्-बहुलीकारान्वयादनाभोगवाहनं । स्वरसवाहनं ।

11B—5// मार्गं लभते । येनान//[1] भिसंस्कार(रे)वा(णा)-नाभोगेनास्य चित्तसमाधिप्रवाहः । अविक्षेपे प्रवर्त्तते । एवं समाधत्ते ।

**तत्र षड्विधबलैर्नवाकारा**[2] **चित्तस्थितिः सम्पद्यते । तद्यथा श्रुतचिन्ताबलेन**[3] **। स्मृतिबलेन**[4] **। वीर्य-**

---

1. cp. Vsm., IV.143 : एको उदेती ति एकोदि । क्तिक्कविचारेहि अनज्झारूळ्हत्ता अग्गो सेट्ठो हुत्वा उदेतीति अत्थो । सेट्ठोपि हि लोके एकोति वुच्चति । वितक्कविचारविरहितो वा एको असहायो हुत्वा इति पि वत्तु वट्टति । अथ वा, सम्पयुत्त धम्मे उदायतीति उदि । उट्ठापेतीति अत्थो । सेट्ठट्ठेन एको च सो उदि चा ति एकोदि । समाधिस्सेदं अधिवचनं । इति इमं एकोदिं भावेति वड्ढेती ति इदं दुतियज्झानं एकोदिभावं । सो पनायं एकोदि यस्मा चेतसो, न सत्तस्स न जीवस्स, तस्मा एवं चेतसो एकोदि भावं ति वुत्तं ।; for a discussion on this point, see AS, III.342-5; the second dhyāna and the other two dhyānas wherein वितर्क and विचार do not arise, are called एकोदि [Sanskrit एकोदि (ति, ती)], see also Bodhi, p. 77.9; Vbh., p. 286; Vsmt., IV.143.
2. Wayman reads तत्र षड्भिर्बलेन[न]वाकार.
3. Wayman adds [बलेन] after श्रुत.
4. Wayman adds here सम्प्रजन्यबलेन.

**बलेन । परिचयबलेन च ।**

तत्र **श्रुतचिन्ताबलेन** तावत् । यच्छ्रुतं, या चिन्ता[ता]मधिपतिं कृत्वा चित्तमादित आलम्बने स्थापयति । [2] तत्रैव च । प्रबन्ध[1]योगेन संस्थापयति । तत्रोपनिबद्धं चित्तं स्मृतिबलेन प्रतिसरन्नवस्थापयति । उपस्थापयति । ततः संप्रजन्यबलेन निमित्तवितर्कोपक्लेशेषु प्रसरमननु-प्रयच्छन् दमयति । शमयति । वीर्यबलेन । तदुभयसमुदाचारं च नाधिवासयति । एकोती-करोति । परिचय[3]बलेन समाधत्ते [।]

तत्र नवाकारायां चित्तस्थितौ **चत्वारो मनस्कारा** वेदितव्याः । बलवाहनः स[च]छिद्रवाहनो निछि-(श्छि)द्रवाहनः । अनाभोगवाहनश्च । तत्र स्था-पयतः, संस्थापयतो बलवाहनो मनस्कारः । अव-स्थापयत, उपस्थापयतो, दमयतः, शमयतः, व्युप-शमयतः, सच्छिद्रवाहनो मनस्कारः । एकोती[4]-कुर्व्वतो निछि(श्छि)द्रवाहनो मनस्कारः । समा-दधतः । अनाभोगवाहनो मनस्कारो भवति । एवमेते मनस्कारायां चित्तस्थितौ शमथपक्ष्या भवन्ति । यः पुनरेवमध्यात्मं चेतःशमथस्य लाभी विपश्यनायां प्रयुज्यते । तस्यैत एव चत्वारो मनस्कारा विपश्य-नापक्ष्या भवन्ति ।।

1. Syllable illegible.

**चतुर्विधा विपश्यना । कतमा ।** [5] भिक्षुर्धर्मान् विचिनोति । प्रविचिनोति । परिवितर्कयति । परिमीमान्सा(मांसा)मापद्यते । यदुताध्यात्मं चेतःशमथं निश्रित्य[1] [।]

**कथं च विचिनोति ।** चरितविशोधनं वा आलम्बनं । कौशल्यालम्बनं वा, **क्लेशविशोधनं** वा । यावद्भाविकतया विचिनोति ।[2] यथावद्भाविकतया । प्रविचिनोति । सविकल्पेन [6]**मनस्कारेण प्रज्ञासहगतेन । निमित्तीकुर्व्वन्नेव परिवितर्कयति ।** सन्तीरयत्यधिमीमांसामापद्यते ।

सा खल्वेषा विपश्यना त्रिमुखी षड्वस्तुप्रभेदालम्बना वेदितव्या(:) । कतमानि त्रीणि (।) मुखानि [।] **विपश्यना यन्निमित्तमात्रानुचरिता ।**
11A—6// **विपश्यना पर्येषणानुचरिता, पर्येषि**//[1] **ता च । प्रत्यवेक्षणानुचरिता ।**

तत्र निमित्तमात्रानुचरिता [।] येन (यया)

---

1. On विपश्यना, see, Yogasthāna, II, p. 287; Bodhi, p. 77; PTSD, s.v. Vipassanā.
2. cp. *supra*, p. 196 sq.; Asm., pp. 80-1; cp. Bodhi, p. 24 : (तत्त्वार्थपटलम्) : तत्त्वार्थः कतमः । समासतो द्विविधः । यावद्भाविकताञ्च धर्मणामारभ्य या धर्माणां भूतता यावद्भाविकताञ्चारभ्य या धर्माणां सर्वता । इति भूतता सर्वता च धर्माणां समासतस्तत्त्वार्थो वेदितव्यः । स पुनरेष तत्त्वार्थः प्रकारभेदतश्चतुर्विधः । लोकप्रसिद्धो युक्तिप्रसिद्धः क्लेशावरणविशुद्धिज्ञानगोचरो ज्ञेयावरणविशुद्धिज्ञानगोचरश्च । see, pp. 24-7.

श्रुतमुद्गृहीतं । धर्मं अववादस्यासमाहितभूमिकेन मनस्कारेण मनसि करोति । न चिन्तयति । न तुलयति । नोपपरीक्षते । **इयन्निमित्तमात्रानुचरिता** भवति ।

यदा पुनश्चिन्तयति । तीरयति तुलयत्युपपरीक्षते । तदा **पर्येषणानु**[2]**चरिता** भवति ।

यदा पुनस्तीरयित्वा उपपरीक्ष्य यथा व्यवस्थापितमेव प्रत्यवेक्षते । तदा **प्रत्यवेक्षणानुचरिता** भवतीयं त्रिमुखा(खी) विपश्यना ।

कतमानि षड्वस्तुप्रभेदालम्बनानि । स पर्येषमाणः । **षड्वस्तूनि पर्येषते । अर्थं, वस्तु, लक्षणं, पक्षं, कालं, युक्तिश्च** पर्येष्यन्नेतान्येव (पर्येषमाण एतान्येव) प्रत्यवेक्षते । [3]

**कथमर्थं** पर्येषते । अस्य भाषितस्यायमर्थो[अ]स्य भाषितस्यायमर्थ(त) इत्येवमर्थं पर्येषते ।

कथं **वस्तु** पर्येषते । द्विविधं वस्तु [।] आध्यात्मिकं बाह्यञ्च [।] एवं वस्तु पर्येषते ।

कथं **लक्षणं** पर्येषते । द्विविधं । स्वलक्षणं[1] सामान्यलक्षणं च । एवं लक्षणं पर्येषते ।

1. cf. स्वभाव एवैषां स्वलक्षणम्···सामान्यलक्षणं तु अनित्यता संस्कृतानां दुःखता सास्रवाणां शून्यतानात्मते सर्वधर्माणाम् । AKB, VI.14; see also AKV, p. 529; later on in the Buddhist Nyāya works the conception of svalakṣana was related to that of क्षणभङ्ग and अपोह, see JMN, p. 1, 217 sq.; 543 sq.

कथं **पक्षं** पर्येषते । द्विविधः पक्षः [4] कृष्णपक्षः शुक्लपक्षः [।] कृष्णपक्षं दोषतः । आदीनवतः । शुक्लपक्षं पुनर्गुणतोऽनुशंसतश्चैवं [पक्षं] पर्येषते ।

कथं **कालं** पर्येषते । त्रयः कालाः[1][।] अतीतो[ऽ]-नागतो वर्तमानश्च । एवमेतदभूदतीतेध्वनि एवमे-तद्भविष्यति । अनागतेध्वनि । एवमेतदेतर्हि । प्रत्युत्पन्नेध्वनीत्येवं कालं पर्येषते ।

**कथं** [5] **युक्तिम्पर्येषते** । चतस्रो युक्तयः । [।][2]अपेक्षायुक्तिः, कार्यकारणयुक्तिः, उपपत्तिसाधन-युक्तिर्धर्मतायुक्तिश्च ।। तत्रो(त्रा)पेक्षायुक्त्या संवृतिं च संवृतितः । परमार्थं च परमार्थतः । निदानं च निदानतः । पर्येषते । काय(र्य)कारणयुक्त्या कारित्रं धर्माणां पर्येषते । अयन्धर्मः, इदं कारित्रं, अयमिदं [6]कारित्र इति [।] उपपत्तिसाधनयुक्त्या त्रीणि प्रमाणानि पर्येषते । आप्तागममनुमानं प्रत्यक्षं च[।] किमस्ति(।) अत्रात्मा, नास्तीति किं प्रत्यक्ष-मुपलभ्यते न वेति, किमनुमानेन प्रयुज्यते न वेति । तत्र धर्मतायुक्तया तथाभूततां धर्माणां प्रसिद्धधर्मता-मचिन्त्यधर्मतामवस्थितधर्मतामधिमुच्यते, न चिन्त[7]-यति । न विकल्पयत्येवं युक्तिम्पर्येषते ।।[3]

1. On काल, *vide* MKV, XIX; CŚ, XI.
2. Wayman adds hereafter पर्येषणया.
3. On the four Yuktis, see Asm., p. 81; *supra*, p. 196.

इयं षड्वस्तुप्रभेदालम्बना(नि) त्रिमुखा(खी)-विपश्यना समासतः । अनया सर्वविपश्यनासंग्रहः ।

केन पुनः कारणेन **षट्प्रभेदा** व्यवस्थापिता[ः।] आह । त्रिविधमवबोधमधिकृत्य भाषितार्था(न)-वबोधम्वस्तुपर्येषन्ततावबोधं । यथाभूतावबोधं च ।
11B—6// तत्रा//[1]र्थपर्येषणया भाषितार्थावबोधः । वस्तु-पर्येषणया, स्वलक्षणपर्येषणया च वस्तुपर्येषन्तता-वबोधः । तत्र सामान्यलक्षणपर्येषणया, पक्षपर्येषणया, कालयुक्तिपर्येषणया[1] यथाभूतावबोधः । एतावच्च योगिना ज्ञेयं । यदुत भाषितस्यार्थः, ज्ञेयस्य वस्तुनः यावद्भाविकता । यथावद्भाविकता च । तत्राशु-[2]भो(भे)प्रयुक्तो योगी षड्वस्तूनि पर्येषते । आह [।] अशुभाधिपतेयं धर्मं श्रुतमुदगृहीतमधिपतिं कृत्वा समाहितभूमिकेन मनस्कारेणैवमर्थप्रतिसंवेदी भवति । अशुभया अशुभ्येतत्प्रतिरूपमेत्प्रतिक(घ)मेतद् दुर्गन्ध-

1. cp. the four पर्येषणावस्तूनि, Bodhi, p. 199 : नामपर्येषणा । वस्तु-पर्येषणा । स्वभावप्रज्ञप्तिपर्येषणा । विशेषप्रज्ञप्तिपर्येषणा ।; cp. p. 36 : तत्र नामपर्येषणा यद् बोधिसत्त्वो नाम्नि नाममात्रं पश्यति । एवं वस्तुनि वस्तुमात्रदर्शनं वस्तुपर्येषणा स्वभावप्रज्ञप्तौ । स्वभावप्रज्ञप्तिमात्रदर्शनं स्वभावप्रज्ञप्तिपर्येषणा । विशेषप्रज्ञप्तौ विशेषप्रज्ञप्तिमात्रदर्शनं विशेषप्रज्ञप्तिपर्येषणा । see also, p. 37; in the present text Asaṅga does not enumerate these four पर्येषणाs, but seems to have kept in his mind this grouping of पर्येषणाs also while discussing the three अवबोधs, cp. the four kinds of यथाभूतपरिज्ञान according to the four पर्येषणाs, ibid, loc. cit.

मामगन्धमिति । एभिराकारैरेवंभागीयैस्तस्यैवाशुभाधिकृतस्य धर्मस्य पूर्व्वंश्रु[3] तस्यार्थप्रतिसंवेदना[।] **एवमशुमतयार्थं** पर्येषते ।

**कथं वस्तु पर्येषते** [।] स एवमर्थप्रतिसंवेदी तामशुभतां द्वयोर्भावयोर्व्यवस्थापितां पश्यत्यध्यात्मम्बहिर्धा च ।

**कथं स्वलक्षणं पर्येषते ।** अध्यात्मं तावदन्तःकायगतामशुभतां प्रत्यशुभतामधिमुच्यते ।। सन्त्यस्मिन्काये केशरोमाणि विस्तरेण यावन्मस्त[4]कं मस्तकलुंगं प्रश्राव(प्रस्राव)इति । तां पुनरनेकविधामन्तःकायगतामशुभतां द्वाभ्यां धातुभ्यां संगृहीतामधिमुच्यते । पृथिवीधातुना, अब्धातुना च [।] तत्र केशरोमाण्युपादाय । यावद्यकृत्पुरीषा पृथिवीधातुरधिमुच्यते । अश्रुद्वेदनामुपादाय यावत्प्रस्रावादब्धातुमधिमुच्यते । बहिर्धा वा पुनर्बाह्यगतामशुभ[5]तां विनीलकादिभिराकारैरधिमुच्यते । तत्र विनीलकमधिमुच्यते । यदनेन मृतकुणपं स्वयं वा दृष्टं भवति । पुरतो वा श्रुतं परिकल्पितं वा, पुन[ः]स्त्रिया वा, पुरुषस्य वा, मित्रस्य वा, अमित्रस्य वा, उदासीनस्य[6]वा । हीनम्वा, मध्यम्वा, प्रणीतम्वा, दह्रस्य वा, मध्यस्य वा, वृद्धस्य वा [।]

तत्र निमित्तमुद्गृह्य एकाहमृतं प्रगडितशोणितमयं प्राप्तपूयभावं विनीलकमित्यधिमुच्यते । द्व्यहमृतं

प्राप्तपूयभावं । असंजातक्रिमिविपूयकमित्यधिमुच्यते । सप्ताहमृतं संजातक्रिमि आध्मातं च विमद्रामकं व्याध्मातकमित्यधिमुच्यते[7] काकैः कुरलै(रैः) खाद्यमानं गृध्रैः श्वभिः शृगालैर्विखादिकमित्यधिमुच्यते । विखादितम्त्वा पुनरपगतत्वङ्मान्सशोणितं स्नायुमात्रोपनिबद्धं विलोहितकमित्यधिमुच्यते । दिशोदिशमंगप्रत्यंगेषु विक्षिप्तेषु विश्लेषितेषु समान्से(मांसे)षु निर्मान्से(मांसे)षु किंचिच्छिष्टमान्से(मांसे)षु विक्षिप्तकमित्यधिमुच्यते ।। अन्यतो वा हस्तास्थी[8]न्यन्यतः पादास्थीन्यन्यतो जान्वस्थीन्यूर्ध्वस्थीनि, बाह्वस्थीनि, प्रबाह्वस्थीनि । पृष्ठा(ष्ठी) वंशः । हनुनक्रं दन्तमाला मध्यतः । शिरस्कपालं दृष्ट्वान्य[ा]स्थीन्यधिमुच्यते । यदा पुनः सम्बद्धमरिक्षकरंकमविशीर्णं मनसि करोति । केवलं निमित्तग्राही भवति । न
11A—7// तु तस्यांग//[1] प्रत्यंगेषु व्यंजनग्राही । एवं शंकलिकामधिमुच्यते । यदा [त्वनु[1]] व्यंजनग्राही भवति । तदास्थिशंकलिकामधिमुच्यते । अपि च **द्वे शंकलिके देहशंकलिका, प्रत्यंगशंकलिका च । तत्र देह शंकलिका** श्रोणीकटाहमुपादाय । पृष्ठीवंशो यावत्, यत्र शिरस्कपालं प्रतिष्ठितं । **प्रत्यंगशंकलिका** सम्बद्धानि बाह्वस्थीनि च स[2]म्बद्धानि । तत्र या देहशंकलिका च । तत्र देहशंकलिका श्रोणीकटाह-

1. Letters damaged by pin-hold.

मुपादाय । पृष्ठीवंशो यावत् यत्र शिरस्कपालं प्रतिष्ठितं । प्रत्यंगशंकलिकासम्बद्धानि बाह्व-स्थीनि । ऊरुजंघास्थीनि च । तत्र या देहशं-कलिका । सा शंकलिकैवोच्यते । या पुनः प्रत्यंग-शंकलिका सा अस्थिशंकलिकेत्युच्यते ।

अपि च **द्वौ शंकलिकाया**[3]**निमित्तग्राहौ** चित्र-कृतायाः पाषाण काष्ठशादकृताया वा । भूतशंकलिकाया वा । अभूतशंकलिकाया वा । निमित्तं मनसिकरोति । तदाशंकलिकामेवाधिमुच्यते नास्थिशंकलिकां । यदा पूनर्भूतशंकलिकाया निमित्तं मनसि करोति । तदा-स्थिशंकलिकामेवाधिमुच्यते । नास्थिशंकलिकां । (यदा पुनर्भूतशंकलिकाया निमित्तं [4] मनसि करोति । तदास्थिशंकलिकामधिमुच्यते[1]) । स खल्वेष बाह्याया वर्णनिभाया उपादायरूपगताया-**स्त्रिविधो** (।) **विपरिणामः । स्वरसविपरिणामः । परकृतस्तदुभयपक्ष्यश्च ।**

तत्र विनीलकमुपादाय । यावद् व्याध्मातकाः (कात्) स्वरसविपरिणामः । तत्र विखादितकमु-पादाय यावद्विक्षिप्तकात्परकृतो वि[5]पर(रि)णामः । तत्रास्थिका(वा), शंकलिका वा इत्ययमुभयपक्ष्यो विपरिणाम इति । य एवं यथाभूतं प्रजानाति ।

---

1. This is a repetition, which is obviously the scribe's mistake and may be deleted.

बहिर्धा अशुभतामाकारत एवं बहिर्धा अशुभतायाः स्वलक्षणं पर्येषते ।

**कथमशुभताया**[:] (।) **सामान्यलक्षणं पर्येषते।** यथा चाध्यात्मं बहिः कायस्याशुभावर्ण्णनिभया अपरिणता यावद्बहिर्धा बहिः[6]कायस्याशुभा वर्ण्णनिभा विपरिणता अध्यात्मिकया अशुभया वर्ण्णनिभा समानधर्मतां तुल्यधर्मतामधिमुच्यते । इयमपि मे शुभा वर्ण्णनिभा एवं धर्मिणीति । येऽपि केचित्सत्त्वा अनया शुभया वर्ण्णनिभया समन्वागतास्तेषामपि साशुभायां एवं धर्मिणी तद्यथेयम्बाह्या ।। **एवं सामान्यलक्षणं पर्येषते** ।[7]

**कथं पक्षं पर्येषते ।** तस्यैवं भवति । यदाह । मस्या (अनया) [ऽशुभया][1] वर्ण्णनिभया एतामशुभमता(तां)यथाभूतमप्रजानन्नध्यात्मं वा बहिर्धा वा शुभायां वर्ण्णनिभायां संरागमुत्पादयामि विपर्यास एव कृष्णपक्षसंगृहीतः । निःसरणधर्मः सदुःखः सविघातः सोपद्रवः सपरिदाहः । अतोनिदाना उत्पद्यन्ते । आय[8]त्यां जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासाः । या पुनरस्यां शुभायाम्वर्ण्णनिभायां । अशुभधर्मतानुगता यथाभूतानुपश्यना शुक्लपक्ष्या[।]एष धर्मः अदुःखः । अविघातः । यावदतो निदाना उपायासा निरुध्यन्ते । तत्र योयं

1. MS. omits this.

11B—7// कृष्णपक्षसमयो नाधि//[1]वासयितव्यः। प्रहातव्यो विशोधयितव्यः। शुक्लपक्ष्यः पुनरनुत्पन्न उत्पादयितव्यः। उत्पन्नस्य च स्थितिर्वृद्धिर्वैपुल्यता (विपुलता) करणीया। एवं पक्षं पर्येषते।

कथं **कालं पर्येषते**। तस्यैवं भवति। येयमध्यात्मं [अ[1]]शुभा वर्णनिभा सेयम्वर्त्तमानमध्वानमुपादाय या पुनरियं बहिर्धा अशुभा वर्णनिभा इयमपि वर्तमान(ता[2])मेवाध्वान[2]मुपादाय। अतीतं पुनरध्वानमुपादाय। शुभा बभूव। सैषा तावदतीतमध्वानमुपादाय शुभा सती तद्यथा मे एतर्हि। वर्तमानमध्वानमुपादाय। एवमानुपूर्व्या एतर्हि वर्तमानमुपादाय अशुभा संवृत्ता, सा मे इयं [अ]शुभा वर्णनिभा वर्त्तमानमध्वानमुपादायाशुभा सती। अनागते [अ]ध्वन्यशुभा न भविष्यतीति। नेदं स्था[3]नं विद्यते। तद्यथैषा बाह्या एव[ं]-वर्तमानमध्वानमुपादाय। इति ह्यतीतानागतप्रत्युत्पन्नेष्वध्वसु अयमपि मे काय एवंभावी, एवंभूत, एतां च धर्मतामनतीत इत्येवं कालं समन्वेषते।

**कथं युक्ति समन्वेषते**। तस्यैवं भवति। नास्तीति स कश्चिदात्मा वा, सत्त्वो वाध्यात्मं वा, बहिर्धावोपलभ्य[मानः][2] यः शुभो वा स्यादशुभो वा[।]-

1. MS. omits this.
2. Should be deleted.

[4]अपि च रूपमात्रमेतत्कण्डवरमात्रमेतद्यत्रेयं संज्ञा सम[ा]ज्ञा प्रज्ञप्तिर्व्यवहारः। शुभमिति वा अशुभमिति वा। अपि च—

*आयुरूष्माथ विज्ञानं (।) यदा कायं जहत्यमी [।]*
*अपविद्धस्तदा शेते यथा काष्ठमचेतनं ॥*

तस्यास्य मृतस्य कालगतस्यानुपूर्व्वेण विपरिणता इमा अवस्थाः प्रज्ञायन्ते। यदुत विनीलकमिति[5]वा यावदस्थिशंकलिकाया वा अयमपि मे कायः। पूर्व्वकर्मक्लेशविद्धः। मातापित्र्यशुचिसंभूत ओदनक(कु)ल्माषोपचितः। येन हेतुना, येन निदानेन इयं तावत्कालिकी शुभा वर्ण्णनिभा। प्रज्ञायते। अन्तःकायः पुर्नानित्यं नित्यकालमध्यात्मं च बहिर्धा चाशुभा एवं संवृतिपरमार्थनिदानतः। **अपेक्षायुक्ति पर्येष[6]ते।** तस्यैवं भवतीयमशुभता। एवमासेविता भाविता बहुलीकृता कामरागप्रहाणाय सम्वर्तते। कामरागश्च प्रहातव्यः। एवं **कार्यकारणयुक्त्या समन्वेषते।** तस्यैवं *भवत्युक्तं हि भगवता। अशुभा आसेविता भाविता बहुलीकृता कामरागप्रहाणाय सम्वर्त्तत* इत्ययं तावन्मे *आप्तागमः।* प्रत्यात्ममपि मे ज्ञानद[7]र्शनं प्रवर्त्तते। अहमस्मि यथा यथा अशुभतां भावयामि, मनसि करोमि। तथा कामरागपर्यवस्थानं अनुत्पन्नं च नोत्पद्यते। उत्पन्नं च प्रतिविगच्छति। आनुलोमिकोप्येष विधि-

रस्ति । कथमिदानीम्विपक्षं धर्मं मनसिकुर्व्वतः । तद्विपक्षालम्बनेन क्लेश उत्पद्यते । **एवमुपपत्तिसाधनयुक्त्या** पर्येषते । तस्यैवं भ[8]वति । प्रसिद्धा धर्मता खल्वेषा अचिन्त्यधर्मता । यदशुभा भावना कामरागस्य प्रहाणप्रतिपक्ष इति । सा च चिन्तयितव्या । न विकल्पयितव्या । अधिमोक्तव्या । एवं **धर्मतायुक्त्या** अशुभताम्पर्येषते । इयं तावदशुभाप्रयुक्तस्य त्रिमुखी षड्वस्तुप्रभेदालम्बना **विपश्यना ।**

11A—8// कथं मै//[1]त्रीप्रयुक्तो विपश्यन्षड्वस्तूनि पर्येषते । मैत्र्यधिपतेयं धर्ममधिपतिं कृत्वा हितसुखाध्याशयगतस्य सर्व्वेषु सुखोपसंहाराधिमोक्षलक्षणा मैत्रीत्येतमर्थप्रतिसम्वेद्यर्थं पर्येषते । स एवमर्थप्रतिसंवेदी पुर्नविचिनोतीत्ययं मित्रपक्षोयममित्रपक्षोयमुदासीनपक्षः । सर्व्व एते पक्षाः परसन्तानपति[2]तत्वाद्वाह्यं वस्त्वित्यधिमुच्यते । मित्रपक्षं वा अध्यात्ममममित्रोदासीनपक्षं बहिर्धा एवं च वस्तुनि मैत्रीं **समन्वेषते ।**

स पुर्नविचिनोति । य एते त्रयः पक्षाः अदुःखासुख(त)ाः । सुखकामास्ते सुखिता भवन्त्विवति । तत्रोपकारलक्षणं मित्रं । अपकारलक्षणममित्रं । तदुभयपरीतलक्षणमुदासीनपक्षं(ण उदासीनपक्षः) । ये पुनरेते[3]अदुःखासुखिताः पक्षाः सुखकामास्तेषां

त्रिविधा सुखकामता प्रज्ञायते। एके कामसुखमिच्छन्त्येके रूपावचरं सप्रीतिकमेके निष्प्रीतिकं। तत्र ये कामसुखेन विहन्यन्ते। अमित्रं तदुभयविपरीतलक्षणा(णं)तेन कामसुखिनो भवन्त्वनवद्येन [।]एवं सप्रीतिकेन निष्प्रीतिकेन च सुखेन वेदितव्यम्। [4] एवं **स्वलक्षणतो मैत्रीं समन्वेषते।**

स पुनः प्रविचिनोति। यश्च मित्रपक्षो, यश्चामित्रपक्षो, यश्चोदासीनपक्षः। तुल्यचित्तता तु मया करणीयेति। समचित्तता। तत्कस्य हेतोः। यस्तावन्मित्र[पक्ष[1]]स्तत्र मे न दुष्करः। सुखोपसंहारः। योप्ययमुदासीनपक्षः। तत्रापि ये(मे)नातिदुष्करः। यस्त्वयममित्रपक्षः। (तत्रायममि[5]त्रपक्षः[2]।) तत्रातिदुष्करः। तत्र तावन्मया सुखोपसंहारः करणीयः। कः पुनर्व्वादः। मित्रपक्षे वोदासीनपक्षे वा। तत्कस्य हेतोः। नात्र कश्चिद्यः आक्रोशते वा, आक्रुश्यते वा। रोषयति वा, रोष्यते वा। भण्डयति वा, भण्ड्यते वा। ताडयति वा, ताड्यते वा। अन्यत्राक्षराण्येतानि रवन्ति। शब्दमात्र[।] माषमात्रमेतदपि च [6]तथा संभूतोयं कायो रूपी औदारिकश्च[।]तुर्महाभूतिको यत्र मे स्थितस्येमे एवं रूपाः स्पर्शाः क्रामन्ति। यदुत शब्दसंस्पर्शा वा।

1. MS. omits this.
2. This may be deleted.

पाणिलोष्ठदण्डशस्त्रसंस्पर्शा वा अय[ं]मे कायः। अनित्य, एतेपि स्पर्शा ये ते अपकारकास्तेप्यनित्याः। अपि च। सर्व्वं एव सत्त्वा जातिजराव्याधिमरण-धर्माणस्ते प्रकृत्यैव दुःखिता [7] स्तन् मे प्रतिरूपं स्यात्। यद्यहं प्रकृतिदुःखितेषु सत्त्वेषु भूयो दुःखो-पसंहारमेव कुर्यां, न सुखोपसंहारं तदमित्रो(त्रं) मित्रस्य कुर्याद्यदेते सत्त्वा आत्मनैवात्मनः कुर्व्वन्ति।

*अपि चोक्तं भगवता। नाहं तं सुलभरूपं समनुपश्यामि। यानेन दीर्घस्याध्वनोत्ययान्माता वा भ[्तृ] पिता वा, भ्राता वा, भगिनी वा, आचार्यो वा,* [8] *उपाध्यायो वा, गुरुर्व्वा, गुरुस्थानीयो वेति।*

तदनेनापि पर्यायेणामित्रपक्ष एव[ं] मे [अ]मित्रपक्षः। न चात्र कस्यचित् परिनिष्पत्तिः, मित्राभित्रभावो, मित्रोपि (त्रमपि) च कालान्तरेणामित्रो(त्रं) भवति। अमित्रो(त्रम)पि मित्रीभवति। तस्मान्न सर्व्वसत्त्वेषु समचित्तता। समतादृष्टिः करणीया। तुल्यश्च हिताशयः, सुखाध्याशयः, सुखोप[9]संहारः। सुखोप-
11B—8// //[1]संहाराधिमोक्ष इति। एवं **सामान्यलक्षणेन मैत्रीं समन्वेषते।**

स पुनः प्रविचिनोति। यो मे पापकारिषु सत्त्वेषु व्यापादः मरण एष धर्म इति विस्तरेण पूर्व्व-वत्। यो वा पुनरयमेतर्ह्यव्यापादः अ(म)रण एष धर्म इति विस्तरेण पूर्व्ववत्। यो वा पुनरयमेतर्ह्य-

व्यापादः एवं **मैत्र्या(ः) कृष्णशुक्लशुक्लपक्षं पर्येषते ।**

स पुनः प्रवि[2]चिनोति । ये तावदतीतमध्वानमुपादाय **सुखकामाः** सत्त्वाः ते अतीताः, तेषां किं पुनः सुखोपसंहारं करिष्यामः । ये पुनर्वर्त्तमानाः सत्त्वास्ते वर्त्तमानमध्वानमुपादाय । यावदनागतादध्वनो नित्यकालं सुखिनो भवन्ति(न्ती)त्येवं **मैत्र्या(ः) कालं पर्येषते ।**

स पुनः प्रविचिनोति । *नास्ति कश्चिदात्मा वा, सत्त्वो वा* य एष सुखकामो [3]वा स्यात् । यस्य वा सुखमुपसंह्रियते । अपि तु स्कन्धमात्रमेतत् संस्कारमात्रकमेतद्यत्रैषा संज्ञा संज्ञप्तिर्व्यवहारः ।[1] ते पुनः संस्काराः कर्मक्लेशहेतुका इत्येव**मपेक्षायुक्त्या मैत्रीम्पर्ये**षते । प्रसिद्धधर्मता खल्वेषा[अ]चिन्त्यधर्मता यन्मैत्रीव्यापादभावना प्रहाणाय सम्वर्त्तत इत्येवं **धर्मतायुक्त्या मैत्रीम्पर्येषते ।**

---

1. cp. A. K. III.18 :

आत्मा नास्ति स्कन्धमात्रन्तु क्लेशकर्माभिसंस्कृतम् ।
अन्तराभवसन्तत्या कुक्षिमेति प्रदीपवत् ॥; cp. ŚSS, MSS, I.102-3, 104, 106; see also MŚSS, MSS, I.108 sq.; cp. Mvy., sec. 205, 208; DBS, 32.7; on this point, *vide* our article, बौद्धनये नैरात्म्यसिद्धान्तः, Śāraswatī Suṣamā, XXIII, pt. II, pp. 110-27; see also, Proceedings, XXVI International Congress of Orientalists, vol. III, pt. I, p. 531; P. O., XXVII.3-4, pp. 144-32; JGRI, XXIII, pp. 29-50; also, cp. CPB, cp. I-II.

तत्र[4]कथमिदं प्रत्ययता प्रतीत्यसमुत्पादालम्बन-(1)विपश्यनाप्रयुक्तार्थं पर्येषते। तदधिपतेयं धर्ममधिमर्ति कृत्वा तेषां तेषां धर्माणामुत्पादात्ते ते धर्मा उत्पद्यन्ते, तेषां तेषां धर्माणां निरोधात्ते ते धर्मा निरुध्यन्ते [।][1] *नास्त्यत्र धर्मी कश्चिदीश्वर, कर्ता स्रष्टा, निर्माता धर्माणां, न प्रकृतिर्न पुरुषान्तरं, प्रवर्तको ध*[5]*र्माणा*मित्येवमर्थप्रतिसंवेदी अर्थं पर्येषते।[2]

---

1. cp. Udāna, I.1, I.4 (K. N. I.,63-5); ŚSS, MSS, I.100 sq.
2. Asaṅga refutes the ईश्वरकर्तृवाद: in YBS, I.144 sq.; cp. also, Nāgārjuna's Akutobhayā, p. 75: ये विनेयजना ईश्वर-पुरुष–उभय-काल-प्रकृति-नियति-स्वभाव-विकार–परमाणुहेतुभिर्विप्रतिपन्ना: अहेतु-विषमहेतु-उच्छेद-दृष्टि-शाश्वतदृष्ट्यभिनिविष्टा:, धर्मकायदर्शनपराङ्मुखा: आत्मदृष्ट्यभिनिविष्टास्तेषामहेतुविषमहेतु--उच्छेद--दृष्टि--शाश्वतदृष्टिविनिवृत्तये धर्मकायावबोधायात्मदृष्टिविनिवृत्तये च परममतिशुद्धं महाबुद्धिमतां गम्भीरशिक्षाया भाजनभूतं पूर्वोक्तं प्रतीत्यसमुत्पादम्····(AMK, I.1-2); cp. MKV (V), p. 4.1-3; XXVI; LV, XXI.184-cd; for a discussion on this point, see BCAP, IX.118-30, pp. 253-263; cp. T. S., 46-7, 72, 80, 87:

सर्वोत्पत्तिमतामीशमन्ये हेतुं प्रचक्षते।
नाचेतन: स्वकार्याणि किल प्रारभते स्वयम्॥
न स्यान्मेरुरयं न चेयमवनी नैवायमम्भोनिधि:
सूर्याचन्द्रमसौ निवेशसुभगौ नैतौ जगच्चक्षुषी।
ईशानो न कुलालवद्यदि भवेद्विश्वस्य निर्माणकृत्
सत्त्वादीश्वरकर्तृकं जगदिदं वक्तीति किल॥
किन्तु नित्यैकसर्वज्ञनित्यबुद्धिसमाश्रय:।
साध्यवैकल्यतोऽव्याप्तेर्न सिद्धिमुपगच्छति॥
बुद्धिमत्पूर्वकत्वञ्च सामान्येन यदीष्यते।
तत्र नैव विवादो नो वैश्वरूप्यं हि कर्मजम्॥

*(contd. on p. 382)*

पुनः पुनः प्रविचिनोति । द्वादशभवांगानि । अध्यात्मबहिर्धा अधिमुच्यते ।[1] एवं वस्तु पर्येषते । पुनः प्रविचिनोति । अविद्या यत्त(त्)पूर्व्वान्ते अज्ञानमिति विस्तरेण यथा **प्रतीत्यसमुत्पादविभंगे**[2] एवं स्वलक्षणं पर्येषते [।] पुनः (।।) प्रविचिनोति । एवं प्रतीत्यसमुत्पन्नाः संस्काराः [6]सर्व्वं एते अभूत्वा भावाद्, भूत्वा

---

*(contd. from p. 381)*

नेश्वरो जन्मिनां हेतुरुत्पत्तिविकलत्वतः ।
गगनाम्भोजवत्सर्वमन्यथा युगपद् भवेत् ।।; PVB, II. 10 sq., pp. 35-50; JMN, VII, pp. 233-316; RKN, pp. 28-52; ईश्वरभङ्गकारिकाः, (Bulletin of the Mithila Institute, I, 1, p. 102-6); AKV, II.64-d नेश्वरादेः क्रमादिभिः; AKV, II, pp. 171-174; Ślokavārttika (Sambandhākṣepa) V. 44; on ईश्वरसिद्धि, see Udayana's Nyāyakusumāñjali and Ātmatattvaviveka; N. S., IV.1.14-43.

1. See, ŚSS, MSS, I.108-9.
2. प्रतीत्यसमुत्पादादिविभङ्गनिर्देशसूत्रम्, ibid, p. 117 : विभङ्गः कतमः । अविद्याप्रत्ययाः संस्काराः, इत्यविद्या कतमा ? यत्पुर्वान्तेऽज्ञानम्, अपरान्तेऽज्ञानम्, पूर्वान्तापरान्तेऽज्ञानम्, अध्यात्मज्ञानम्, बहिर्धाज्ञानम्, अध्यात्मबहिर्धाज्ञानम्, कर्मण्यज्ञानम्, विपाकेऽज्ञानम्, कर्मविपाकेऽज्ञानम्, बुद्धेऽज्ञानम्, धर्मेऽज्ञानम्, संघेऽज्ञानम्, दुःखे····समुदये····निरोधे····मार्गे····हेतौ····हेतुसमुत्पन्नेषु धर्मेष्वज्ञानम्, कुशलाकुशलेषु सावद्यानवद्येषु सेवितव्यासेवितव्येषु हीनप्रणीतकृष्णशुक्लसप्रतिभागप्रतीत्यसमुत्पन्नेषु धर्मेष्वज्ञानम्, षट्सु वा पुनः स्पर्शायतनेषु यथाभूततासंप्रतिवेधः इति । यदत्र तत्र यथाभूतस्याज्ञानम्, अदर्शनम्, अनभिसमयः, तमः, संमोहः, अविद्यान्धकारम्, इयमुच्यतेऽविद्या ।।; cp. ŚSS, ibid, p. 103 : तत्र अविद्या कतमा ? या एषामेव षण्णां धातूनामेकसंज्ञा पिण्डसंज्ञा नित्यसंज्ञा ध्रुवसंज्ञा शाश्वतसंज्ञा सुखसंज्ञा आत्मसंज्ञा सत्त्वजीवजन्तुपोषपुरुषपुद्गलसंज्ञा अहंकारममकारसंज्ञा । इयमुच्यतेऽविद्या ।; cp. DBS, pp. 31-2; MŚSS, p. 111.

च प्रतिविगमात्पूर्व्वापर्येणानित्या जातिजराव्याधिमरण-धर्मकत्वात् । दुःखा अस्वतन्त्रत्वादन्तःपुरुषानु-पलम्भाच्च शून्या अनात्मानश्च ॥[1] एषां च सामान्य-लक्षणं पर्येषते । स पुनः प्रविचिनोति । यो(य)-एष्वनित्येषु दुःखशून्यानात्मकेषु संस्कारेषु यथाभूतं प्रतिसम्मोहः । मरण ए[7]ष धर्मः कृष्णपक्ष्य[: ।] असम्मोहः । पुनः शुक्लपक्ष इति विस्तरेण [।]**एम्पक्षं समन्वेषते ।**

स पुनः प्रविचिनोति । *अस्ति कर्मास्ति विपाकः । कारकस्तु नोपलभ्यते । यः कर्त्ता वा प्रतिसंवेदको वा स्यान्नान्यत्र धर्मसंकेतात् ।*[2] तेष्वेवाविद्याप्रत्ययेषु

1. See, *supra*, pp. 226-7, 248-9; cf. DBS, p. 33 : तत्र अविद्या तृष्णोपादानं च क्लेशवर्त्मनो व्यवच्छेदः । संस्कारा भवश्च कर्मवर्त्मनो व्यवच्छेदः । परिशेषं दुःखवर्त्मनो व्यवच्छेदः । प्रविभागतः पूर्वान्तापरान्त निरोधवर्त्मनो व्यवच्छेदः । एवमेव त्रिवर्त्म निरात्मकमात्मात्मीयरहितं संभवति च असंभवयोगेन, विभवति च अविभवयोगेन स्वभावतो नडकलापसदृशम् ॥; see, Adv., 319-20; Dh. P., 277-9; cp. CŚ, XIII.25; CS, II.25.
2. cp. BCAP, p. 225 : कर्मणां च अवन्ध्यता प्रज्ञायते, विपाकस्य च प्रतिसंवेदना । न तत्र कश्चित् कर्ता, न भोक्ता, अन्यत्र नामसंकेतात् ।, पितृपुत्रसमागमसूत्र, also quoted in ŚS, p. 135; ŚS, p. 96 : स च तथागतस्य हेतुप्रत्ययप्रतिसंयुक्तां धर्मदेशनामवतेरत् नात्र कश्चिदात्मा वा सत्त्वो वा जीवो वा पुद्गलो वा यः प्रतिसंवेदयते···(quoted from Tathāgatakoṣasūtra); see AKB, III.18; M. K., XVII. 29-33; VIII, cp, CS., II.9; cp. MKV(V), p. 144; cp. TSP, I.13 sq.; *vide* also, p. 215; Y. D., p. 77; MSAB, p. 158; Vsm., XVI.90; also Adv., pp. 254-5, 272; cp. DBS, p. 32.8; cp. MSA.XVIII.103, Vṛtti, pp. 158. 18-159.2.

संस्कारेषु यावज्जातिप्रत्यये जरामरण[ ` ] संज्ञा प्रज्ञप्तिर्व्यवहारः कारको वेद[8]क इत्येवं नामा, एवं ज[ा]त्य, एवं गोत्र, एवमाहार, एवं सुखदुःख प्रतिसंवेदी, एवं दीर्घायुरेवंचिरस्थितिक, एवमायुः पर्यन्त इति ।

अपि च द्विविधमेतत्फलं । द्विविधो हेतुरात्मभावफलं च, विषयोपभोगफलं च । आक्षेपकश्च
11A—9// हेतुरभिनिर्व्वर्त्तकश्च [।]तत्रात्मभावफलं यदेतद्वि//[1]-पाकजं षडायतनं विषयोपभोगफलं यो(या)इष्टानिष्टकर्माधिपतेया षट्स्पर्शसंभवा वेदना [।]

तत्राक्षेपको हेतुर्द्विविधे फले सम्मोह[ा]सम्मोहपूर्व्वकाश्च पुण्यापुण्यानिज्याः, संस्कारपरिगृहीतं च (।) पुनर्भवविज्ञानांकुरप्रादुर्भावाय तद्बीजं, विज्ञानपरिगृहीतं पौनर्भविकनामरूपबीजं षडायतनबीजं[2]स्पर्शवेदनाबीजमिति । य एवमायत्यां जातिसंज्ञकानां विज्ञा[न]नामरूपषडायतनस्पर्शवेदनानामुत्पत्तये । आनुपूर्व्या पूर्व्वमेव बीजपरिग्रहः ।[1] **अयमाक्षेप[को]हेतुः ।**

---

1. cp. DBS, p. 31, para 3; para 4 : सत्येष्वनभिज्ञानं परमार्थतोऽविद्या। अविद्याप्रकृतस्य कर्मणो विपाकः संस्काराः । संस्कारसंनिश्रितं प्रथमं चित्तं विज्ञानम् । विज्ञानसहजाश्चत्वार उपादानस्कन्धा नामरूपम् । नामरूपविवृद्धिः षडायतनम् । इन्द्रियविषयविज्ञानत्रयसमवधानं सास्रवं स्पर्शः । स्पर्शसहजा वेदना, वेदनाध्यवसानं तृष्णा । तृष्णाविवृद्धिरुपादानम् । उपादानप्रसृतं

(contd. on p. 385)

यत्पुनरविद्यासंस्पर्शज[1]वेदना वेदयमानस्तदालम्बनया तृष्णया पौनर्भविकीं तृष्णामुत्पादयति। तृष्णापक्ष्यं मोहपक्ष्यं चोपादानं। [3]परिगृह्णाति। यद्बलेन यत्सांमुख्येन तत्कर्म विपाकदानदान[1]समर्थं भवत्ययमभिनिर्वृत्तिहेतुः। इमं च द्विविधं हेतुमधिपतिं कृत्वा एवं अस्य त्रिविधः दुःखतानुपक्षस्य केवलस्यास्य दुःखस्कन्धस्य समुदयो भवतीति।[2] **एवमपेक्षायुक्तिं पर्येषते।**

इदं प्रत्ययता प्रतीत्यसमुत्पादः। आसेवि[4]तो भावितो मोहप्रहाणाय सम्वर्तते। आप्तागमोप्येष प्रत्यात्मिक आनुमानिकोप्येष विधिः। प्रसिद्धधर्मताप्येष ते (षेति) एवं **कार्यकारणयुक्तिमुपपत्तिसाधनयुक्तिं धर्मतायुक्तिश्च पर्येषते॥**

**तत्र कथं धातुप्रभेदालम्बनविपश्यनाप्रयुक्तमर्थं पश्यन पर्येषते।** गोत्रार्थो, धात्वर्थः, संज्ञार्थो, हेत्वर्थः। [5]प्रकृत्यर्थ इत्येवमर्थप्रतिसम्वेदी अर्थं पर्येषते। पृथिव्यादीन्षड्धातून्न(न)ध्यात्मबहिर्धाधिमुच्यमानो वस्तु

---

*(contd. from p. 384)*

सास्रवं कर्म भवः। कर्मनिष्यन्दो जातिः स्कन्धोन्मज्जनम्। स्कन्धपरिपाको जरा। जीर्णस्य स्कन्धभेदो मरणम्।····

1. दान may be deleted.
2. cp. DBS, p. 33 : अपि तु खलु पुनस्त्रिदुःखता द्वादशभवाङ्गान्युपादाय तत्र अविद्या संस्कारा यावत्षडायतनमित्येषा संस्कारदुःखता। स्पर्शो वेदना चैषा दुःखदुःखता। परिशेषाणि भवाङ्गान्येषा परिणामदुःखता। अविद्यानिरोधात् संस्कारनिरोध इति त्रिदुःखताऽव्यवच्छेद एषः।

पर्येषते । खरलक्षणा पृथिवी । यावत्समुदीरण-लक्षणो वायुः विजाननलक्षणं विज्ञानं । [6]सौषिर्य-लक्षणा[ऽ[1]]रूपगतास्फुटालक्षणश्चाकाशधातुरित्येवं स्व-लक्षणं पर्येषते । सर्व्वे एते धातवः । अनित्यतया
11B—9// समसमाः । यावन्निरात्मतयेत्येवं सामान्यलक्षणं//[1] पर्येषते । इति यः पिण्डसंज्ञिनो धातुनानात्वं अजान-[ा]नस्या[ने[2]]न कायेन नानाधातुकेन उन्नतिर्मन्य-(न्वा[3])ना मरण एष धर्मः कृष्णपक्ष्यः विपर्ययाच्छुक्ल-पक्ष्य इत्येव[ं] **पक्षं पर्येषते** ।

अतीतानागतप्रत्युत्पन्नेष्वध्वसु षड्धातून्प्रतीत्य मातुः कुक्षौ गर्भस्यावक्रान्तिर्भवति[4] । एवं **कालं पर्येषते** ।

तद्यथा तृणं व[ा]प्रतीत्य, काष्ठम्वा[2]चाकाशं परिवारितमगारो[अ]गार इति संख्यां गच्छत्येवमेव षड्धातूनुपादाय । अस्थि च प्रतीत्य स्नायु[श्] च । त्वङ्मान्स(मांस)शोणितं चाकाशे परिवारिते संज्ञा प्रज्ञप्तिर्व्यवहारो भवति । कायः काय इति । पौराणाश्च कर्मक्लेशाः स्वबीजं चैषां निदानमित्येव-**मपेक्षायुक्तिम्पर्येषते** । धातुप्रभेद आसेवितो भावितो-

1. Wayman reads लक्षणाणां.
2. Added by us.
3. Should be deleted.
4. See, YBŚ, I.23 sq.

(त:)स्त्या [3] नप्रहाणाय सम्वर्तते । *आप्तागमोऽप्येष* प्रत्यात्मज्ञानमनुमानिकोऽप्येष विधि: प्रसिद्धधर्मताऽचिन्त्यधर्मतेत्येवं **कार्यकारणयुक्तिमुपपत्तिसानयुक्तिं धर्मतायुक्तिं च पर्येषते ॥**

**कथमानापानस्मृत्यालम्बननिचयप्रयुक्तार्थं पर्येषते ।** आश्वासप्रश्वासालम्बनोपनिबद्धा चित्तस्यासंप्रमो[4]षोभिलपनता । आनापानस्मृतिरित्येवं[1] पर्येषते । अध्यात्ममुपलभ्यते । आश्वासप्रश्वसा: कायप्रतिबद्धत्वाद्बाह्यायतनसंगृहीत[ा]श्चेत्येवं **वस्तु पर्येषते ।** द्वावाश्वासौ यश्च वायु: प्रविशति । य(स)आश्वासो[यश्च[2]]निष्क्रामति । स नि[:]श्वास: [।] अमी दीर्घा आश्वासप्रश्वासा, अमी ह्रस्वा इमान्सर्व्वकायेन प्रतिसंवेदया[5]मि । इमान्नि(नि)त्येवं **स्वलक्षणं** पर्येषते । निरुद्धे आश्वास[ ` ]प्रश्वास उत्पद्यते । निरुद्धे आश्वासे (प्रश्वासे) आश्वास: । आश्वासप्रश्वासप्रवृद्धिप्रतिसम्बद्धं च (।।) जीवितेन्द्रियमयं च काय: सविज्ञानक इत्यनित्या आश्वासप्रश्वासा महाश्रवणेत्येवं (णा इत्येवं) **सामान्यलक्षणं** पर्येषते । एवमा[6]श्वासप्रश्वासेष्वनुपस्थितस्मृते: यो वितर्ककृत: संक्षोभश्चेतस: मरण(धर्म[3])एषधर्म: कृष्णपक्ष्य: । विपर्य-

1. On आनापानस्मृति, see *supra*, Ys., II, p. 229 sq.
2. MS. omits this.
3. This may be deleted.

याच्छुक्लपक्ष्य इति । विस्तरेणत्येवं **पक्षं पर्येषते ।**

13B—1// अतीतानागत//[1] प्रत्युत्पन्नेष्वध्वस्वा[श्वासप्र[1]]-श्वासप्रतिबद्धः कायः कायचित्त(:) प्रतिबद्धाश्चाश्वास-प्रश्वासा इत्येवं **कालं पर्येषते ।** नान्यत्र कश्चिद्य आश्वसिति प्रश्वसिति वा अस्य चैते आश्वासप्रश्वासाः । अपि तु हेतुसमुत्पन्नेषु, प्रतीत्यसमुत्पन्नेषु संस्कारेष्वियं संज्ञा । प्रज्ञप्तिर्व्यवहारः इत्येव**मपेक्षायुक्तिं पर्येषते ।** आनापा[2]नस्मृतिरासेविता भाविता वितर्कोपच्छेदाय संवर्त्तते । *आप्तागमो*[ऽ]प्येष, प्रत्यात्मज्ञानानु-सारिको[ऽ]प्येष विधिः । प्रसिद्धधर्मता[ऽ]चिन्त्य धर्मतेत्येवं **कार्यक[।]रणयुक्तिमुपपत्तिसाधनयुक्तिं धर्मतायुक्तिम्पर्येषते ।**

एवं चरितविशोधनेनालम्बनेन षड्वस्तूनि पर्येष्य, अध्यात्मं चित्तं पुनः पुनः शमयतः(यन्), पुनः पुन-[3]रेतदेव यथापर्येषितं । विपश्यनाकारैः पर्येषते । तस्य शमथं निश्रित्य विपश्यना विशुध्यते । विपश्यनां निश्रित्य शमथो वैपुल्यतां(विपुलतां) गच्छति । कौशल्यालम्बने च । क्लेशाविशोधने च या विपश्यना [।]

षड्वस्तुकर्मितां पश्चाद्वक्ष्यामि स्वस्थाने ।

**तत्र नवविधः शुक्ल[2]संगृहीतः** (।) **प्रयोगस्त-**

1. Letters lost by pin-hold.
2. पक्ष may be added here.

**द्विपर्ययेण च नव[4]विधः कृष्णपक्षसंगृहीतो योगिना वेदितव्यः। तद्यथा[अ]नुरूपप्रयोगता, अभ्यस्त-प्रयोगता, अविपरीतप्रयोगता। अशिथिलप्रयोगता। कालप्रयोगता। उपलक्षणप्रयोगता। असंतुष्ट-प्रयोगता। अविधुरप्रयोगता। सम्यक्प्रयोगता च।** अनया नवविधया शुक्लपक्षसंगृहीतया त्वरित[5]त्वरितं चित्तं समाधीयते। विशेषाय च समाधेः परैति। यावती चानेन भूमिर्गन्तव्या भवत्यनुप्राप्तव्या तां लघु लघ्वेवागन्ता भवत्यधन्धायमानः[1]। कृष्णपक्षसंगृहीता-भिर्नवविधाभिः प्रयोगताभिर्न त्वरितत्वरित[ं] चित्तं समाधीयते। नापि समाधिविशेषाय परैति। यावती चानेन भूमिर्गन्तव्या भवत्यनुप्राप्तव्या। तत्र [6] धन्धायते गमनाय।

**कतमानुरूपप्रयोगता** (च[2])। स चेद्रागचरितोऽ-शुभायां चित्तमुपनिबध्नाति। द्वेषचरितो मैत्र्यां, यावद्वितर्कचरित आनापानस्मृतौ, समभागचरितः मन्दरजस्कः पुनः यत्रालम्बने प्रियारोहता भवति। तेन प्रयुज्यते। इयमनुरूपप्रयोगता [।]

**कतमा अभ्यस्तप्रयो**[7]**ग (प्रयोग**[3]**)ता।** अभ्यासो [ऽ]नेन कृतो भवति यो अन्ततः परीत्तो[ऽ]पि न

1. Wayman reads त्यबद्धायमानः.
2. May be deleted.
3. Wayman reads बद्धायते.

सर्व्वेण सर्व्वमादिकर्मिक एव भवति। तथा ह्यादि-कर्मिकस्यानुरूपे[5]प्यालम्बने न प्रयुक्तस्य निव(ा)-रणानि नाभीक्ष्णं समुदाचरित(रन्ति)। काय-चित्तदौ[8]ष्ठुल्यं च। येनास्य तत् (च) चित्तं समाधीयते। इयमभ्यस्तप्रयोगता। तत्र कतमा **अशिथिलप्रयोगता।** सातत्यप्रयोगी भवति। सत्कृत्यप्रयोगी च। स चेत्पुनर्व्युत्तिष्ठते।

13A—1// //[1] समाधेः पिण्डपातहेतोश्च [गु]रुगौरवोप-स्थानहेतोर्वा। ग्लानोपस्थानार्थम्वा, सामीचीकर्मणो वा अन्यस्यैवंभागीयस्येतिकरणं यस्यार्थाय स तन्निम्नेन चेतसा तत्प्रवणेन तत्प्रास्तारेण (भारेण) च सर्व्वं करोति। लघुलघ्वेव च कृत्वा, परिप्राप्य, पुनरेव प्रयुज्यते। नियम्य प्रतिसंलयनाय स चेद्भिक्षुभिक्षुण्यु-पासक [2]क्षत्रियब्राह्मणपर्षद्भिः सार्धं समागच्छति। न चिरं संसर्गेणातिनामयति। मितं च संलपति। न च भाष्यप्रबन्धमुत्थापयति। नान्यत्र व्यपकर्षति। एवं च पुनरारब्धवीर्यो भवति। यन्न्वहमद्यैव प्राप्तव्यमधिगच्छेयं। तत्कस्य हेतोः। बहवो मे प्रत्यया मरणस्य—वातो वा मे कुप्येत, पित्तम्वा, श्लेष्मम्वा(श्लेष्म वा), भुक्तं वा विषम्येत, [3]येन मे विषूचिका काये सन्तिष्ठेत। अहिर्वा मे (मां) दशेत(न्)। वृश्चिको वा शतपदी वा [4]मनुष्या-दपि मे भयमित्येतानि स्थानानि नित्यकालस्य

न[1]—करोत्यप्रमत्तश्च विहरत्येवं च पुनरप्रमत्तो विहर-[ति।]अपि बत जीवेयं सप्ताहं षट् पञ्चचतुस्त्रिद्विरे-(द्वये)काहयाममर्धयाममपि मुहूर्तमपि अर्धमुहूर्तमपि [।] अहो बत जीवे [4]यं यावत्पिण्डपातं परिभुञ्जेयं । यावदाश्वसित्वा(स्य)प्रश्वसेयं । यावच्च जीवेयं तावद्योगमनसिकारेण शास्तुः शासने योगमापद्येयं । य इ(दि)यता मया बहुकृत्यं स्याद्यदुत शास्तुः शासने इती**यमशिथिलप्रयोगता** ।

तत्र कतमा । **अविपरीतप्रयोगता** । कालेन कालं शमथनिमित्तं प्रग्रहनिमित्त[5]मुपेक्षानिमित्तं भावयति । शमथं च जानाति । शमथनिमित्तं च । शमथकालञ्च [।] विपश्यनां विपश्यनानिमित्तं विपश्यनाकालं, प्रग्रहं[2] प्रग्रहनिमित्तं, प्रग्रहकालं । उपेक्षामुपेक्षानिमित्तमुपेक्षाकालञ्च ।

**तत्र शमथः नवाकारा चित्तस्थितिः** । निर्निमित्तञ्च तच्चित्तं तत्र भवति, निर्विकल्पं, शान्तप्रशान्तं, [6]**शमथ**स्थितं, निष्केवलं, तेनोच्यते शमथ इति । तत्र शमथनिमित्तं द्विविधमालम्बननिमित्तं,

---

1. Syllable illegible.
2. Buddhaghosa explains प्रग्रह (Pāli पग्गह) as वीर्यं, पग्गहो ति विरियं । विपस्सना सम्पयुत्तमेव हिस्स असिथिलमनच्चारद्धं सुपग्गहितं विरियं उप्पज्जति । Vsm., XX.119; this प्रग्रह (Pāli पग्गह) is intimately related to स्मृति, see Vsm., IV.49; cp. Kośāmbī, Vsmt., IV.49, p. 37 : पग्गण्हनं समुस्साहितकरणं पग्गहो; cp. also, SVA, p. 286, para 3; Vsm., IV-51-52.

निदाननिमित्तञ्च । ज्ञेयवस्तुसभागं प्रतिबिम्बमालम्बननिमित्तं । येनालम्बनेन तच्चित्तं शमयति, शमथपरिभाविते चेतसि उत्तरत्र शमथस्य पारिशुद्धये । यो विपश्यना[7]प्रयोग इदं निदानं (न)-निमित्तं [।] **शमथकालः** कतमः । आह । उद्धते चित्ते ऊर्ध्वम्वाभिशंकिनि शमथस्य कालो भावनायै । तथा विपश्यनापरिभाविते चित्ते इति करणीयव्याक्षेपोपहते शमथकालो भावनायै । [8] तत्र विपश्यना चतुराकार[ा]त्रिमुखी षड्वस्तुप्रभेदालम्बनव्यवचारा ॥

तत्र विपश्यनानिमित्तं द्विविधमालम्बननिमित्त[ं]-निदाननिमित्तञ्च । तत्रालम्बननिमित्तं विपश्यना-
12A—1// निमित्तं //[1] [शमथ[1]] पक्ष्यं ज्ञेयवस्तुसभागं प्रतिबिम्बमालम्बनमिमित्तं[2] येनालम्बनेन प्रज्ञां व्यवचारयति । तत्र **निदाननिमित्तं** विपश्यनापरिभाविते चेतसि उत्तरत्र विपश्यनापरिशुद्धये चेतः शमथबिम्बयोगः [।]

**तत्र विपश्यनाकालः** शमथपरिभाविते चेतसि आदित एव चाज्ञेयवस्तुयथाभूतावबोधाय विपश्यनायाः कालो भावनायै[3] [2]

**तत्र प्रग्रहः कतमः ।** यान्यतमान्यतमेन प्रसद-

1. MS. omits this.
2. *Vide*, *supra*, p. 193 sq.
3. The last syllable is not legible.

नीयेनालम्बनेनोद्गृहीतेन चित्तसंहर्षणा संदर्शना समादापना [।] तत्र प्रग्रहनिमित्तं येन च प्रसदनीयेनालम्बनेन निमित्तेन चित्तं प्रगृह्णाति। यस्य वीर्यारम्भः तदानुलोमिकस्तत्र प्रग्रहकालः लीनं चित्तं लीनत्वाभिशंकिनि प्रग्रहस्य कालो भावनायै।

**तत्रोपेक्षा**[3]**कतमा**।[1] या आलम्बने असंक्लिष्टचेतसः चित्तसमता शमथविपश्यनापक्षे। प्रम(श)ठस्वरसंवाहिता। कर्मण्यचित्तस्य च कर्मण्यता, चित्तस्यानुप्रदानमनाभोगक्रिया। **तत्रोपेक्षानिमित्तं**। येन चालम्बनेन चित्तमध्युपेक्षते। या च तस्मिन्नेवालम्बने वीर्योद्रेकाप्रतिकायता। तत्रोपेक्षाकालः शमथविपश्यना[4]पक्षालयौ(लौ)द्धत्यविनिर्मुक्ते चेतसि

1. cp. उपेक्षा चित्तसमता चित्तानाभोगता, AKB, II.25; Yaśomitra mentions three kinds of उपेक्षा (AKV, ibid, II, p. 44) उपेक्षा चित्तसमतेति। यद्योगाच्चित्तं सममनाभोगं वर्तते सोपेक्षा संस्कारोपेक्षा नाम। **त्रिविधा हि उपेक्षा वेदनोपेक्षा संस्कारोपेक्षा अप्रमाणोपेक्षा चेति**।; cp. Tvbh., p 34 : उपेक्षा चित्तसमता चित्तप्रशठता चित्तानाभोगता। एभिस्त्रिभिः पदैरुपेक्षाया आदिमध्यावसानावस्था द्योतिता। तत्र लय औद्धत्यं वा चेतसो वैषम्यम्। तस्याभावादादौ चित्तसमता। ततोऽनभिसंस्कारेणाप्रयत्नेन समाहितचेतसो यथाभियोगं समस्यैव या प्रवृत्तिः सा चित्तप्रशठता। सा पुनरवस्था लयोद्धत्यशङ्कानुगतचिरभावित्वात्। ततो भावनाप्रकर्षगममनात्तद्विपक्षदूरीभावात् तच्छङ्काभावे लयौद्धत्यप्रतिपक्षनिमित्तेष्वाभोगमकुर्वतोऽनाभोगावस्था चित्तस्यानाभोगता। इयं च सर्वक्लेशोपक्लेशानवकाशसंनिश्रयदानकर्मिका।; Adv., p. 72 : उपेक्षा चित्तसमता चित्तानाभोगः संस्कारनिमित्तानाभोगमध्युपेक्षानिमित्तप्रवणता।; For ten kinds of upekṣā, see A. S., III.348-353; 254; Adv., p. 140, f.n. 1.

उपेक्षायाः कालो भावनायै । इयं **कालप्रयोगता ।**

तत्र कतमा उपेक्षा लक्षणा **(उपलक्षण) प्रयोगता** [।]तान्येव निमित्तानि सुगृहीतानि भवन्ति । सुसं-लक्षितानि येषां सूद्गृहीतत्वात् । यदा आकांक्षते । तदा व्युत्तिष्ठते समाधिगोचरं (।) प्रतिबिम्बमुत्सृज्य समाहितभूमिकाप्राकृतालम्बन[5]मनसिकारेण [।] **इय-मुपलक्षण (।) प्रयोगता ।**

तत्र कतमा **असंतुष्टप्रयोगता ।** असंतुष्टो भवति कुशलै-कुशलैर्धर्मैः । अप्रतिवा (भा) णि (णी) च । प्रहासैरुत्तरं प्रणीततरं स्थानमभिप्रार्थयमान[ ो]रूपी बहुलं विहरतीति । नाल्पमात्रकेना (णा) वरमात्रकेना-(णा) न्तरा विषादमापद्यते । अत्युत्तरे करणीये । [6] **इयमसंतुष्टप्रयोगता ।**

तत्र कतमा **अविधुरप्रयोगता ।** शिक्षापद-समादानम्वा न खण्डीकरोति, न छि (च्छि)-द्रीकरोति । न च शिशुमुदारवर्ण्णं रंजनीयं मातृग्रामं दृष्ट्वा निमित्तग्राही भवत्यनुव्यंजनग्राही, भोजने च समकारी भवति । जागरिकानुयुक्तश्चा-ल्पार्थोल्पकृत्योल्पव्यासकः । चिरकृतचिरभाषित [7]-मनुस्मर्त्ता भवत्यनुस्मारयिता । इत्येवंभागीया धर्मा अविधुरप्रयोगतेत्युच्यते । अनुकूला एते धर्माश्चित्तै-काग्रतायाः । अविदूरा, न च चित्तक्षेपाय सम्वर्त्तन्ते । तेन बहिर्धा व्यासंगाय, नाध्यात्मचित्ता-

कर्मण्यतायै । इयमुच्यते अविधुरप्रयोगता ।

तत्र सम्यक्प्रयोगता कतमा । अधिमुच्याधिमुच्या[8]लम्बनस्य विभावनया सम्यक्प्रयोग इत्युच्यते । स चेदशुभाप्रयुक्तो भवत्यशुभां चाशुभाकारैर्मनसिकरोति । निमित्तमात्रानुसारिण्या विपश्यनया [।] तेन मनसिकारस्तदालम्बनो मुहुर्मुहुर्विभावयितव्यो, मुहुर्मुहुः संमुखीकर्तव्यः ।

**विभावना पुनः पञ्चविधा** अध्यात्मचित्ताभि-

12B—1// संक्षेपतः । अस्मृत्यमनसिकारतः । //[1] तदन्यमनसिकारतः । प्रतिपक्षमनसिकारतः । आनिमित्तधातुमनसिकारतश्च । तत्र नवाकारचित्तस्थित्या विपश्यना पूर्व्वंगमया अध्यात्मं चित्ताभिसंक्षेपतः । सर्व्वनिमित्तवैपुल्येन आदितः । अविक्षेपायोप निबध्नतो[ऽ]स्मृत्यमनसिकारतः । समाहितभूमिकादालम्बनालम्बनान्तरं समाहितभूमिकमेव मनसि कुर्व्वतस्तदन्य[2]मनसिकारतः । शुभताप्रतिपक्षेणाशुभांता(भतां) यावद्वितर्कप्रतिपक्षेण आनापानस्मृतिं । रूपप्रतिपक्षेणाकाशधातु[ं] मनसि कुर्व्वतः प्रतिपक्षमनसिकारतः । सर्व्वनिमित्तानाममनसिकाराद[ा]निमित्तस्य च धातोर्मनसिकारादानिनिमित्तधातुमनसिकारतः । अपि च । व्याप्य तदालम्बनं विभावनालक्षणं व्यवस्थापि[3]तमस्मिंस्त्वर्थे अध्यात्मं निमित्ताभिसंक्षेपतः । अस्मृत्यमनसिकारतश्चाभि-

प्रेता । तत्रादिकर्मिके(ण[1]) तत्प्रथमकल्पिको (कर्मिकेण) आदित एव चित्तं न कश्चि(क्वचि)-दालम्बने उपनिबन्धितव्यं । अशुभायाम्वा, तद-स्मिन्वा, नान्यत्र विक्षेपायैव । कच्चिन्मे चित्तं निर्निमित्तं, निर्व्विकल्पं शान्तं, प्रशान्तमविचलम-विकम्प्यमनुत्सुकं, निर्व्यापा[4]पारमध्यात्ममभिरमत इति । तथा प्रयुक्त उत्पन्नोत्पन्नेषु सर्व्वबाह्यनिमित्तेषु अस्मृत्यमनसिकारं करोति । इयमस्यास्मृत्यमन-सिकारेणालम्बनविभावना [।]

स तत्र योगं कुर्व्वन् प्रतिगृह्णाति, स निर्मिमित्ते चालम्बने सविकल्पमशुभादिके चरति । कथं च पुनश्चरति । निमित्तमात्रानुसारिण्या[5]विपश्यनया पर्येषणाप्रत्यवेक्षणानुचारिण्या [।] न चैकांशेन विपश्यनाप्रयुक्तो भवति । पुनरेव विपश्यना-निमित्तं (।) प्रत्युदावर्त्य तदेवालम्बनं शमथाकारेण मनसि करोति । तेन तदालम्बनं तस्मिन्समये मुक्तं भवति, नोद्गृहीतं । यस्मात्तदालम्बनः शमथो वर्तते । तस्मान्न मुक्तः । यस्मान्न नि[6]मित्ती-करोति । न विकल्पयति । तस्मान्नोद्गृहीतमेव-मध्यात्ममभिसंक्षेपतः । आलम्बनं विभावयति ।

1. This is a Buddhist technical term for the beginner in the Buddhist Church, see, Bodhi, pp. 272-4; *vide* also, Ādikarmavidhi (Baroda MS., No. 13256, GOS, Catalogue of MSS, vol. II, No. CXIV).

तत्र विपश्यनानिमित्तमुद्‌गृहीतवतः । पुनर्ज्ञेयवस्तु-निमित्तालम्बनं स चेदयमेकांशेनालम्बनमधिमुच्यते । न पुनः पुनर्विभावयेत् । नास्याधिमोक्ष उत्तरोत्तरः । परिशुद्धः, पर्यवदातः । प्रवर्तते । [7] यावज् ज्ञेयवस्तुप्रत्यक्षोपगमाय । यतश्च पुनः पुनरधि-मुच्यते । पुनः पुनर्विभावयति । ततोस्योत्तरोत्त-रोधिमोक्षः । परिशुद्धतरः, परिशुद्धतमः प्रवर्तते । यावज्ज्ञेयवस्तुप्रत्यक्षोपगमाय । तद्यथा चित्रकर-श्चित्रकरान्तेवासी वा तत्प्रथमश्चित्रकर्मणि प्रयुक्तः स्यात् । स आचार्यस्यान्तिकाच्छिक्षापूर्वंगमं रूपक-[8]मादाय दृष्ट्वा दृष्टवा प्रतिरूपकं करोति । कृत्वा कृत्वा विभावयति, विनाशयति । पुनरेव च करोति । य यथा यथा भङ्क्त्या भङ्क्त्या करोति । तथा तथास्योत्तरं रूपकं परिशुद्धतरं पर्यवदाततरं ख्याति । एवं हि सम्यक्प्रयुक्तः कालान्तरेणाचार्यसमतां गच्छति । तत्प्रतिविशिष्ट-

12A—2// ताम्वा[।]सचेत्पुनरभं (नर्भं?)// [1] क्त्या तद्रूपकं तस्यै-वोपरिष्टात्पौनःपुन्येन कुर्यात् । न जन्वन्धस्य तद्रूपक-परिशुद्धिं निगच्छेदेवमिहापि नयो वेदितव्यः । तत्र यावदालम्बनमधिमुच्यते । तावद्विभावयति । न त्ववश्यं यावद्विभावयति । तावदधिमुच्यते । परीत्त-मधिमुच्यते, परीत्तमेव विभावयति । एवं यावन्महद्-गतप्रमाणं । परीत्तं पुन[2]र्विभावयित्वा (भाव्य)

कदाचित्परीत्तमेवाधिमुच्यते । कदाचिन्महद्गतमेव । प्रमाणमेवं महद्गते । प्रमाणे वेदितव्यं । तत्र रूपिणां धर्माणां यन्निमित्तं प्रतिबिम्बं, प्रतिभासं(सः) तदौदारिकं निर्माणसदृशमरूपिणाम्वा पुनर्धर्माणां नामसंकेतपूर्व्वकं यथानुभावाधिपतेयं । प्रतिभासमियमुच्यते । **सम्य[3]क्प्रयोगता ।** सैषा नवविधा शुक्लपक्ष्या शमथविपश्यनानुलोमा प्रयोगता वेदितव्या । एवं पर्यायेण नवाकारैव विलोमता । स एष कृष्णशुक्लपक्षव्यवस्थानेनाष्टादशविधप्रयोगो भवतीयमुच्यते **एकाग्रता ॥**[1]

**तत्रावरणविशुद्धिः कतमा ।** आह । **चतुर्भिः कारणैरेवं** सम्यक्प्रयुक्तो योगी [4] आवरणे स्वच्चित्तं परिशोधयति । **स्वभावपरिज्ञानेन, निदानेनादीनवपरिज्ञानेन, प्रतिपक्षभावनया च ।**

तत्र कतम **आवरणस्वभावः ।** आह । **चत्वार्यावरणानि । परितमना, निवरणं**[2]**, वितर्कः**[3]

1. cp. AKB, VIII.1 : केयमेकाग्रता नाम । एकालम्बनता । एवं तर्हि चित्तान्येवैकालम्बनानि न चैतसिकं धर्मान्तरमिति प्राप्नोति । न चित्तान्येव समाधिः । येन तु तान्येकाग्रा वर्तन्ते स धर्मः समाधिः । सैव चित्तैकाग्रता । see also AKV; cp. Adv., p. 70 : चित्तस्यैकाग्रता समाधिश्चित्तस्थितिलक्षणः ।; cp. Vsm., III.3; YB with Tattvavaiśāradī, p. 109; cp. Adv., p. 404 : शमथः खलु साङ्गा कुशला चित्तैकाग्रता ध्यानमित्युच्यते ।
2. See, Yogasthāna, I, p.
3. वितर्क has been defined as चित्तौदारिकता वितर्कः । AKB,

(contd. on p. 399)

**आत्मसंप्रग्रहश्चेति ।** तत्र परितमना या नैष्क्रम्य-प्राविवेक्यप्रयुक्तस्य क्लिष्टा उत्कण्ठा, अरतिः । [5] स्पृहणा, दौर्मनस्यमुपायामः । तत्र **निवरणं** काम-च्छन्दादीनि पञ्चनिवरणानि । तत्र वितर्कः काम-वितर्कादयः । क्लिष्टा वितर्काः । **तत्रात्मसंप्रग्रहो** यदणुमात्रेका(णा)वरमात्रेकेन(ण) ज्ञानदर्शनस्पर्श-मात्रकेना(णा)त्मानं संप्रगृह्णाति । अहमस्मि लाभी, अन्ये च न तथेति । [6] पूर्ववद्विस्तरेण वेदितव्यमय-**मावरणस्वभावः ।**

तत्र **परितमना** यावत्षण्निदानानि । तद्यथा पूर्वकर्माधिपत्या, व्याधिपरिक्लेशाद्वा आश्रयदौर्बल्यं । अतिप्रयोगः । अर्धप्रयोगः । आदिप्रयोगः । क्लेश-प्रचुरता । विवेकानभ्यासश्च निवरणस्य, वितर्का-[7]णामात्मसंप्रग्रहस्य निवरणस्थानीये, अवितर्क-स्थानीये, स्वात्मसंप्रग्रहस्थानीयेषु धर्मेष्वयोनिशोमन-सिकारो बहुलीकारनिवरणवितर्कसंप्रग्रहाणां निदानं

---

*(contd. from p. 398)*

II.33 : वितर्कः····चेतनां वा निश्रित्य प्रज्ञां वा पर्येषको मनोजल्पोऽनभ्यूहा-भ्यूहावस्थयोर्यथाक्रमं सा च चित्तस्यौदारिकता, AKV, II, p. 56; see also, pp. 55, 57-8 : वितर्को नाम चित्तौदार्यलक्षणः संकल्पद्वितीयनामा विषय-निमित्तप्रकारविकल्पी संज्ञापवनोद्धतवृत्तिः, औदारिकपञ्चविज्ञानकायप्रवृत्तिहेतुः । Adv., p. 81; cp. Asm., p. 10; Tvbh., pp. 40-1 : वितर्कः पर्येषको मनोजल्पः प्रज्ञाचेतनाविशेषः ।····स एव चित्तस्यौदारिकता···· स्थूलता वस्तुमात्रपर्येषणाकारत्वात् ।····; see YB, I.17 : वितर्कश्चित्तस्या-लम्बने एव स्थूल आभोगः ।; cp. AS, III.198 sq.; see BDD, p. 42.

12B—2// यदशुभताममनसि//[1]कृत्य शुभतां मनसिकरोत्यय-मत्रायोनिशः । एवं मैत्रीं[ ] मनसिकृत्य, प्रहाय नैमित्त(त्ति) [की[1] ]मालोकसंज्ञा[ ]मनसिकृत्यान्धकार-निमित्तं शमथममनसिकृत्य, ज्ञातिज[ा]नपदामरवितर्कं पौराणक्रीडितहसितरसितपरिचारितं । इयं(दं) प्रत्ययता प्रतीत्य[2]समुत्पादममनसिकृत्य, त्रैयध्विकेष्व-हमिति वा, ममेति वा, अयोगविहितां संज्ञां मनसि करोत्ययमत्रायोनिशस्त(शः) ।

**तत्रादीनवः कतमः ।** अस्मिन्नावरणे सति संविद्यमाने चतुर्विधेप्यनधिगतं नाधिगतात् परिहीयते । योगप्रयोगाद्भ्रश्यते । संक्लिष्टविहारी च भवति, दुःखविहारी च भवत्यात्मा चैतमववदति । परतश्चा-ववादं[3]लभते । कायस्य च भेदात् परं मरणाद-पायेषूपपद्यते । **अयमत्रादीनवः ।**

**तत्र प्रतिपक्षः कतमः ।** तत्र परितमना या समासतो[ऽ]नुस्मृतयः । प्रतिपक्षः अनुस्मृतिमन-सिकारेणायं चित्तं संहर्षयित्वा(संहर्ष्य)उत्पन्नां परितमनां प्रतिविनोदयत्यु(त्यनु)त्पन्नां च नोत्पा-दयति । तत्र यच्च कायदौर्बल्यं, यश्चाप्रतियोगो, यश्चादिप्रयोगः । तत्र वी[4]र्यसमता प्रतिषे(वे)-धः । प्रतिपन्नः योर्ध्वप्रयोगः [।] तत्र शुश्रूषा, परिपृच्छा प्रतिपक्षः । या क्लेशप्रचुरता तस्या

1. Added by us, MS. omits this.

यथायोगमशुभाद्यालम्बनप्रयोगः । प्रतिपक्षः । यो-[ऽ]नभ्यासस्तस्यैवंविधं प्रतिसंख्यानं प्रतिपक्षः । पूर्व्वं मे (मया) विवेकाभ्यासो न कृतो, येन मे एतर्हि विवेकप्रयुक्तस्य परितमना उत्पद्यते [।] स चेदेतर्हि न करिष्याम्यभ्या[5]सः (सं) एवमायति[:]पुनर्भव एवं-रूपो भविष्यति । प्रतिसंख्याय मया अरतिस्त्यक्तव्या । रतिः करणीयेत्येवमिष्टानां निवरणादीनामयोनिशो-मनसिकारविपर्ययेण योनिशोमनसिकारभावना प्रति-पक्षो वेदितव्यः ।[1]

तत्र स्वभावं परिज्ञाय आवरणतः, संक्लेशतः, तावच्छमथबाहुल्यं [।] सा खल्वेषा विपश्यना ज्ञेया

1. cp. श्रुतं निश्रित्यादौ मनस्कारः प्रभवति यो योनिशः····। योनिशो-मनस्कारात्तत्त्वार्थविषयं ज्ञानं प्रभवति लोकोत्तरा सम्यग्दृष्टिस्ततस्तत्फलस्य धर्मस्य प्राप्तिस्ततस्तस्मिन् प्राप्ते मतिर्विमुक्तिज्ञानं प्रादुर्भवति । MSA, I.16 (Vṛtti, p. 7); see also, AK, IV.94, (RAK, p. 118): अन्योन्य····क्लेशयोगेन यः प्रवृत्तो मनस्कारः (अयोनिशः) अयोनिशो मनस्कारो भ्रान्तनिर्णयः, ibid, p. 142; Adv., p. 184; Tvbh., p. 31: त्रिप्रकारेण योगेन यो जनितः स योगविहितः····। अयोगेन जनितो योगोऽ-योगविहितः ।····; cp. SVA, p. 272: अयोनिसोमनसिकारो नाम अनुपायमनसिकारो उप्पथमनसिकारो, अनिच्चे निच्चं ति वा दुक्खे सुखं ति वा, अनत्तनि अत्ता ति वा असुभे सुभं ति वा मनसिकारो । तं तत्थ बहुलं पवत्तयतो कामच्छन्दो उप्पज्जति ।····योनिसो मनसिकारो नाम उपायमनसिकारो पथमनसिकारो, अनिच्चे अनिच्चं ति वा, दुक्खे दुक्खं ति वा, अनत्तनि अनत्ता ति वा, असुभे असुभं ति वा मनसिकारो । तं तत्थ बहुलं पवत्तयतो कामच्छन्दो पहीयति ।; cp. also, S. N., IV.93, 95; see also, SVA, p. 506; see BDD, p. 257; also Vsm., IV.53, 59; cp. Bodhi, p. 31.12-13.

कृष्णपक्षतः । परिवर्जनीयमेतदिति । निदानपरिवर्जना[6]च्च पुनरस्य परिवर्जनेति । **निदानं** पर्येषते । अपरिवर्जनाच्च पुनरस्य परिवर्जनीयस्य को दोष इत्यत आदीनवं पर्येषते । परिवर्जितस्य चायत्यां कथमनुत्पादो भवतीत्यतः प्रतिपक्षं भावयत्येवमनेनावरणेभ्यश्चित्तं परिशोधितं भवति ।

स तत्र यावद्देशनाबाहुल्यं विपश्यनानुलोमिकं तावद्विपश्यनाबाहुल्यं, यावद्विवपश्यना [7] बाहुल्यं नान्याद(ऽ)नन्ता वेदितव्या । यदुत एभिरेव त्रिभिर्मुखैः षण्णां वस्तूनामेकैकश्या(स्या अ)नन्ताकारप्रवेशनयेन, यथा च यथा विपश्यना सम्यक्प्रयुक्तस्य पृथुवृद्धिवैपुल्यतां (विपुलतां) गच्छत्यभ्यासपारिशुद्धि-
12A—3// बलमधिपतिं कृत्वा, तथा, तथा, शमथपक्षस्यापि //[1] कायचित्तप्रश्रब्धिजनकस्य पृथुवृद्धिवैपुल्यता (विपुलता) वेदितव्या । तस्य यथा यथा कायः प्रश्रभ्यते, चित्तं च, तथा तथालम्बनचित्तैकाग्रतायाश्च यदुताश्रय[ं]-विवर्द्धयते । यथा चित्तैकाग्रता विवर्धते तथा तथा कायः प्रश्रभ्यते, चित्तं च, इत्येतौ द्वौ धर्मावन्योन्यं निर्वृतावन्योन्यं प्रतिबद्धो[ ̀]यदुत चित्तैकाग्रता, प्रत्यक्षज्ञानोत्पत्तिः[1] ।

तत्र कियता[2]अशुभा प्रतिलब्धो(धा) भवति । कियता यावदानापानस्मृतिः प्रतिलब्धा भवतीति ।

---

1. च may be added here.

पेयालं। अतश्चास्य योगिनः अशुभाप्रयोगस्यासेवनान्वयात् भावनान्वयाद्बहुलीकारान्वयाच्चरतो वा, विहरतो वा, विषयसंमुखीभावे [अ]पि निमित्तप्रत्यवेक्षणयापि प्रकृत्यैवानभिसंस्कारेण बहुतराशुभतासंप्रख्यानं। यथापि [3] तत्सुभावितत्वादशुभायाः कामरागस्थानीयेषु धर्मेषु चित्तं[न[2]] प्रस्कन्दति। न प्रसीदति। नाधिमुच्यते। उपेक्षा संतिष्ठते। निर्व्वित्प्रतिकूलता वेदितव्यं(या)। योगिनानुप्राप्तो-(प्तं)मे, अशुभाप्राप्तं मे, भावनाफलमियता अशुभा प्रतिलब्धा भवति। विपर्ययेण [अ]प्रतिलब्धा वेदितव्या। यथा अशुभा एवं मैत्री, इदंप्रत्ययताप्रती[4]त्यसमुत्पादः। धातुप्रभेदः। आनापानस्मृतिश्च वेदितव्या। तत्रायं विशेषः बहुतरं मैत्रचित्तता ख्याति। न प्रतिघनिमित्तं। व्यापादस्थानीयेषु धर्मेषु चित्तं न प्रस्कन्दतीति विस्तरः। बहुतरमनित्यता, दुःखता, नैरात्म्यं ख्याति, न नित्यसुखसत्त्वाय दृष्टिसहगतं सम्मोहनिमित्तं मोहपर्यवस्थानीयेषु धर्मेषु। [5] चित्तं (न[1]) प्रस्कन्दतीति विस्तरः। बहुतरं नानाधातुकता[त[2]] देकधातुकता कायपि(चि)-त्तप्रभेदसंज्ञा ख्याति। न त्वेव पि(चि)त्तसंज्ञा, मानपर्यवस्थानीयेषु धर्मेषु चित्तं न प्रस्कन्दतीति

1. This may be deleted.
2. This may be added here.

विस्तरः । बहुतरा अध्यात्ममुपशमसंज्ञा । शमथ-संज्ञा । ध्याति । न त्वेव प्रपञ्चसंज्ञा वितर्कपर्यव-स्थानीयेषु धर्मेषु चित्तं न प्रस्कन्दतीति विस्तरः ।

[6]तत्र नियता(तं)शमथश्च विपश्यना चोभे मिश्रीभूते समयुगम्वर्त्तेते । येन **युगनद्धवाहीमार्ग** इत्युच्यते ।[1] आह । यो लाभी भवति नवाकारायां

1. In the Pāli canons the dual of शमथ and विपश्यना has been termed as Yuganaddha, cp. Psm., p. 19.22-24; p. 345 sq., 330, 338, 348, 394, etc.; M. N., III.391, 393; cp. also Bodhi., p. 143.2-4; later on, in the Buddhist Tantric literature, the dual of Prajñā and Upāya, Saṁvṛti and Paramārtha, 'E' and 'Vaṁ', Śūnyatā and Karuṇā, male and female was taken to mean what the term 'Yuganaddha' really signified. It was further regarded as a concept pointing out towards the ultimate goal of the human existence, i.e. sama-rasa or nirvāṇa and was also conceived as identical with the dharma-kāya of the Buddha, as Bodhicitta, as Advaya and as sahaja-avasthā, see S. B. Dasgupta, An Introduction to Tāntric Buddhism, p. 122 sq.; pp. 98-100 sq.; Prajñopāyaviniścayasiddhi; Hevajra Tantra, Paṭala X, quoted in Dasgupta's work, p. 102, f.n. and in the Commentary on Tilopā's Dohākōśa, JDL, XXVIII, pp. 45, 48, see also, pp. 41-3 and elsewhere; Dasgupta, ibid, p. 117 sq.; Advayavajrasaṁgraha, p. 28 and elsewhere; for an elaborate account see, Herbert Guenther : Yuganaddha; Jñānasiddhi; Hevajra Tantra and Sādhanamāla; Advayasiddhi, JOI, XIII.1, Appendix; see also, the Tāntric work 'Yuganaddha' ascribed to Nāgārjuna (Baroda MS., No. 13296).

चित्तस्थितौ नवमस्याकारस्य यदुत समाहितताया: [।] स च तं परिनिष्पन्नं । समाधिं निश्रित्य अधिप्रज्ञं धर्मविपश्यनायां प्रयुज्यते । तस्य तस्मिन्समये धर्मान्विपश्यत: [।] स्वरसवाहन एव मार्गो भवत्यनाभोगवाहन: । अनभिसंस्कारेण विपश्यना परिशुद्धा, पर्यवदाता, शमथानुयोग(त)ा कल्प(ल्पि)ता परिगृहीता प्रवर्त्तते । यथैव शमथमासते [ते[1]] नोच्यते शमथश्चास्यविपश्यना चोभे मिश्रीभूते समयुगम्वर्त्तेते । शमथविपश्यनायुगनद्धवाही च मार्गो भवतीति ।।

अनन्तरोद्दानं ।।

*निमित्तग्राहपर्येष्टि: प्रत्यवेक्षामुखानुगा ।*
*अर्थतस्तु लक्षणै: पक्षै:(पक्षै:)कालैश्च सह युक्तिभि: ।।*
*अनुरूपं तथाभ्यासमाशैथिल्यं विपर्यय: ।*
*(अनुरूपस्तथाभ्यास आ शैथिल्याद् विपर्यय:)*
*कालोपलक्षणा तुष्टिरवैधुर्यं प्रयोगता ।।*
*सम्यक् प्रयोगता चैव नवाधारा द्विधा मता ।*
*स्वभावतो निदानाच्च तथादीनवदर्शनात् ।।*
12B—3// *प्रतिभाविता चैव शुद्धिरावरणस्य //[1] हि ।।*

**तत्र मनस्कारभावना कतमा**[।] आहादिकर्मिकस्तत्प्रथमकर्मिक एवं व्यापिनि[2] लक्षणे व्यवस्थापिते एकाग्रतायामा(आ)वरणविशुद्धेश्च मिथ्याप्रयोगं च

1. Letter damaged by pin-hold.
2. Wayman reads व्यापि.

वर्जयति । सम्यक्प्रयोगे[1] च शिक्षते । स तत्प्रथमत एकाग्रतां प्रहाणाभिरतिं चाधिगमिष्यामीति चतुर्भिर्मनस्कारैः प्रयुज्यते । कतमैश्चचतुर्भिश्चित्तसन्ता पनीयेन मनस्कारेण, चित्ता[2]भिष्यन्दनीयेन, प्रश्रब्धिजनकेन, ज्ञानदर्शनविशोधकेन च मनस्कारेण [।]

**तत्र चित्तसन्तापनो मनस्कारः कतमः** [:][।] आह । येनायं मनस्कारेण । संवेजनीयेषु धर्मेषु चित्तं सम्वेजयत्ययं चित्तसन्तापनो मनस्कारः ।

तत्र **कतमश्चित्ताभिष्यन्दनो मनस्कारः ।** येनायं प्रसदनीयेन मनस्कारेण चित्तमभिप्रमोदयत्ययं(।) [3] चित्ताभिष्यन्दनो मनस्कारः ।

**तत्र कतमः प्रश्रब्धिजनको मनस्कारः ।** आह । येनायं मनस्कारेण कालेन कालं चित्तं सम्वेजनीयेषु धर्मेषु संवेजयित्वा (संवेज्य) कालेन कालमभिप्रमोदनीयेषु धर्मेषु चित्तमभिप्रमोदयित्वा (मोद्याऽ)ध्यात्मं शमथयति । निर्निमित्तायां । निर्विकल्पकतायामेवं स्थापयत्येकाग्रां स्मृतिं प्रवर्त्तयति ये[4]नास्य हेतुना,

---

1. cp. प्रयोगसम्पत् कतमा । यथापि तद्बोधिसत्त्वः शीलेष्वखण्डचारी भवति परिशुद्धकायवाङ्मनःसमुदाचारो नाभीक्ष्णापत्तिको विवृतपापश्च भवति । पञ्चभिः प्रयोगैर्बोधिसत्त्वस्य सर्वसम्यक्प्रयोगसंग्रहो वेदितव्यः । कतमैः पञ्चभिः । अनुरक्षणाप्रयोगेण । अनवद्यप्रयोगेण । प्रतिसंख्यानबलप्रयोगेण । अध्याशयशुद्धिप्रयोगेण । नियतपतितप्रयोगेण च । ibid, p. 195, see also, para 4.

येन प्रत्ययेन कार्यचित्तदौष्ठुल्यप्रतिपक्षेण कायचित्तह्लादनकरी कायप्रश्रब्धिश्चित्तप्रश्रब्धिश्चोत्पद्यते। अयमुच्यते **प्रश्रब्धिजनको मनस्कारः**।

तत्र **ज्ञानदर्शन विशोधनो मनस्कारः** कतमः। येन मनस्कारेण कालेन कालं चित्तेन तथाध्यात्मं संशयमिति (संशमयति) तेन पुनः पुनरभीक्ष्णं अधिप्रज्ञं धर्मविपश्य[5]नायां योगं करोति। यदुत तमेवाध्यात्मं चेतःशमथं निश्रित्य[।]अयमुच्यते **ज्ञानदर्शनविशोधनो मनस्कारः**[1]।

कतमः कालेन कालं संवेजनीयेषु धर्मेषु चित्तं सम्वेजयत्येवमस्य तच्चित्तं तप्तं भवति। सन्तप्तमुद्विग्नं संविग्नं यदुतास्रवस्थानीयेषु च धर्मेषु। **सर्वसंवेजनीयानि स्थानानि।** कतमानि। **आह**[।] **च[6]त्वारि। तद्यथा आत्मविपत्तिः, परविपत्तिश्च, वर्तमाने समवहिते संमुखीभूते योनिशो मनसिकारान्वयात्सम्वेजनीयं स्थानं** भवति। तत्रात्मसम्पत्तिः। परसम्पत्तिश्च। **अभ्यतीते क्षणे निरुद्धे विगते विपरिणते योनिशो मनसिकारान्वयात्सम्वेजनीयं**

1. In the MSA, XI.8-12, eighteen manaskāras have been mentioned : धातुनियतः कृत्यकरः आश्रयविभक्तोऽमुक्ति निवेशकरश्च्छन्दजनकः समाधिसंनिश्रितो ज्ञानसंप्रयुक्तः संभिन्नालम्बनो विभिन्नालम्बनः। परिज्ञानियतो भावनाकारप्रविष्टः शमथविपश्यनामार्गस्वभावोऽनुशंसमनस्कारः प्रतीच्छकः प्रायोगिकमनस्कारो वशवर्तिमनस्कारः परीत्तमनस्कारो विपुलमनस्कारश्च। MSA (Vṛtti), p. 56; for further details and elaboration, see ibid, pp. 56-8.

**स्थानं भवति।** स कालेन कालमभिप्रमोदनीयेषु धर्मेषु चित्त[7]मभिप्रमोदयति। तस्याभिप्रमोदयतः। एवमस्य तच्चित्तं स्निग्धं भवत्यार्द्रं च, द्रवश्चाच्छं च, प्रसन्नं च।

**तत्राभिप्रमोदनीयाः धर्माः** कतमे ॥ आह। त्रिविधा[:] अ(चत्वारोऽ)भिप्रमोनाधि**ष्ठानं, रत्नानि, शिक्षापदपारिशुद्धिः।** आत्मनि च। विशेषाधिगमसंभावनाजातस्य **चेतसो [अ]संकोचः।** स एवं रत्नान्यनुसरंश्चित्तमभिप्रमोदयति [8]लाभा मे सुलब्धाः। यस्य मे शास्ता तथागतोर्हन् सम्यक्संबुद्धः। लाभा मे सुलब्धा यो [अ]हं स्वाख्याते धर्मविनये प्रव्रजितः। लाभा मे सुलब्धाः। यस्य मे सब्रह्मचारिणः शीलवन्तो गुणवन्तः पेशलाः। कल्याणधर्माणः। भद्रकं मे मरणं भविष्यति। भद्रिका कालक्रिया, भद्रको[अ]भिसंपरायः। एवं

12A—4// //[1] चत्वार्यनुस्मरंश्चित्तमभिप्रमोदयति।

कथं शिक्षापदपारिशुद्धिं शीलपारिशुद्धिं अनुस्मरत(रं)श्चित्तमभिप्रमोदयति। लाभा मे सुलब्धा[:] सो[अ]हं शास्तरि तथागते [अ]र्हति सम्यक्संबुद्धे, तस्य च स्वाख्याते धर्मविनये, तत्र च सुप्रतिपन्ने श्रावकसंघे, अहमेभिः सब्रह्मचारिभिः शीलसामान्यगतः। शिक्षासामान्यग[2]तो, मैत्रकायवाङ्मनस्कर्मान्तिः, दृष्टिसामान्यगतः। साधारणपरिभोगी [।]एवं शिक्षापद-

पारिशुद्धिं, शीलपारिशुद्धिमनुस्मरन् (रं) श्चित्तमभिप्रमोदयति । यदुत विप्रतिसारपूर्व्वकेण प्रामोद्येन ।

तत्र कथमात्मनः अधिगमसंभावनामधिष्ठाय भव्यो [अ]हमस्म्येव[ं] परिशुद्धशीलः । प्रतिबलश्च भाजनभूतश्च । [3]एभिः सब्रह्मचारिभिः शील-सामान्यगतो, दृष्टिसामान्यगतः, सद्भिः सामान्यगतैः (सम्यग्गतैः) सत्पुरुषैः, भव्यो[अ]हमस्म्येवंभूत, एवं प्रतिपन्नो, दृष्ट एव धर्मे अप्राप्तस्य प्राप्तये, अनधिगतस्याधिगमाय, आसाक्षात्कृतस्य साक्षात्क्रियायै । इति प्रामोद्यमुत्पादयत्येवमात्मनो[अ]धिगमसंभावनाधिष्ठानेन चित्तमभिप्रमोदय[4]ति ।

अपि च । यदनेन पूर्व्वेणापरमारब्धवीर्येण विहरता विशेषाधिगमः कृतो भवति । तदनुस्मरन्नुत्तरि च विशेषाधिगममभिश्रद्ध्या[ऽऽद[1]]धं श्चित्तमभिप्रमोदयत्ययमपरः । संवेजनीयेषु धर्मेषु चित्तमभिसंतापयन्नास्रवमास्रवस्थानीयेभ्यो धर्मेभ्यश्चित्तं विमुखी करोति । विगुणी करोति । प्रातिमुख्येनाव[5]स्थापयति । विश्लेषयत्यभिप्रमोदनीयेषु धर्मेष्वभिप्रमोदयन्नभिष्यन्दयन्नैष्क्रम्यप्रविवेकजेषु धर्मेषु सस्नेहं चित्तमभिमुखीकरोत्युपश्लेषयति । रमयति । संयोजयत्येवमस्य तच्चित्ते(त्तं) याभ्यां द्वाभ्यां धर्माभ्यां । सर्व्वकृष्णपक्षविमुखं सर्व्वकृष्ण(शुक्ल)पक्षाभिमुखं च

1. This may be added; may also be अभिश्रद्दधंश्चित्त.

प्रवर्त्तते । यदुत संवेगप्रहर्षाभ्यां य[6]तश्चित्तमेवं कृष्णपक्ष विमुखं च । कृत्वा चित्तसन्तापनीयेन मनस्कारेण शुक्लपक्षाभिमुखं कृत्वा, अभिष्यन्दनीयेन मनस्कारेण कालेन कालमध्यात्मं च प्रदधाति । यदुत चेतःशमथेन प्रश्रब्धिजनकेन मनस्कारेण कालेन कालं धर्मान्विचिनोति । प्रविचिनोति । परिवितर्कयति । परिमीमान्स(मांसा)मापद्य[7]ते । ज्ञानदर्शनविशोधके(ने)न मनस्कारेण [।] एवमस्य तच्चित्तं कालेन कालं शमथविपश्यनापरिगृहीतं । सर्व्वाकारसर्व्वगुणहेतूपकृतः (तं)तेषां तेषां रात्रिदिवसानामत्ययात् । क्षणलवमुहूर्त्तानां(णां) [।] विशेषाय परैति ।

12B—4// तद्यथा जातरूपरजतं दक्षेण कर्मारेण//[1] वा, कर्मा [रा[1]]न्तेवासिना वा कालेन कालं यदा संतापितं च भवति । विगतमलकषाये भावे नाभिष्यन्दितं च भवति । तत्र तत्रालंकारकर्मणा मृदुकर्मण्यतायोगेनाभिमुखीकृतं भवति । तमेनं दक्षः कर्मारो वा, कर्मा[रा[1]]न्तेवासी वा तदुपमेन शिल्पज्ञानेन कर्मान्तवस्तुना यत्रेष्ट[IS](म)लंकारविकृ[f]तस्तत्र परिणमयत्येन(व)मेव योगि[2]ना यदा तच्चित्तमभिध्यादिमलकषाये विमुखीभावेनोद्वेजितं च भवति । क्लिष्टदौर्मनस्यविमुखीभावेन चाभिप्रमोदितं भवति ।

1. A separate hand adds this.

तमेनं योगी यत्र यत्र नियोजयति । शमथपक्षे वा विपश्यनापक्षे वा तत्र तत्र सूपश्लिष्टं च भवति । सुलग्नं चाविकलं चाविकम्प्यं च । यथाभिप्रेतार्थ-सम्पत्तये च परैति ।

तत्र[3]कथमादिकर्मिक: तत्प्रथमकर्मिको मनस्कारभावनायां विनियुज्यते ।[1] यथायं विनियुज्यमान: प्रतिपद्यमानश्च स्पृशति । तत्प्रथमत: प्रहाणाभिरतिं चित्तस्यैकाग्रतां । इह योगज्ञो योगप्रयुक्तेनादिकर्मि-(तमादिकर्मि)क: (कं) । तत्प्रथमत एवमववदते । एहि, त्वं, भद्रमुख, त्रीणि निमित्तोद्ग्र[ा]हकानि (णि)-कारणानि निश्रित्य यदुत दृष्टम्वा [4] श्रुतम्वा, चिन्तानुमानाधिपतेयं वा । परिकल्पं पञ्च निमित्तान्युद्-गृह्णीष्व [।] सम्वेजनीयं, प्रसदनीयमादीनवनिमित्तमालोकनिमित्तं वस्तुरूपणानिमित्तञ्च [।] स चेत्स योग-प्रयुक्त आदिकर्मिको रागचरितो भवत्यशुभाविनेय: कथं स पञ्चानां निमित्तानामुद्ग्रहणाया [व]बोध्यते । एवम[व]बोध्यते । एहि, त्वं, भद्रमुख । [5] यं यमेव ग्रामम्वा निगमम्वोपनिश्रित्य विहरसि । स चेदन्यत्र ग्रामे, निगमे वान्यतमं पुरुषम्वा, स्त्रियम्वा आबाधिकं शृणोषि । दु:खितम्बाढग्लानं, मृतम्वा कालगतं, पुरुषम्वा स्त्रियम्वा [।] अपि तु तस्य पुरुषस्य वा, स्त्रिया वान्यतमान्यतमं मित्रामात्यज्ञातिसालोहितं,

1. cp. Bodhi, pp. 272-4.

परचक्रकृतम्वा तद्ग्रामपर्यापन्नस्य ज[6]नकायस्य भोजनव्यसनमग्निदाहकृतम्वा, उदकापहरणकृतम्वा, कुविहितप्रविणाशकृतम्वा, कुप्रयुक्तकर्मान्तप्रलुज्यना-कृतम्वा, अप्रियदायादाधिगमकृतम्वा, कुलांगार विप्रणाशकृतम्वा [।]नो चेच्छृणोषि । अपितु प्रत्यक्षं पश्यसि । नो वान्यस्मिं(स्मिन्) ग्रामनिगमे, नो च तस्मिन्नेव [7] ग्रामनिगमे, न परेषाम(रैर)पि त्वात्मनैव स्पृष्टो भवसि । शारीरिकाभिर्वेदनाभिर्दुःखाभिस्ती-व्राभिरिति विस्तरेण पूर्व्ववत् ।

सर्व्वं दृष्ट्वा श्रुत्वा चैवं चित्तं संवेजय । दुःखो बतायं संसारः, कृच्छ्र आत्मभावप्रतिलब्धो यत्रेमा एवं रूपात्ममश्च(रूपा आत्मनश्च)परेषाञ्च विपत्तय उपलभ्यन्ते । यदुतारोग्यविपत्तिरपि, जातिविपत्ति
12A—5// //[1]रपि, भोगविपत्तिरपि, व्याधिर्व्याधिधर्मता च । मरणं, मरणधर्मता च । अपि चैकेषां शीलविपत्ति-रपि, दृष्टिविपत्तिरपि यतो निदानं सत्त्वा दृष्टे च धर्मे दुःखविहारिणो भवन्ति । सम्पराये च दुर्गति-गामिनः । याश्च सम्पत्तयो दृष्टधर्मसुखविहाराय, अभिसम्पराये च, सुगतिगमनाय ता अप्यनित्या[:], तासामपि अनित्य[2]ता प्रज्ञायते । विपत्तिश्चेत् संमुखीभूता, विमुखीभूता तस्मिन्समये सम्पत्तिः । असंमुखीभूतायामपि विपत्तौ दुर्लभा सम्पत्तिर्विनाश-धर्मिणी च, एवं च पुनश्चित्तमुद्वेजयित्वा(ज्य) साधु च,

सुष्ठु च, योनिशः प्रदधत्स्व । अनाश्वास्यमेतत्स्थानम-विश्वास्यं । यत्संमारे मे मंसरतः, अपरिनिर्वृतस्या-विमुक्तचेतसः एता वि[3]पत्तिसम्पत्तयो, न मे संमुखी-भावं, विमुखीभावं च गच्छेयुः । न वा अतोनिदानं मे दुःखमुत्पद्यते(द्येत) । तीव्रं, खरं, कटुकमना-लापमलभ्यमेतत्स्थानं तस्मादेतत्सर्वार्थमधिपतिं कृत्वा प्रहाणरतिरतेन मे भवितव्यमप्रमत्तेन, एवं बहुल-विहारिणो मे अप्येवास्यानर्थस्याक्रिया स्यादित्येवं योनिशः [4] प्रदधत्स्व, एवं त्वं संवेजनीयं निमित्तमुद्-गृह्य, पुनः प्रसदनीयं निमित्तमुद्गृह्णीष्व[।]एवं च पुनरुद्गृह्णीष्व [।] आत्मनः शीलानि प्रत्यवेक्षस्व । किं परिशुद्धानि मे शीलान्यपरिशुद्धानि[वा[1]], या(यो) मे स्मृतिसंप्रमोषाद्वा, अनादराद्वा क्लेशप्रचुरतया वा, अव्युत्पन्नतो वास्ति कश्चिच्छिक्षाव्यतिक्रमः । व्यति-क्रान्ते वा, मे(मया)शिक्षा[ं]य[5]थाधर्मं प्रतिकृत्या-ध्याशयेन च पुनरकरणाय चित्तमुत्पादितं । कश्चि-(कच्चि)न्मे कर्तव्यं कृतमकर्त्तव्यश्च (व्यं वा) । न कृतं समासतः । कच्चिदध्याशयसम्पन्नो[अ]स्मि प्रयोगसम्पन्नश्च । यदुत । शिक्षापदेषु । एवं न ते प्रत्यवेक्षमाणेन । स चेत्परिशुद्धः शीलस्कन्धः, न पुनस्ते चेतना करणीया । कच्चिन्मेविप्रतिसा:[6]र उत्पद्येतापि तु धर्मतैवेयं । यदेवं विशुद्धशीलस्या-

1. A separate hand adds this.

विप्रतिसार उत्पद्यते । एवं चाविप्रतिसारिणा न चेतना करणीया, कच्चिन्मे प्रामोद्यं उत्पद्येत । अपि तु धर्मतैवेयं यदविप्रतिसारिणः प्रामोद्यमुत्पद्यते । अनेन तावदेकेन प्रामोद्याधिष्ठानेन द्वयाविप्रतिसार-
12B—5// पूर्वकं प्रामोद्य//[1]मुत्पादयितव्यः(म्) । उत्पाद्य परेण संप्रहर्षाधिष्ठानेन मानसं संप्रहर्षय । स चेत् पुनर्भवसि पूर्व्वेणापरं परीत्तस्यापि विशेषाधिगमे प्रीतिर्जनयितव्या, भव्योहमस्मि, प्रतिबलः । एवं परिशुद्धशीलो भगवतः शिक्षासु सुप्रतिष्ठितः । दृष्टे धर्मे प्राप्तस्य प्राप्तये, अनधिगतस्याधिगमाय । असाक्षात्कृतस्य[2]साक्षात्क्रियायै । अनेनाप्यधिष्ठा-नेन मानसं संप्रहर्षय ।। स चेत्पुनर्लाभी भवति पूर्व्वेणापरं परचित्तस्यापि विशेषाधिगमस्य [।] स त्वं । तमधिपतिं कृत्वा परेषां च परिपूर्ण्णे विशेषाधिगमे यदुत तथागते, तथागतश्रावकेषु वा, आत्मनश्चोत्तरि-विशेषाधिगमसंप्रत्ययजातो मानसं संप्रहर्षय इति (।) [3] य एभिराकारैर्मनसस्ते स प्रहर्ष इति । य एभि-राकारैः स पूर्व्वंप्रमुदितस्यैतर्हि प्रीतिमनस्कतेत्युच्यते ।

एवं प्रसदनीयं निमित्तमुद्ग्राहयत्युद्ग्राहयित्वा(ह्य) पुनस्समनुशास्ति । एहि, त्वं, भद्रमुख, संवेजनीयेन निमित्तेन संतापितचित्तः, प्रसदनीयेन चित्तेनाभिष्य-न्दितचित्तः प्रहायाभिध्यादौर्मनस्यं(स्ये) [4] लोके बहुलं विहरिष्यसि । यत्र च यत्रालम्बने प्रयोक्ष्यसे ।।

शमथपक्षे, विपश्यनापक्षे वा, तत्र तत्रालम्बने चित्तं स्थितं भविष्यति । अध्यात्मं सुसंस्थितं, कायचित्त–प्रश्रब्धिचित्तैकाग्रताश्च प्रतिलप्स्यसे [।] एवं कृष्णपक्ष-विमुखीभूतः शुक्लपक्षाभिमुखीभूतस्य यदुत संवेगा-भिष्यन्दनतया सर्व्वं पुन[5]रस्यादीनवनिमित्तमुद्-गृह्णीष्व यदुत निमित्तेभ्यो विपक्षेभ्यभ्यश्चोप क्लेशेभ्यश्च [।]

तत्र **निमित्तानि** रूपनिमित्तादीनि दश, **वितर्काः** कामवितर्कादयो[ऽ]ष्टौ, उपक्लेशाः कामच्छन्दादयः(।) पञ्च । एवञ्च पुनस्तेष्वादीनवमुद्गृह्णीष्व । इतीमानि निमित्तानि व्यापारकारकानि(णि) चित्तस्य । इतीमे वितर्का औ[6]न्मुक्तसंक्षोभक[ा]रकाश्चित्तस्य[।] इतीमे उपक्लेशा अनुपशमक[ा]रकाश्चित्तस्य । यश्च चित्तस्य व्यापारो निमित्तकृतः । यश्चोन्मुक्त-संक्षोभो वितर्ककृतः । यश्चानु(नू)पक्लेश[उप-क्लेश[1]] कृतः दुःखाविहार एष चित्तस्य, तस्मादिमे

12A—6// **निमित्तवितर्कोपक्लेशाः दुःखा अनार्या**//[1]अनर्थोप-संहिताश्चित्तविक्षेपसंक्षोभकरा [:।] एवमादीनवनिमित्त-मुद्गृह्य चित्तैकाग्रतायां चित्तस्थितौ, चित्ताविक्षेपः(पे) षड्भिराकारैर्निमित्तमुद्गृहाण, यदुत निमित्तसंज्ञया निर्निमित्ते वाव्यापारसंज्ञया, निर्विकल्पसंज्ञया, निर्विकल्पे चानौत्सुक्यासंक्षोभसंज्ञया, उपशमसंज्ञया,

1. Added by a separate hand.

उपशमे(न[1]) निष्परिदा[2]ह नैवृ त्य[ा]शुभसंज्ञया [।] एवं निमित्तमुद्गृह्य पुनरपरं चालोकनिमित्तमुद्गृहाण [।] यदुत प्रदीपाद्वा, अग्निस्कन्धप्रभासाद्वा, सूर्यमण्डलाद्वा, चन्द्रमण्डलाद्वा निमित्तमुद्गृह्य, श्मशानाद्युपसंक्रम्य, विनीलकाद्वा निमित्तमुद्गृहाण। यावदस्थी-(स्थि)नाम्वा, अस्थिशंकलिकानाम्वा, नो चेच्छ्मशानादपि तु चित्रकृताद्वा, काष्ठ[3]श्मशानकृताद्वा निमित्तमुद्गृहाण, उद्गृह्य शयनासनासनमुपसंक्रम, उपसंक्रम्यारण्यगतो वा, वृक्षमूलगतो वा, शून्यागारगतो वा, मंचे वा, पीठे वा, तृणसंस्तरके वा निषीद[।] पर्यङ्कमाभुज्य, पादौ प्रक्षाल्य, ऋजुं कायं प्रणिधाय, प्रतिमुखां(खीं) स्मृतिमुपस्थाप्य, निषद्य तत्प्रथमत एकाग्रतायां [4] चित्ताविक्षेपे स्मृत्युपनिबद्धं कुरु, तत्र च षट्संज्ञां(:) निर्व्विकल्पसंज्ञामुपसंशमसंज्ञां निर्व्यापारसंज्ञामनौत्सुक्यासंक्षोभसंज्ञान्निष्परिदाहनैवृ त्य[ा]शुभसंज्ञां। तत्र च ते विक्षेपाविक्षेपपरिज्ञावधानं प्रत्युपस्थितं भवतु। येन विक्षेपाविक्षेपपरिज्ञावधानेन तथा तथा निमित्तवितर्कोपक्लेशेषु विक्षेपश्च परि[5]जानीष्व, चित्तैकाग्रता[या]श्च षट्संज्ञाभावनानुगतायामविक्षेपं [।] तत्र च विक्षेपाविक्षेपे(पयोः) तथा तथावहितो भव यथा ते एकाग्रतोपनिबद्धा, अध्यात्मं चेतःशमथोपनिबद्धा सर्व्वा चित्तसन्ततिश्चित्तधारा पौर्व्वापर्येण

1. This may be deleted.

निर्निमित्ता प्रवर्तेत । निर्विकल्पा उपशान्ता [।] स चेत्पुनः संप्रमोषा[त्]स्मृतिसंप्रमोषात्तथा शमथप्रा[6]-प्ते चेतसि निमित्तवितर्कोपक्लेशानभ्यासदोषादाभास-मागच्छन्ति । सुखमादर्शयन्ति । आलम्बनी-कुर्व्वन्ति । तेषूत्पन्नोत्पन्नेषु स्मृत्यमनसिकारः कर्तव्यः । यदुत पूर्व्वदृष्टमेवमधिपतिं कृत्वा एवं तदालम्बनम[नु]स्मृत्यमनसिकारेण विभावितं । विश्वस्तमनाभासगतायामवस्थापितं भविष्यति । तच्चैतद्, भद्रमुख, सूक्ष्म[7]मालम्बनं । दुःप्र(दुष्प्र)-तिविध्यमस्य ते प्रतिवि(वे)धाय तीव्र[च्]छन्दश्च व्यायामश्च करणीय[:।]

**इदं चालम्बनं सन्धायोक्तं भगवता**[1] । **जनपद-कल्याणी जनपदकल्याणीति भिक्षवो**[2] महाजनकायः सन्निपतेत । अथ पुरुष आगच्छेदबालजातीयः । तं कश्चिदेव[ं]वदेदिदं ते भोः, पुरुष, तैलपात्रपूर्ण्णं समतित्तिकमनभिषेक्यम[8]न्तरा च जनकायः सन्नि-पतेत । सा खलु जनपदकल्याणीम(अ)न्तरा च

1. This passage may be compared to the Pāli Telapatita-jātaka (Fausböll, Jātaka, I.393), *vide* also, M. B. Emeneau, Koṭā Texts, Part One (University of California Publication in Linguistics, Vol. 2, No. 1, 1944), pp. 5-7 (quoted by Wayman, p. 123).
2. MS omits here : जनःसन्निपतेत । सा खलु जनपदकल्याणी परमप्रधाना नृत्तगीतवादित इति.

महासमाजं । परिहर्त्तव्यमयं च ते उत्क्षिप्तासिको बधकपुरुषः पृष्ठतः पृष्ठतः समनुबद्धः । स चेत्त्वमस्मात्तैलपात्रादेकबिन्दुमपि पृथिव्यां निपातयिष्यसि ततस्ते उत्क्षिप्त[ा]सिको बधकपुरुष उच्छिन्नमूलं शिरः
12B—6// प्रपातयिष्यति । किं मन्यध्वे भिक्षवः//[1] अपि नु स पुरुषः अमनसिकृत्वा तैलपात्रममनसिकृत्वा तैलपात्रममनसिकृत्वा उत्क्षिप्तासिकं बधकपुरुषं जनपदकल्याणी[ं] मनसि कुर्यान्महाजनसमाजम्नो, नो, भदन्त, तत्कस्य हेतोस्तथा हि तेन पुरुषेणो[त्क्षि]प्तासिको वधकपुरुषः पृष्ठतः पृष्ठतः समनुबद्धो दृष्टः । तस्यैवं स्यात् [।] स चेदहमस्मात्तैलपात्रादेकबिन्दुमपि पृथिव्यां पातयिष्यामि । अतो मे उ[2]त्क्षिप्तासिको बधकपुरुषः उच्छिन्नमूलं शिरः प्रपातयिष्यति । नान्यत्र स पुरुषः अमनसिकृत्य(त्वा) जनपदकल्याणी[ं] महासमाजम्वा । तदेव तैलपात्रं सर्व्वचेतसा समन्वाहृत्य सम्यगेव परिहरेदेवमेव भिक्षवः । ये केचिच्चत्वारि स्मृत्युपस्थानानि सत्कृत्य भावयन्ति । गुरुकृत्य सर्व्वचेतसा समन्वाहृत्यते मे (त इमे) श्रावका इति [।] तत्र [3] जनपदकल्याणीति काय [च्]छन्दाद्युपक्लेशपर्यवस्थानीयानान्धर्माणामेतदधिवचनं । परमप्रधाना नृत्तगीतवादित इति वितर्कप्रपञ्चसंक्षोभस्थानीयानां धर्माणामेतदधिवचनं । महासमाज इति । रूपनिमित्तादीनां दशानां निमित्तानामेतदधि-

वचनं । अत्रालभागीयः पुरुष इति । योगाचार-स्याधिवचनं । तैलपात्रमिति । [4] शमथोपनि-बद्धस्य चित्तस्य एतदधिवचनं । कायचित्तप्रश्रब्धि-स्नेहनार्थेन उत्क्षिप्तासिको बधकपुरुष इतिनिमित्त-वितर्कोपक्लेशेषु पूर्वोद्गृहीतस्यादीनस्यैतदधिवचनं [।] सत्कृत्य विहरति । न चैकबिन्दुमपि पृथिव्यां पा[5]-तयतीति विक्षेपाविक्षेपपरिज्ञानावधानपरिगृहीतस्य शमथमार्गस्यैतदधिवचनं । येनायं सर्व्वो (सर्वां) चित्त-सन्तर्ति चित्तधारां निर्मिमित्तां निर्विकल्पामुपशान्तां वीर्यबलेन निरन्तरां पौर्व्वापर्येण प्रवर्त्तयति । न चैकचित्तमुत्पादयति । निमित्तालम्बनम्वा वितर्को-पक्लेशालम्बनम्वा ॥

तमेनमेवं शमथप्रयुक्तमादि[6]कर्मिकं योगी समनु-शास्ति । यावत्ते, भद्रमुख, एवं शमथमार्गप्रयुक्तस्य एवमुपायपरिगृहीतं स्मृतिसंप्रजन्यसहगतं साभिरामं चित्तं भवति । तावत्ते शमथमार्ग एव भावयितव्यः । स चेत्पुनरनभ्यासमोषान्न रमते सोपायं च तदालम्ब तस्मान्निर्विकल्पादालम्बनाद् व्युत्थाय सविकल्प आलम्बने [7] स्मृत्युपनिबद्धं कुरुते । यदेव ते पूर्व्वोद्-गृहीतमशुभनिमित्तं तदेव मनसि कुरु तत्प्रथमतो निमित्तमात्रानुसारिण्या विपश्यनया यदुत विनील-कम्वा, विपूयकम्वा, यावदस्थिशंकलिकाम्वा ॥ तथा प्रयुक्तश्च तत्प्रथमव (त) एकं विनीलकमधिमुच्यस्व,

यावदेकामस्थिशंकलिकां यतश्चात्र कृतपरिचयो भवसि । [8] प्रभास्वरश्च तेधिमोक्षः प्रवर्तते । तदालम्बनन्द्वौ तदा द्वौ, त्रीणि, चत्वारि, पंच, दश, विंश, त्रिंशच्चत्वारिंशत् । पञ्चाशद्विनीलकशतं-विनीलकसहस्रं, यावत्सर्व्वा दिशो विदिशश्च । प्रमाणाकारेण पूर्व्वा[ ]निरन्तरा[म[1]]धिमुच्यस्व । येषां न स्यादवकाशः अन्ततो दण्डविष्टम्भनकोटी-

12A—7// मात्रमपि [।] यथाविनीलकानामेवं यावद //[1] स्थिशंकलिकानां सर्व्वमेवमधिमुक्तिमनस्कारं निश्रित्य भूतमनस्कारमवतर, एवं च पुनरवतर, यावन्त्येतानि विनीलकानि मयाधिमुक्तानि यावदस्थिशंकलिका अतो[अ]प्रमाणवराणि मे पूर्व्वान्तिभारभ्य, तत्र तत्र भवगतिच्युत्युपपादेषु, मृतस्य कालगतस्य यानि विनीलकानि निर्वृत्तानि, यावदस्थिशंकलिका-निर्वृत्यां । येषां पू[2]र्व्वा कोटिर्न प्रज्ञायते, निवर्तमानानां, ताः स चेत्कश्चित् संहरेत् संहृताश्च न विनश्येयुः, न च पूतीभवेयुः । नास्ति स पृथिवी-प्रदेशो यत्र तेषामवकाशः स्यात् । एककल्पिका-नामपि, तावद्यावदस्थिशंकलिकानां स चेत्कश्चित्सं-हारको भवेत् । तासां स्यात् संहृतानां विपुलपार्श्व-पर्वतसमा राशिः । यथा पूर्व्वस्यान्तर(पूर्वान्त)-मारभ्यैवम[3]परान्तमपि यावत् (।) दुःखस्यान्तं न

1. This may be added.

करिष्याम्येवं हि त्वमभियुक्षि(युंक्ष्व)। मनस्कारं निश्रित्य भूतमनस्कारमवतीर्ण्णो भविष्यसि(भव)। न चैतानि विनीलकानि यावदस्थिशंकलिका[या[1]] विपश्यनाप्रयुक्तेन सकृद्विपश्यितव्या[2][नि], नान्यत्रैकं[1] विनीलकमधिमुच्य पुनश्चित्तं शमयितव्यं तावच्च तद्विनीकमधिमोक्तव्य:(व्यं) [4] यावत्तस्मेना(स्मिन्ना) लम्बने साभिरामप्रभास्वरं नोपायासेन पर्यवनह्यते। न ताव(ा)त्कालकरणीयं भवति। तस्मिन् समये अध्यात्मं सा(सं?) शमयितव्यं यथा विनीलकमेवं यावदस्थिशंकलिकैका एवं यावदप्रमाणा अनेनैव नयेन वेदितव्या[:]। चित्तमध्यात्मं संशमयित्वा(संशम्य) [5] विमोक्तव्यास्तत: सर्व्वपश्चादप्रमाणानि विनीलकान्यप्रमाणा यावदस्थिशंकलिका अध्यातमं चित्ताभिसंक्षेपेण विभावयत्यनाभासगतायां स्थापयति। न च तानि निमित्तान्युत्सृजति ॥ सविकल्पानि नापि च कल्पयति। नान्यत्र तदालम्बनमेव निर्निमित्तं निर्विकल्पमुपशान्तं चित्तमवस्थापयति।

स पुन[6]श्चोपदिश्यते, यत्ते भद्रमुख, पूर्व्वमेवालोकनिमित्तमुद्गृहीतं, तत्त्वं शमथपक्षप्रयोगे[अ]पि मनसि कुरु, विपश्यनापक्षप्रयोगे[अ]पि, आलोक-

1. This may be added.
2. This is a Buddhist Sanskrit influence which seems due to the mistake of the scribe, the correct form might be विपश्यनाप्रयुतेन सकृद् द्रष्टव्यानि।

सहगतेन चित्तेन, सप्रभाससहगतेन, प्रभास्वरेणानन्धकारेण शमथविपश्यनां भावय। एवं च ते शमथविपश्यनामार्गे आलोकसंज्ञां भावयतः। स चे [7] दादित एव अविस्पष्टोधिविमोक्षो भविष्यत्यालम्बने सम्य[गा]भासः। स तेन हेतुना, तेन प्रत्ययेन, भावनाभासाद्विशिष्टता भविष्यति। प्रचुराभास(ग[1])ता च। स चेत्पुनरादित एव विस्पष्टो भविष्यति। प्रचुराभासः। स भूयस्या मात्रया विस्पष्टतरतां प्रचुराभासतरताञ्च गमिष्यति। स त्वमेतत्सम्वेगनिमित्तेन [8] सूद्गृहीतेन, प्रसदनीयनिमित्तेन, शमथनिमित्तेन, विपश्यनानिमित्तेन, लोकनिमित्तेन, सूद्गृहीतेन कालमध्यात्मं चित्तं संशयमयन्कालेन कालं धर्मान्विचिन्वन्ति(चिन्वन्), निमित्तमात्रानुसारिण्या विपश्यनया स्मृत्युपस्थानेष्ववतर।

12B—7// यदुताशुभाप्रयोग //[1] मेवाधिपतिं कृत्वा, एवं च पुनर्विचिन्वन् बहिर्धा षट्त्रिंशतो(त्)द्रव्याणि कायात् केशादि प्रस्रावपर्यन्ता(न्तं) निमित्तमुद्गृह्य अध्यात्ममेतानि सर्व्वाणि अशुचिद्रव्याण्यधिमुच्याध्यात्मंचित्तं संशमय(स्व[1]), इदं ते भविष्यत्यध्यात्मं कायेन कायानुपश्यनायाः यदुतात्मनो[ऽ]न्तः कायमारभ्य, स त्वं पुनरपि बहिर्धा अशुभानिमित्तेनोद्गृहीतेन विनी[2]लकं चाधिमुच्यम्व, यावदस्थि वा शंकलिकाम्वा,

---

1. This may be deleted.

परीत्तेन वाधिमोक्षेण, महद्गतेन वा[अ]प्रमाणेन वाधिमुच्याधिमुच्याध्यात्मं चित्तं संशमय, इदं ते भविष्यति। बहिर्धा कायेन कायानुपश्यनाया, यदुत परसान्ततिकं बहिःकायमारभ्य, स त्वं पुनरप्यात्मनः अन्तःकायेऽशुभतापरिभावितेन चेतसा[3]श्चाशुभता-परिभावितेन चेतसा परकाये चान्तर्बहिश्चाशुभतापरि-भावितेन चेतसा[ऽ]त्मानं घ्रि(म्रि)यमाणमधि-मुच्यस्व, मृतम्वा पुनः श्मशाने [अ]भिनिर्ह्रिय-माणमभिनिर्हृतम्वा, श्मशाने च्छोरितं, छोरितम्वा विनीलकावस्थं, विपूयकावस्थं, यावदस्थिशंकालि-कावस्थमधिमुच्यस्व, इदं ते भविष्यत्यध्यात्म-बहिर्धा काये कायानुपश्यनायाः स [त्]त्वं, पुनरपि चत्वारोऽरूपिणः स्कन्धाः [4] श्रुतचिन्ताधिपतेयेन परि-कल्पनिमित्तग्राहेण त्रिषु भागेष्वधिमुच्यस्व शमथपक्ष्ये, विक्षेपपक्ष्ये, विपश्यनापक्ष्ये च। यदाध्यात्मं चित्त-मभिसंक्षिपसि तत्र निर्मिमित्तनिर्विकल्पोपशमाकारा निर्व्यापारानुत्सुकासंक्षोभनिःपरिदाह नैर्वृत्यसुखसंज्ञा-कारा अविक्षेपालम्बना वेदनादयश्चत्वारो[अ]रूपिणः स्कन्धाः। [5] प्रतिक्षणं प्रतिक्षणमन्यो[ऽ]न्यतया नवनवनिष्पुराणतया प्रवर्तन्त इत्यधिमुच्यस्व, इदं ते भविष्यत्यध्यात्मबहिर्धा वेदनासु, चित्ते, धर्मेषु, धर्मानुपश्यनायाः सत्त्वं। ये पूर्व्वं विषयोपादाना, विषयालम्बना असमाहितभूमिपतिता अभ्यपतिताः

क्षीणा, ये चैतर्हि स्मृतिसंप्रमोषाच्चित्तक्षेपे सत्युत्पद्यन्ते [6] निमित्तवितर्कोपक्लेशालम्बनाधिपतेया वेदनादयश्चत्वारो[अ]रूपिणः स्कन्धास्तेषामा(या)पायिकतां तावत्कालिकतामित्वरप्रत्युपस्थायितां, सादीनवतां, सध्रुवतामनाश्वासिकतामपरिमुच्यस्व । इदं ते भविष्यति । बहिर्धा वेदनाचित्तधर्मानुपश्यनायाः सत्त्वं, पुनरपि विपश्यनानिमित्तमुद्गृह्य सनिमित्ते संकल्पे [7] मनस्कारे स्थितः । ये सविकल्पसनिमित्तालम्बनाधिपतेया अध्यात्ममुत्पद्यन्ते । वेदनादयचत्वारो [अ]रूपिणः स्कन्धास्तेषां प्रतिक्षणं नवनवतां निष्पुराणतामन्यो[ऽ]न्यतां पूर्ववदधिमुच्यस्व । इदं ते भविष्यति बहिर्धा वेदनायां, चित्ते, धर्मेषु धर्मानुपश्यनायाः [सत्त्वं] । एवं हि त्वमशुभाप्रयोगमधि[8]पतिं कृत्वा चत्वारि स्मृत्युपस्थानान्यवतीर्णो भविष्यसि । स्मृत्युपस्थाने, प्रयोगे [अ]पि च । ते कालेन कालं शमथविपश्यनायां प्रयोक्तव्यं । स त्वमेवमुपस्थितया स्मृत्या चतुर्षु स्मृत्युपस्थानेषु यं यमेव ग्रामं वा,
12A—8// निग//[1]मं वोपनिश्रित्य विहरसि, स त्वं तमेव ग्रामं वा, निगमं वा । तन्निन्येन चित्तेन, तत्प्रवणेन, तत्प्राभो(भा)रेण आलम्बनमालम्बननिमित्तमुत्सृजता पिण्डाय प्रविश । चण्डस्य हस्तिनश्चण्डस्याश्वस्य, चण्डस्य गोश्चण्डस्य कुररस्य, अहिश्वभ्रस्थाणुकण्टकपल्वलप्रपातस्यन्दिकगूथकठल्लपापिके या चर्या शयना-

सनपरि[2]वर्जना [।] अरक्षितस्ते आत्मा भवति। येषु च ते विषयनिमित्तेष्विन्द्रियाणि प्रेरयितव्यानि तेष्वनाभोगतया असंवृतानीन्द्रियाणि भवन्तु। येषु वा पुनर्निमित्तेष्विन्द्रियाणि प्रेरयितव्यानि। तेषु तेषूपस्थिता स्मृतिः। भवतु, यदुत क्लेशासमुदाचाराय। स त्वमेवं सुरक्षितेन कायेन, सुसंवृतैरिन्द्रियैः, सूप[3]स्थितयास्मृत्या, तद्गतेन मानसेन मात्रया पिण्डपातं परिभुंक्ष्व। मितभागी(णी) च भव, सार्धं गृहस्थप्रव्रजितैर्युक्तका(भा)णी, कालभाणी, आर्जवभाणी। प्रशान्तभाणी। अधर्म्या च ते[त्वया] कथा सर्व्वेण सर्व्वं परिवर्जयितव्या। धर्म्यामपि ते[त्वया] कथा[ ]कथयता न विगृह्य कथा करणीया। तत्कस्य हेतोः [।] विगृह्य कथासं[4]रम्भानुयोगमनुयुक्तस्य पुरुषपुद्गलस्य विहरतः कथाबाहुल्ये चित्तं सन्तिष्ठते। तथा बाहुल्ये सत्यौद्धत्यमौद्धत्ये सत्यव्युपशमः। अव्युपशान्तचित्तस्याराच्चित्तं समाधेर्भवति। न त्वमेवंचारी त्वरितत्वरितमनुत्सृष्टेनालम्बनेन मे[अ]द्य-शमथविपश्यनायां यथोद्गृहीतेनैव निमित्तेन प्रतनुकारितया[5]वा, अन्तकारितया च। योगं कुरु, ते (स त्वम्) अग्निमथनप्रयोगेण च सातत्यसत्कृत्यप्रयोगतया प्रततकारी भव, एवं तु पुनश्चितं प्रणिधत्स्व। स चेद्यावदायुर्जम्बूद्वीपे सर्व्वेषां जंबूद्वीपकानां मनुष्याणामभूत्तत्सर्व्वमभिसमस्तं ममैकस्यैतर्हि

स्यात् । सो[अ]हं तावदप्रमाणेनायुषा प्रमाणयो[6]-
गप्रयोगेण च सातत्यसत्कृत्यप्रयोगतया प्रततकारी
भव[ामि] [।] एवं च पुनश्चित्तं प्रणिधत्स्व । स
चेद्यावदायुर्जंबूद्वीपे मनसिकारे शमथविपश्यनायां
योगं न रिंचयं(यन्) यदुतास्यैव योगप्रयोगस्य महा-
फलतां महानुशंसतां च विदित्वा प्रागेवास्मिन् परि-
(प्रणि)धत्ते [।] आयुषीत्वरे जीविते दूरमपि[7]-
गत्वा वर्षशति(त)के परिगण्यमानमौ[1]न्तिके [।]

एवं हि त्वं यथानुशिष्टः प्रततकारी वात्यन्तकारी
च । यस्यार्थे प्रहाणमुपगतस्तस्यार्थस्याबाधको
भविष्यसि । तत्प्रथमत[स्त[2]]म्प्र[क्ष्य[3]]सि । मृदुकां
कायप्रश्रब्धिं चित्तैकाग्रतां ततश्चोत्तरि विपुला[ऽ]-
लौकिकलोकोत्तरां सम्पदमारागयिष्यति(सि) ।

12B—8// //[1] एवमयमादिकर्मिकस्तत्प्रथमकर्मिकः । अशु-
भाप्रयुक्तो योगज्ञेनाचार्येण चोद्यमानः सम्यग(क्)-
चोदितो भवत्येवं च प्रतिपद्यमानः । सम्यक्प्रतिपन्नो
भवति । यथा[अ]शुभाविनेयो[अ]शुभायां, तथा
मैत्र्यविनेयादयो[अ]पि आनापानस्मृतिपर्यवसानाय
यथायोगं वेदितव्यास्तत्रायं वि[2]शेषः । तदन्येष्वव-
वतरणमुखेषु तं विभावयिष्यामि । तत्र मैत्रीभाव-
नाप्रयुक्तेनादिकर्मिका(ण)बहिर्धा मित्रपक्षादुदासीन-

1. Letter illegible.
2. This may be added.
3. Syllables illegible.

पक्षाच्च निमित्तमुद्गृह्य प्रतिरूपशयनासनगतो हि सुखाध्याशयगतेन मनस्कारेण समाहितभूमिकेन पूर्व्वमेकं मित्रमधिमोक्तव्यमेकममित्रमेकमु(क उ)दासी[3]नं(नः), तेषु च त्रि[षु]पक्षेषु तुल्यं हितसुखाध्याशयगतेन मनस्कारेणोपसंहारश्च करणीयः। सुखिता भवन्त्येते सुखकायाः सत्त्वा यदुतानवद्यकामसुखेन, अनवद्यसप्रीतिकसुखेन, अनवद्यनिष्प्रीतिकसुखेन। ततः पश्चाद् द्वे मित्राणि, त्रीणि, चत्वारि, पञ्च, दश, विंश, त्रिंशत्पूर्व्ववद्यावत्सर्व्वा दिशो विदिशश्च मित्रामित्र(त्रैः) पूर्ण्णा अधिमुच्य[4]न्ते। निरन्तरा यत्र नास्त्यन्तरमन्ततो दण्डकोटीविष्कम्भनमात्रमपि यथा मित्रपक्षेणैवममित्रोदासीनपक्षेण वेदितव्यं। स च मैत्रीप्रयोगं च न जहाति। नान्यत्र भावयन्नेव मैत्रीं स्मृत्युपस्थानेष्ववतरति। कथं पुनरवतरत्यधिमुच्यमानो [अ]वतरति। यथाहमप्यन्येषां मित्रसम्मतो [अ]मित्रसम्मतश्चोदासीनसम्मतश्च[।]अहमपि[5]सुखकामो दुःखप्रतिकूलः। इदमस्याध्यात्मं काये कायानुपश्यनायाः [सत्त्वम्[1]]। एते [अ]पि सत्त्वाः परेषां मित्रभूता, अमित्रभूता, उदासीनभूताश्च, यथा मे ते [अ]पि सुखकामाः दुःखप्रतिकूला इदमस्य बहिर्धा कायानुपश्यनायाः [सत्त्वं[1]], यथाहं तथैते सत्त्वा, यथा मे आत्मनः सुखमेषणीयं सत्त्वानामात्म-

1. MS. omits this.

समतयात्मतुल्यत[6] या एषां सत्त्वानां मयाभिहित-सुखोपसंहारकरणाय इतीदमस्याध्यात्मबहिर्धा काये कायानुपश्यनायाः [सत्त्वम्[1]]। चत्वारि चैतानि स्मृत्युपस्थानानि, संभिन्नस्कन्धालम्बनतया संभिन्ना-लम्बनं स्मृत्युपस्थानं भवति। रूपनिमित्तन्तु योगी उद्गृह्य वर्णसंस्थाननिमित्तं, विज्ञप्तिनिमित्तं च मित्रा[ऽ]मित्रोदासीनपक्षाद् (क्षेभ्यो) [ऽ]धिमुच्यते। तेने[7]दं कायस्मृत्युपस्थानमेव व्यावस्थाप्यते। सोधि-मुक्तिमनस्कारं निश्रित्य, भूतमनस्कारमस्यावतरत्येवं च पुनरधिमुच्यमानो [अ]वतरति। यावदप्रमाणाः सत्त्वा एते मया [अ]धिमुक्ता। हितसुखगतेनाध्या-शयेन। अतो [अ]प्रमाणतराः सत्त्वा ये मम-पूर्वान्तमारभ्य मित्रा[ऽ]मित्रोदासीनपक्षतया [अ]-
13A—2// भ्यतीता ये मम मित्रतां //[1] गत्वा[2] अमित्रतामुपगता, अमित्रतां गत्वा मित्रतां चोदासीनतां तोप(चोप)-गतास्तदनेन पर्यायेण[3] सर्व एव सत्त्वास्समसमा, नास्त्यत्र काचिन्मित्रता वा, अमित्रता वोदासीनता वा, परिनिष्पन्नेत्यनेनैव पर्यायेण तुल्यहितसुखोपसंहारता च करणीया। यथा पूर्वान्तमारभ्य एवमपरान्तम-प्यारम्य, सत्यां संसृतौ [2] संसारे येपि च मया सत्त्वाः पूर्वान्तमारभ्य तन्मैत्रेण चित्तेनानुकम्पिताः। किं

1. MS. omits this.
2. MS. erased and blurred.
3. MS. illegible.

चापि ते [अ]भ्यतीता अपितु तानेतर्ह्यनुकम्पे यदुत चित्तनिष्कालुष्य(कलुष)तामव्यापन्नतामुपादाय। सुखिता बत ते सत्त्वा, भूता भविष्यन्(अभूवन्), ये, [अ]पि च न भूता अनागते [अ]ध्वनि सुखिता भवन्तु। एवं भूतमनस्कारानुप्रतिष्ठस्य मैत्रीविहारिण: य: पुण्याभिष्यन्द: [3] कुशलाभिष्यन्द:। तस्याधिमोक्षिकमैत्रीविहारगत: पुण्यस्कन्ध:। शतिमामपि कलां नोपैति। सहस्रिमामपि। संख्यामपि, कलामपि। गणनामप्युपनिषदमपि नोपैति [।] शेषं पूर्व्वत्॥

तत्रेदंप्रत्ययताप्रतीत्यसमुत्पाद आदिकर्मिक: श्रुतचिन्ताधिपतेयेन परिकल्पितं न निमित्तमुद्गृह्णात्यन्येषां [4] सत्त्वानामज्ञानं। सम्मोहो येनेमे प्रत्यक्षमनित्यं नित्यतो [अ]वगच्छन्ति प्रत्यक्षमशुचि शुचित:, दु:खं सुखत:, निरात्मकतामात्मत:। विपर्यस्ता एते सत्त्वा विपर्यास हेतोर्दृष्टे धर्मे, वेदनासु सम्पराये चात्मभावाभिनिवृत्तौ, तृष्यन्ति, तृषिताश्च जातिमूलकानि कर्माणि कृत्वा एवमायत्यां कर्मक्लेशहेतु [......[1]] केवलं संदु:[5]ख[2]मभिनिर्व्वर्तयन्त्येवं निमित्तमुद्गृह्याध्यात्ममधिमुच्यते। अयमपि केवलो दु:खस्कन्ध एवमेव संभूत इति। ये चात्मभावा नानन्ता[:] पर्यन्ता: पूर्व्वान्तमारभ्य येषामादिरेव न प्रज्ञायते।

1. Letters illegible.
2. MS. blurred and indistinct, letters illegible.

तेऽप्येवंभूता. एषामपि सत्त्वानामतीतानागतप्रत्युत्पन्नाः सर्व्वे एवात्मभावा दुःखस्कन्धसंगृहीता एवमेवाभिनिर्वृत्ताः। आय[6]त्यां नोत्पद्यन्ते। स खल्वयमियं(दं)प्रत्ययताप्रतीत्यसमुत्पादमनस्कारः सर्व्वंभूतमनस्कार एव नास्त्य[ा]धिमोक्षिकः। यदि न पुनरात्मनो वर्तमानान् स्कन्धान् प्रतीत्यसमुत्पन्नान् मनसिकरोति। तदाध्यात्मं काये यावद्धर्मेषु धर्मानुदर्शी विहरति। यदा च पुनः परेषां वर्तमानान्स्कन्धान् प्रतीत्यसमुत्पन्नान्मनसि [7] करोति। तदाध्यात्मबहिर्धा काये यावद्धर्मेषु धर्मानुदर्शी विहरति। यदात्मनश्च परेषां चातीतानागतान् [स्कन्धान्[1]] प्रतीत्यसमुत्पन्नान्मनसि करोति। तदाध्यात्मबहिर्धा काये यावद्धर्मेषु धर्मानुदर्शी विहरति। शेषं पूर्व्वत्।

तत्र धातुप्रभेदप्रयोगप्रयुक्त आदिकर्मिको बहि[8]र्धापृथिवीकाठिन्यनिमित्तमुद्ग्रह्य, तद्यथा भूपर्व्वततृणवनशर्करकठिल्लमणिमुक्तिवैडूर्यशिलाप्रवालादिकेभ्यश्चाध्यात्मं काठिन्यमधिमुच्यते। बहिर्धा //[1]
13B—2// अप्स्वब्धातोर्न्नि(र्नि)मित्तमुद्गृह्य, तद्यथा नदीप्रस्रवणतडागकूपादिभ्य[ः], तथा महतो [अ]ग्निस्क स्क[न्धस्य[2]]ब्धौ वादित्यकिरणसंतापिता भूराविष्टेभ्यो

1. A separate hand adds this.
2. Letters lost by pin-hold, last syllable completely illegible, seems to be a ligature with r.

[वा[1]] सर्व्वेभ्यः । उदाराग्निसंप्रतापितेभ्यो वा प्रश्रयेभ्यश्च नो बहिर्श्वा वायुस्कन्धात्पूर्व्वदक्षिणपश्चिमोत्तरेभ्यो वायुभ्यो यावद्वायुमण्डलेभ्यः । ये देशा [अस्त्यादेस्तारणीया[2]] [2] वायुगतेन सच्छिद्राः, सुशिराः, सावकाशाः, तस्मादाकाशधातोर्निमित्तमुद्गृह्णात्यध्यात्ममब्धातुं, तेजो धातुं वायुधातुमाकाशधातुमधिमुच्यति(ते) । श्रुतचिन्ताधिपतेयेन च परिकल्पितेन [।] एवं विज्ञानधातोर्निमित्तमुद्गृह्णाति । चक्षुराध्यात्मिकमायतनमपरिभिन्नं चेद् भवति । रूपमाभासगतं । न च तज्जो मनस्कारः [3] प्रत्युपस्थितो भवति । न तज्जस्य चक्षुर्विज्ञानस्य प्रादुर्भावो भवति । विपर्ययाद्भवति । एवं यावन्मनोधर्मान्मनोविज्ञानं वेदितव्यम् ।

एवं निमित्तमुद्गृह्याप्येषां सर्व्वेषां विज्ञानानामस्मिन् काये च[ा]तुर्महाभूतिके बीजं धातुर्गोत्रं प्रकृतिरित्यधिमुच्यते । तान्येतानि चत्वारि महाभूतानि तत्प्रथमतो [अ]ङ्गप्रत्यंगो(गतो) [अ]र्थं विनाप्य [4]धिमुच्यते [।] ततः पश्चात् । सूक्ष्मतरावयव प्रभेदान(ा)धिमुच्यते । एवं यावद्गतायनप्रविष्ट[स्]तु[टि[2]] समतया, एवं यावच्छनैः शनैः परमाणुशो[अ]धिमुच्यते । स एकैकमंगावयवप्रमाणपरमाणु-

1. Letters added by a separate hand.
2. MS. blurred, letter(s) indistinct and illegible.

सञ्चयसन्निविष्टमधिमुच्यते । कः पुनर्व्वादः सर्व्व-कायमयं(यम् । अयं)धातुप्रभेदप्रयुक्तस्य चार्थप्रभेद-पर्यन्तः रूपिणां ता[5]बद्धातूनामाकाशधातोः पुनः । यत्पुनरस्य तस्मिन् प्रयोगे शमथविपश्यनाभावनायां विक्षेपाविक्षेपपरिज्ञावधानमिदमस्य संप्रजन्यस्य स्मृतिसमतायाश्च [।] यत्पुनः संवेगनिमित्तं, प्रसदनीयं च निमित्तं सूद्गृहीतं भवतीदमस्याभिध्यादौर्मनस्य विनयस्य, तस्यैवमातापिनो विहरतो यावत्(द्) द्वि[6]-तीयलोके [अ]भिध्यादौर्मनस्यं पूर्व्वमेव सम्यक्प्रयोग-[स]मारम्भकाले । सूक्ष्मचित्तप्रश्रब्धिर्दुरुपलभ्या प्रवर्त्तते । या तत्र शमथम्वा भावयतो, विपश्यनाम्वा प्रस्वस्थचित्तता, प्रस्वस्थकायता । चित्तकाय-कर्मण्यता । इयमत्र कायचित्तप्रश्रब्धिः । तस्य सैव सूक्ष्मा चित्तैकाग्रता चित्तकायप्रश्रब्धिश्चाभिवर[1] नी औदारिकां [7] सूपलक्ष्यां चित्तैकाग्रतां कायप्रश्रब्धि-मावहति । यदुत हेतुपारं पर्यादानयोगेन, न तस्य, न चिरस्येदानीमौदारिकीचित्तकायप्रश्रब्धिश्चित्तै-काग्रता च । सूपलक्ष्योत्पत्स्यतीति । यावदस्या पूर्व्वनिमित्तं पूर्वं निर्गौरवप्रतिभासमुत्पद्यते । न चैतद्वाध[8]लक्षणं । तस्यानन्तरोत्पादाद्यत्प्रहाणर-तिविवन्धकारी(रि)णां क्लेशानां पक्ष्यं चित्तं(त्त)-दौष्ठुल्यं तत्प्रहीयते । तत्प्रतिपक्षेण च चित्तकर्मण्यता

1. Letters not legible.

चित्तप्रश्रब्धिरुत्पद्यते। तस्योत्पादात् कायप्रश्रब्ध्यु-
13A—3// त्पादानुकूलानि //[1] वायूर्ध्वं[मु]क्तानि महाभूतानि कायेऽ[ऽ]वक्रमन्ति। तेषामवक्रमणहेतोर्यत्काय-दौष्ठुल्यं तद्विगच्छति। प्रहाणरतिरिव[द[1] क]रक्लेशापक्ष्यकायप्रश्रब्ध्या च तत्प्रतिपक्षिकया सर्व्वकायः पूर्यते। स्यादा[·········[1]]ध्याति।

ततः प्रथमोपनिपाते चित्तौष्ठिल्यं (चित्तदौष्ठुल्यं) चित्तसुमनस्कारप्रामोद्यसहगतालम्बनसाभिरामता च। चित्तस्य तस्मिन् समये ख्या[2]ति। तस्योर्ध्वं यो [ऽ]सौ तत्प्रथमोपनिपाती प्रश्रब्धिवेगः। स शनैः शनैः परिश्लथतरो भवति। छायेवानुगता प्रश्रब्धिः काये च प्रवर्त्तते। यच्च तदौद्धिल्यं (द्धत्यं) चेतसस्तदप्यवहीयते। प्रशान्ताकारचित्तसालम्बने शमथो यस्तच्च (यस्स) प्रवर्त्तते। तत ऊर्ध्वमयं योगी आदिकर्मिकः समनस्कारो भवति। [स]मनस्कार इति च [3] संख्यां गच्छति। तत्कस्य हेतोः। रूपार्थ[ा]-नुरोधेन समाहितभूमिको मनस्कारः परीत्तस्तप्रथमतः प्रतिलब्धो भवति। तेनोच्यते **समनस्कार** इति।

तस्यास्य **समनस्कारस्यादिकर्मिकस्येमानि लिंगानि** भवन्ति। परीत्तमनेन रूपावचरं चित्तं प्रतिलब्धं भवति। परीत्ता कायप्रश्रब्धिश्चित्तप्रश्रब्धिश्चित्तै[4]काग्रता, भव्यो भवति प्रतिबलः। क्लेशविशोधनालम्बनः

1. Letters not legible.

प्रयोग[ ोऽ]स्य, स्तिग्वा(मा)चास्य चित्तसन्ततिः प्रवर्त्तते । शमथोपगूढाच्चरितं तदानेन विशोधितं भवति । स चेद्रंजनीये विषये चरति, न तीव्रं राग-पर्यवस्थानमुत्पादयति । अल्पमात्रेकणावरमात्रकेण च । प्रतिपक्षसन्निश्रयेणाभोग [5] मात्रकेणा[ऽ] शक्तो[अ]-तिप्रतिविशोद(ध)यितुं । यथा रंजनीये एवं द्वेषणीये, मोहनीये मानस्थानीये, वितर्कस्थानीये वेदितव्यम् । निषण्णस्य चास्य प्रतिसंलयने चित्तं प्रतिदधतस्त्वरित-त्वरितं चित्तं प्रश्रभ्यते ।। कायश्च[।]कायदौष्ठुल्यानि च नात्यर्थं बाधन्ते । न चात्यर्थं निवरणसमुदाचारो भवति । न चात्यर्थमुत्कण्ठा रतिपरितमनास[6]-हगता[:] संज्ञामनसिकाराः समुदाचरन्ति । व्युत्थित-स्यापि मनस[श्] (व्युत्थितमनसोऽपि) चरतः । प्रश्रब्ध-(ब्धि)मात्रा काचिच्चित्ते, काये, (चित्ते[1]) चानुगता भवतीत्येवं भागीयानि [स]मनस्कारस्य [आदिकर्मि-कस्य[2]] लिंगानि निमित्तान्यवदातानि वेदितव्यानि ।।

।। पिण्डोद्दानम् ।।

*उपसंक्रमणं या च हर्षणा पृच्छनैषणा ।*

*विनियोगरक्षोपचयः प्राविवेक्यभवैकता[3] ।।* [7]

*आवरणशुद्धयुत्कृष्टेह मनस्कारस्य भावना ।।*

।। योगाचारभूमौ श्रावकभूमिसंगृहीतायां तृतीयं योगस्थानं समाप्तम् ।।

1. This may be deleted.
2. MS. omits this.
3. MS. photo blurred, letters indistinct.

# चतुर्थं योगस्थानम्

तत्र **लब्धमनस्कारस्य योगिनः।** एवं परीत्तप्रहाणरतिप्रविष्टस्य **तदूर्ध्वं द्वे गती भवतः।** अनन्ये। कतमे द्वे तद्यथा। **लौकिकी च लोकोत्तरा च।**[1]

तत्रायमादिकर्मिको योगा[8]चारः। समनस्कारः। लौकिकया वा गत्या गमिष्यामि। लोकोत्तरया वेति। तमेव मनस्कारं बहुलीकरोति। यथा यथा बहुलीकरोति। तथा तथा सा प्रश्रब्धिश्चित्तैकाग्रता च। तेषां तेषां रात्रिदिवसानामत्ययात्पृथुवृद्धिवैपुल्यतां गच्छति। यदा चास्य दृष्टिस्थिरः खरश्च मनस्कारः संवृत्तो भवति। परिश्र[9]ब्धश्चालम्बनाधिमोक्षः। प्रवर्तते। शमथविपश्यनापक्ष्याच्च निमित्तान्युद्गृहीतानि भवन्ति। तदा स लौकिकेन मार्गेण गन्तुकामस्तत्र च प्रयोग-
13B—3// मारभते लोको//[1]त्तरेण वा मार्गेण [।]

**तत्र कति पुद्गलाः। ये दृष्टे धर्मे लौकिकेनैव**

---

1. On लौकिक and लोकोत्तर मार्ग, see Yogasthāna I, p. 35.

**मार्गेण** **पृ**(ग)**च्छन्ति**। न लोकोत्तरेण। आह। चत्वारस्तद्यथा **सर्व्वं इतो बाह्यकः**। **इह धार्मिको[ऽ]पि मन्दः**। **पूर्व्वंशमथचरितस्तथा भूयो[ऽ]प्यपंरिपक्वकुशलमूलः**। **बोधिसत्त्वस्यायत्यां बोधिमनुप्राप्तुकामः**। **नो तु दृष्ट एव धर्मे** (।) अमी चत्वारः पुद्गला दृष्ट एव [2] धर्मे लौकिकमार्गयानि-(यि)नो भवन्ति।

तच्च लौकिकमार्गगमनं द्विविधं। सक[ल[1]] बन्धनानाश्च **पृथग्जनानां,** विकलबन्धनानां च। **शैक्षाणां**[2]।

तत्पुनः कतमत्। कामानामौदारिकतां पश्यतः, प्रथमे च ध्याने समापत्त्युपपत्तिक्लेशान्ततां पश्यतस्तत्कामवैराग्यगमनमेवं यावत्। आकिञ्चन्यायतनवैराग्यं वेदितव्यम्। [3] तथा असंज्ञिसमापत्तिः।

---

1. On लौकिक and लोकोत्तर मार्ग, see Yogasthāna, I, p. 35 sq.
2. शैक्ष is a pudgala who has yet to learn the Śakṣaṇīya dharmas, such pudgals are eighteen in number, अष्टादश शैक्षाः। स्रोत आपत्तिफलसाक्षात्क्रियायै प्रतिपन्नकः। स्रोतापन्नः। सकृदागामिफलसाक्षात्क्रियायै प्रतिपन्नकः। सकृदागामी। अनागामिफलसाक्षात्क्रियायै प्रतिपन्नकः। अनागामी। अर्हत्त्वफलसाक्षात्क्रियायै प्रतिपन्नकः। श्रद्धानुसारी। धर्मानुसारी। श्रद्धाधिमुक्तः। दृष्टिप्राप्तः। कुलंकुलः। एकवीचिकः। अन्तरापरिनिर्वायी। उपपद्य०। साभिसंस्कार०। अनभिसंस्कार०, ऊर्ध्वस्रोताः। इतीमे गृहपतेऽष्टादश शैक्षाः। AKV, p. 566 sq.; for a description of these Pudgalas, see Yogasthāna, II, p. 172 sq.; Vsm., VIII.93 (p. 148); Adv., pp. 366-67 sq.; Asm., pp. 87-8.; Ada., p. 44, f.n.; see also, SVA, p. 332.

ध्यानसमापत्तिसन्निश्रयेन ष[ड्व[1]]ज्ञानानां पञ्चानामभिनिर्हारः ।

तत्र कामवैराग्याय प्रयुक्तो योगी सप्तभिर्मनस्कारैः । कामवैराग्यमनुप्राप्नोति । कतमे पुनस्ते **सप्त मनस्काराः** । आह । **लक्षणप्रतिसंवेदी, आधिमोक्षिकः, प्राविवेक्यो, रतिसंग्राहकः । मीमान्सा (मांसा) मनस्कारः ।** **प्र**[4]**योगनिष्ठः, प्रयोगनिष्ठाफलश्च ।**

तत्र **लक्षणप्रतिसंवेदी मनस्कारः** कतमः । आह । येन मनस्कारेण कामानामौदारिकलक्षणं प्रतिसंवेदयते । प्रथमे च ध्याने शान्तलक्षणं । कथं च पुनरौदारिकलक्षणं प्रतिसंवेदयति । आह । कामानां षड्वस्तूनि पर्येषमाणः अर्थन्य स्वूलक्षणं (अर्थं, स्वलक्षणं, सामान्यलक्षणं) । [5] पक्षं कालं युक्तिञ्च ।

तत्रौदारिकार्थं तावत्पर्येषते । इतीमे कामाः सादीनवा, बहूपद्रवा, बह्वीतिका, बहूपसर्गा इति । या एषु कामेषु बह्वादीनवता । यावद्बहूपसर्गता । अयमौदारिकार्थः । तत्र वस्तु पर्येषते । अस्त्यध्यात्मं कामेषु काम(च्)छन्द इति ।

तत्र **स्वलक्षणं** [6] **पर्येषते** । अमी **क्लेशकामाः** । अमी **वस्तुकामाः** । ते पुनः सुखस्थानीया, दुःख-

1. Added by a separate hand, indistinct and illegible.

स्थानीया, अदुःखसुखस्थानीयाश्च । सुखस्थानीयाः कामरागाधिष्ठानाः । संज्ञाचित्तविपर्यासाधिष्ठानाः । दुःखस्थानीया[ः] पुनर्द्वेषाधिष्ठानाः क्रोधोपनाहाधिष्ठानाः । अदुःखासुखस्थानीयाः म्रक्षप्रदाशमायाशा[7]ठ्य[ा]ह्रीक्यम (क्या) नपत्राप्याधिष्ठाना दृष्टिविपर्यासाधिष्ठानाश्च । एवममी कामाः प्रदुष्टवेदनानुगताश्च, प्रत्यस्तक्लेशानुगताश्चैवं कामानां स्वलक्षणं पर्येषते ।

तत्र कथं **सामान्य लक्षणं** (।) **पर्येषते ।** सर्व्वे एते कामा जातिदुःखतया, जरादुःखतया [या[1]]वदिच्छाविघातदुःखतया समसममनुबद्धा[8]श्चानुशक्ताश्च । ये [ऽ]पिकामोपभोगिनो महत्यां कामसम्पदि वर्त[न्]ते । ते [ऽ]पि जात्यादिधर्मतया अविनिर्मुक्तास्तावत्कालिकी सा तेषां सम्पत् । एवं सामान्यलक्षणं पर्येषते ।

**कथं पक्षं पर्येषते ।** कृष्णपक्षपतिता एते कामाः । अस्थिकंकालोपमा, मान्सपेश्युपमास्तृणोल्कोपमाः । अंगार[9]कर्षूपमाः । आशीविषोपमाः । स्वप्नोपमाः । याचिकालंकारोपमाः । तृणफलोपमाश्च । पर्येषमाणा अपि सत्वाः(त्त्वाः) कामान् पर्येषणाकृतं (।) दुःखं प्रतिसंवेदयन्ति । आरक्षाकृतं, स्नेहपरिभ्रंश-
13A—4// कृतम(ा)तृप्तिकृत //(।)मस्वातन्त्र्यकृतं, दुश्चरित-

1. A separate hand adds this.

कृतं, च दुःखं प्रतिसंवेदयन्ति । पूर्व्ववदेव तावत्सर्व्वं वेदितव्यं ।

तथा कामान्प्रतिषेवतः । **पंचादीनवा उक्ताः । भगवता अल्पास्वादाः कामाः बहुसु(दुः)खा, बह्वादीनवाः [।] कामान्खलु प्रतिषेवमाणस्य नास्त्यलं ताव(त्) तृप्तिता च पर्याप्तिता वा, अनेन पर्यायेण कामा वि[2]गर्हिता बुद्धैः बुद्धश्रावकैश्च सद्भिः, सम्यग्गतैः, सत्पुरुषैः [।]**

कामान्खलु प्रतिषेवमाणस्य संयोजनान्युपचयं गच्छन्ति । नास्ति चास्य किंचित् पापकमकुशलं कर्माकरणीयं वदामि । इतीमे कामा अतृप्तिक[ा]रका[:]साधारणा, अधर्मविषमचर्याहेतवः । कामतृष्णाविव[3]र्धकाः, सतां विवर्जनीयाः, क्षिप्रम्विषयगामिनः, प्रत्ययाधिपा, प्रमादभूमयो, रिक्ता, अनित्यास्तुच्छा, मृषामोषधर्माणो, मायोपमाः, बाललापनाः । ये च दृष्टधार्मिकाः (।) कामाः, ये च सांपरायिकाः, ये च दिव्याः, ये च मानुष्यकाः । मा[र]मारभ्यैष गोचरो, मारस्यैष निवापो यत्रेमे[ऽने]कविधाः [4] पापका अकुशला धर्मा मानसाः संभवन्ति । यदुताभिध्या, व्यापाद(ा)[:], संरम्भो वा, ये वा पुनरान्तरायिका भवन्त्यार्यश्रावकस्याशिक्षमाणस्यानेकपर्यायेण कृष्णपक्षपतिता एते कामा यद्भूयसा [।] एवम्पक्षं पर्येषते ।

अतीतानागतप्रत्युत्पन्नेष्वध्वसु अनित्यं नित्यकालं-(म)ध्रुवं ध्रुवकालमे [5] ते कामाः । एवं बहूपद्रवाः, बहूपसर्गा, बह्वादीनवा इत्येवं कालम्पर्येषते ।

**कथं युक्तिं पर्येषते ।** महता संरम्भेण, महत्या पर्येष्ट्या, महता परिश्रमेण विविधैर्विचित्रैः शिल्पकर्मस्थानैः कामाः संह्रियन्ते । निर्व्वर्त्यन्ते, उपचीयन्ते [।] ते पुनः सूपचिता अपि, सुनिर्वर्तिता [6] अपि । यावदेष बहिर्धा परिग्रहवस्तुनः माता(तृ)-पितृपुत्रदारदासीदासकर्मकरपौरुषेयमित्रामात्यज्ञातिसा-लोहितानां । अस्य वा पुनः कायस्याध्यात्मिकस्य रूपिण औदारिकस्य च[ा]तुर्महाभूतिकस्यौदनकल्माषोपचितस्य नित्योत्सदनस्नपनपारिमर्दनभेदन(च्)-छेदन [7] विकिरणविध्वंन्स(ध्वंस)न धर्मेण उत्पन्नोत्पन्नदुःखमात्रप्रतीकाराय सम्वर्तन्ते । क्षुद्दुःखप्रतीकाराय भोजनं । शीतोष्णदुःखप्रतीघाताय । ह्रीकोपनप्रतिच्छादनाय (।) च वस्त्रं [।] निद्राक्लमदुःखप्रतीघाताय च शयनासनं । चंक्रमस्थानदुःखप्रतिघाताय च । व्याधिदुःखप्रतिघाताय [8] च (।) ग्लानभैषज्यमिति दुःखप्रतीकारभूता एते कामा इति । नैते रक्तेन परिभोक्तव्याः । न सक्तेन नान्यत्र व्याधिग्रस्तेनैवातुरेण व्याधिमात्रोपशमाय भैषज्यमाप्तागमो[ऽ]प्येषः । तथैते कामाः एवं चैवं

13B—4// चौदारिकाः । //[1] प्रत्यात्ममपि मे ज्ञानदर्शनं

प्रवर्तेत। आनुमानिको[ऽ]प्येष विधिः। प्रकृतिश्चैषा कामानां अनादिकालिका प्रसिद्धधर्मता अचित्त (-चिन्त्य?)धर्मता। सा न चिन्तयितव्या(:)। न विकल्पयते(यितव्ये)त्येवं युक्तिम्पर्येषते।

स एवं कामानामौदारिकलक्षणं प्रतिसंवेज्य यदुत षड्भिर्वस्तुभिः प्रथमे ध्याने शान्तलक्षणं प्रतिसंवेदयति नास्त्येतत्सर्वश औदा[2]रिकत्वं (।) प्रथमे ध्याने यदेतत्कामधाताविन्यनेनौदारिकलक्षणं प्रतिसंवेदयते। प्रथमे च ध्याने शान्तलक्षणमयमुच्यते **लक्षणप्रतिसंवेदी मनस्कारः**। स खल्वे[3]ष मनस्कारः। श्रुतचिन्ताव्यवकीर्णो[ऽ] वेदितव्यः।

स एवं कामान्परिज्ञाय प्रथमं ध्यानं प्रथमं ध्यानं यथावत्पर्येष्टौ(ष्यौ)दारिकशान्तलक्षणेन श्रुतं च चिन्तां च व्यतिक्राम्यैकान्तेन भावनाकारेणैवाधिमुच्यते। तन्निमित्तालम्बनामेव शमथविपश्यनां भावयति। भावयंश्च यथा यथा तामौदारिकशान्ततां पुनः पुनरधिमुच्यतः। इत्य[ु]पपद्यते। [4] **[आ]धिमोक्षिको मनस्कारः**।

त(य)स्यासेवनान्वयाद् भावनान्वयाद्बहुलीकारान्वयात्तत्प्रथमतः क्लेश(:)प्रहाणाय मार्ग उत्पद्यते। क्लेशप्रहाणाय च मार्गे समुत्पन्ने यस्तद्भगवतो मनस्कारः। अयमुच्यते **प्राविवेक्यः**।

स तत्प्रथमतः कामावचरक्लेशादिप्रहेयप्रहाणात्त-

त्पक्ष्ये दौष्ठुल्यापगमाच्च । तदूर्ध्वं प्रहा[5]णारामो भवति । विवेकारामः । तस्मिंश्च प्रहाणानु-शंसदर्शी[ ]परीत्तप्रविवेकप्रीतिसुखसंस्पृष्टः कालेन कालं प्रसदनीयेन मनस्कारेण । संप्रहर्षयति । संवेजनीयेन मनस्कारेण संवेजयति । यावदेव स्त्यानमिद्धौद्धत्यापगमाय (।) अयमुच्यते । **रति-संग्राहको मनस्कारः ।**

तस्य तथा प्रहाणारामस्य [6] भावनारामस्य सम्यक्प्रयुक्तस्य सतः कुशलपक्षप्रयोगोपस्तम्भकामप्रति-संयुक्तं क्लेशकर्मपर्यवस्थानं चरतो वा विहरतो वा न समुदाचरति । तस्यैवं भवति । किं सन्तमेवाहं कामेषु काम (च्) छन्दं प्रतिसम्वेदयाम्याहोस्विद-सन्तम्परिमीमान्सयितुकामः । अन्यतमान्यतमं प्रसद-नीयं शुभनिमित्तं मनसि करो[7]ति । तस्याप्रहीण-त्वात् सर्व्वेण सर्व्वमनुशयस्य तन्निमित्तं मनसि कुर्व्वतः सेवनानिम्नं चित्तं भवति । सेवनाप्रवणं । सेवनाप्राभो(भा)रं नापेक्षापत्तियुतेन निर्विजुगुप्सा-(प्रति)वा निःप्रतिकूलता । तस्यैवं भवति । न मे सम्यग्विरक्तं विमुक्तं चित्तं यदुत कामेभ्यः, संस्कारा-
13A--5// भिनिगृहीतं मे चित्तं वारिवद् धृतं //[।] धर्मताभिनि-गृहीतं (।) य[न्]न्वहं भूयस्या मात्रया तस्यानुशय-स्याशेषप्रहाणाय भूयस्या मात्रया प्रहाणारामो विहरेयं । भावनारामः । अयमुच्ते **मीमान्सामनस्कारः ।**

स भूयस्या मात्रया प्रहाणारामो विहरति। भावनारामः। शमथविपश्यनायुक्तः। पौनःपुन्येन च मीमान्सते। तस्य प्रतिपक्षं च भावयतः [2] कालेन कालं प्रहीणा[ऽ]प्रहीणतां मीमान्समानस्य सर्व्वेभ्यः कामावचरेभ्यः क्लेशेभ्यश्चित्तं विसंयुज्यते। तावत्कालिकयोगेन (।) न त्वत्यन्ताद्बीजसमुद्धातो भवति। तस्मिंश्च समये प्रयोगध्यानप्रयोगमार्गपर्य-वसानगतः। सर्वक्लेशप्रातिपक्षिको मनस्कारः। समुत्पन्नो भवत्ययमुच्यते **प्रयोगनिष्ठो मनस्कारः** (।)

[3] तस्य च समनस्कारप्रत्ययं तद्धेतुकं प्रथमं ध्यानं समापद्यते। मौलप्रथमध्यानसहगतो यो मनस्कारः। अयमुच्यते **प्रयोगनिष्ठाफलो मनस्कारः।**

तत्र प्राविवेक्ये मनस्कारे वर्तमानो, रतिसंग्राहके च विवेकजेन प्रीतिसुखेन कायं प्रतिप्रीणयति। कदाचित् केनचित् प्रतनुकसंमुखीभावयोगेन प्र(া)यो[4]गनिष्ठा-मनस्कारकालस्यारति[:]। कदाचित् कदाचित् ध्यान-विपुलतरसंमुखीभावेन प्रयोगनिष्ठाफले पुनर्मनस्कारे वर्तमानस्य नास्ति किञ्चिदस्या(स्य) भवति। स्मारणीयं सर्वतः कायाद्युत(द्यदुत) विवेकजेन प्रीतिसुखेन स तस्मि(स्मिन्) समये विविक्तैः कामैः विविक्तं पापकैर-कुशलैर्धर्मैः सवितर्कसविचारं विवेकजं [5] प्रीतिसुखं प्रथमं ध्यानं पंचा[ङ्]गमुपसम्पद्य विहरति। कामा-वचरप्रतिपक्षभावनाफले स्थितः कामवैराग्य[ता]-

मनुप्राप्त इत्युच्यते ।

तत्र लक्षणप्रतिसंवेदिना मनस्कारेण [।] यत् प्रहातव्यं तत् सम्यक् प्रजानाति । प्रहातव्यस्य च प्रहाणाय प्राप्तव्यस्य च प्राप्तये चित्तं प्र[6]णिधत्ते । आधिमोक्षिकेण च मनस्कारेण प्रहाणाय प्राप्तये च सम्यक् प्रयोगमारभते । प्राविवेक्यमनस्कारेणाधिमात्रञ्च शां-(तां)जहाति । रतिसंग्राहकेण स क्लेशप्रकारं जहाति । मीमान्सामनस्कारेण प्राप्तिनिरभिमानतायां चित्तमवस्थापयति । प्रयोग[7]निष्ठेन मृदुं क्लेशप्रकारं जहाति । प्रयोगनिष्ठाफलेनैषां क्लेशप्रकाराणां भावितानां सुभावितानां भावनाफलं प्रत्यनुभवति ।

13B—5// अपिच यश्च लक्षणप्रतिसंवेदी मन//[1]स्कारः । यश्चाधिमोक्षिकः । अयमुच्यते आनुलोमिको मनस्कारो[ऽ]पि दूषणाप्रतिपक्षसहगतः । यश्च प्राविवेक्यो मनस्कारः, यश्च प्रयोगनिष्ठो[ऽ]यं प्रातिपक्षिको मनस्कारः । प्रहाण-प्रतिपक्षगवतः(-क्षगतः) [।] तत्र यो रतिसंग्राहको मनस्कारः (।) अयं प्रातिपक्षिकश्च प्रसदनीयश्च [।]

तत्र यो मीमान्सामनस्कारः अयं प्रत्यवे[2]क्षणामनस्कारः । इत्युच्यते । एवं सति षट्सु मनस्कारेषु चत्वारो मनस्काराः प्रविघ्ना वेदितव्याः । तद्यथा आनुलोमिकः । प्रातिपक्षिकः । प्रसदनीयः । प्रत्यवेक्षणीयश्चेति ।

यथा प्रथमध्यानसमापत्तिः सप्तभिर्मनस्कारैरेवं द्वितीयतृतीयचतुर्थध्यानसमापत्तिः[1]। आकाशविज्ञानाकिंचन्यायतननैवसंज्ञानासं[3]ज्ञायतनसमापत्तिः सप्त-

1. cp. D. N., I.175 : सो विविच्चेव कामेहि, विविच्च अकुसलेहि धम्मेहि, सवितक्कं सविचारं विवेकजं पीतिसुखं पठमं झानं उपसम्पज्ज विहरति। सो इममेव कायं विवेकजेन पीतिसुखेन अभिसन्देति परिसन्देति परिपूरेति परिप्फरति, नास्स किञ्चि सब्बावतो कायस्स विवेकजेन पीतिसुखेन अप्फुटं होति।····

"पुन चपरं, माणव, वितक्कविचारानं वूपसमा, अज्झत्तं सम्पसादनं चेतसो एकोदिभावं अवितक्कं अविचारं समाधिजं पीतिसुखं दुतियं झानं उपसम्पज्ज विहरति। सो इममेव कायं समाधिजेन पीतिसुखेन अभिसन्देति····परिप्फरति, नास्स किञ्चि सब्बावतो कायस्स समाधिजेन पीतिसुखेन अप्फुटं होति।····

"पुन चपरं, माणव, भिक्खु पीतिया च विरागा उपेक्खको च विहरति सतो सम्पजानो सुखं च कायेन पटिसंवेदेति, यं तं अरिया आचिक्खन्ति 'उपेक्खको सतिमा सुखविहारी' ति ततियं झानं उपसम्पज्ज विहरति। सो इममेव कायं निप्पीतिकेन सुखेन अभिसन्देति····परिप्फरति, नास्स किञ्चि सब्बावतो कायस्स निप्पीतिकेन सुखेन अप्फुटं होति।····

"पुन चपरं, माणव, भिक्खु सुखस्स च पहाना, दुक्खस्स च पहाना, पुब्बेव सोमनस्सदोमनस्सानं अत्यङ्गमा, अदुक्खमसुखं उपेक्खासतिपारिसुद्धिं चतुत्थं झानं उपसम्पज्ज विहरति। सो इममेव कायं परिसुद्धेन चेतसा परियोदातेन फरित्वा निसिन्नो होति, नास्स किञ्चि सब्बावतो कायस्स परिसुद्धेन चेतसा परियोदातेन अप्फुटं होति।; for references, see PTSD, fas. IV, p. 120; also see, fas. VIII, pp. 144-5 (Samādhi); PED, pp. 169-70; AK, VIII.6-10; the dhyānas are known in the Buddhist Sanskrit works as लौकिकमार्ग, see Asm., p. 68; AK, VIII. 6-b; Ada., p. 94 sq.; AVS, (MSS, I.317); cp. Mn., p. 23 : कतमो चित्तविवेको? पठमं झानं समापन्नस्स नीवरणेहि चित्तं विवित्तं होति। ततियं झानं समापन्नस्सपीतिया····चतुत्थं झानं समापन्नस्स सब्बदुक्खेहि चित्तं विवित्तं होति।; see Vbh., pp. 295, 313-4, 318 sq.; SVA, 373-5; AS, p. 134 sq.

भिरेव मनस्कारैः । तत्र येन वितर्केष्वौदारिकलक्षणं प्रतिसम्वेदयते । अवितर्कश्च द्वितीयध्याने शान्तलक्षणं स लक्षणप्रतिसंवेदी मनस्कारः । द्वितीयध्यानसमापत्तये [।] तत्र ध्यानसमापन्नः । प्रथमध्यानलाभी वितर्केष्वौदारिकताम्पश्यति । यः समाहितभूमिको[ऽ]प्युग्रालम्बनभारी [4] तत्प्रथमोपनिपातितया चालम्बने औदारिको मनोजल्पः । अयम्वितर्कस्तदनुबन्धानुचारी व्यग्रचार्येवालम्बने सूक्ष्मतरो मनोजल्पः विहारः । एते पुनर्वितर्कविहा(चा)राश्चैतसिकाश्चेतस्युत्पद्यमाना उत्पद्यन्ते । सहभुवः संप्रयुक्ता[ः] । एकालम्बनवृत्तयः । एवमेते अध्यात्ममुत्पद्यन्ते ।

बाह्यायतनसंगृहीताश्च । [5] सर्वं एव चातीता, अनागतप्रत्युत्पन्ना, हेतुसमुत्पन्नाः, प्रतीत्यसमुत्पन्नाः, आकायिकास्तावत्कलिकाः । इत्वरप्रत्युपस्थायिनश्चित्तसंक्षोभकरा, इंजका अप्रशान्ताकारेण वर्तन्ते । उपरिमां भूमिमारभ्य दुःखविहारानुगतत्वात्कृष्णपक्ष्या कामविवेकप्रीतिसुखमेवानुशंसानुगता भूमिश्चैषा तादृशी प्र[6]कृतया यत्र स्थितस्य नित्यं नित्यकालं, ध्रुवं ध्रुवकालं, सवितर्कः, सविचारः, चित्तप्रचारः प्रवर्तते । न शान्तप्रशान्त इत्येवमादिभिराकारैर्वितर्केष्वौदारिकलक्षणं प्रतिसंवेदयते ।[1]

1. cp. Ada., p. 94; VIII.2; Asm., pp. 68-9.

सर्वशो नास्त्येतदौदारिकलक्षणमवितर्के[7]द्वितीये
ध्याने इत्यत: शान्तं द्वितीयं ध्यानमस्यौदारिकत्वस्याप-
गमात् ।[1] शेषो(षे) मनस्कारा द्वितीयध्यानसमा-
13A—6// पत्तये यथा(पि)यो//[1]गं पूर्व्ववद्वेदितव्यं । एवं
भूमौ भूमौ यावन्नैवसंज्ञानासंज्ञायतनसमापत्तये यथा-
योगं सप्त मनस्कारा वेदितव्या: ।[2]

**औदारिकलक्षणं** पुन: सर्व्वास्वधरिमासु भूमिषु यावदाकिंचन्यायतनात् समासेन द्विविधं वेदितव्यं । दु:खतरं विहावितो(रिता) चाधर्मू(धोभू)मीनामप्रशान्तविहारिता च । अल्पायुष्कतरा च । इत्येतद् द्विविधमौदारिक[2]लक्षणं । षड्भिर्वस्तुभिर्यथायोगं पर्येषते । यस्या यस्या भूमेर्वैराग्यं कर्त्तुकामो भवत्युपरिष्टाच्च यथायोगं शान्तलक्षणं । यावत्प्रयोगनिष्ठाफलान्मनस्कारात्तत्र विविक्तं कामैरिति ।

**द्विविधा: कामा: क्लेशकामा वस्तुकामाश्च**[।][3]

---

1. cp. क्षपयित्वा वितर्कविचारमलं क्षपयित्वा पुण्यवासनां स एष मार्गो द्वितीयध्यानोन्मुख: । Ada., p. 95.
2. सप्तभिर्मनस्कारै: प्रथमं ध्यानं समापद्यते । यावन्नैवसंज्ञा नासंज्ञायतनं च । सप्त मनस्कारा: कत्तमे । लक्षणप्रतिसंवेदी मनस्कार: आधिमोक्षिक: प्राविवे(क्य)ज: रतिसंग्राहक: मीमांसक: प्रयोगनिष्ठ: प्रयोगनिष्ठाफलश्च मनस्कार: ॥ Asm., pp. 68-9.
3. cp. K. N., vol. IV, pt. I (Mahāniddesa), p. 3 : उद्दानतो द्वे कामा—वत्थुकामा किलेसकामा च ।; for elaboration, see, pp. 3-5 : सब्बेपि कामावचरा····रूपावचरा····अरूपावचरा धम्मा तण्हावत्थुका तण्हारम्मणा कामनीयट्ठेन रंजनीयट्ठेन मदनीयट्ठेन कामा— इमे वुच्चन्ति

(contd. on p. 450)

कामवितर्को[ऽ]पि द्विविधः । संप्रयोगविवेक आलम्बनविवेकश्च [।] विविक्तं [3] पापकैरकुशलैर्धर्मैरिति । उपक्लेशाः कामहेतुका अकुशला धर्मास्तद्यथा कायदुश्चरितं, वाग्दुश्चरितं, मनोदुश्चरितं । दण्डादानं शस्त्रादानं । कलहभण्डनविग्रहविवादशाठ्यवञ्चननिकृतिमृषावादाः सम्भवन्ति । तेषाम्प्रहाणाद्विविक्तं पापकैरकुशलैर्धर्मैरवितर्कविचारेष्वदोषदर्शनात्स्वभूमि[4]कैर्वितर्कविचारैः कामप्र[ा]तिपक्षिकैः कुशलैः [।] सवितर्कं सविचारं प्रयोगनिष्ठो मनस्कारः कामविवेकं(कः) तस्यानन्तरमुत्पन्नं(न्नः) । तद्धेतुकं(कस्) तत्प्रत्ययं(यस्) तेनाह विवेकजमीप्सिताभिलषितार्थसंप्राप्तः, प्रीतौ वा दोषदर्शनात् । सर्वदौष्ठुल्यापगमाच्च विपुलप्रश्रब्धि चित्तकायकर्मण्यतया प्रीतिसुखमनुपू[5]र्व्वेण गणयतः । तत्प्रथमतश्च कामधातूच्च(f)लतात् प्रथमं सम्यगालम्बनोपनिध्यानादेकाग्रस्मृत्युपनिबन्धाद्ध्यानं प्रयोगनिष्ठाफलत्वादुपसम्पद्य । उत्तरत्र च भावनाबहुलीकारनिष्पा-

---

*(contd. from p. 449)*

वत्थुकामा ।······छन्दोकामो रागो॰ छन्दरागो॰ सङ्कप्पो॰ रागो॰ सङ्कप्परागो॰ यो कामेसु कामच्छन्दो कामरोगो कामनन्दी कामतण्हा कामस्नेहो कामपरिळाहो काममुच्छा कामज्झोसानं कामोघो कामयोगो कामुपादानं कामच्छन्दनीवरणं ।

अद्दसं काम ते मूलं, सङ्कप्पा काम जायसि ।
न तं सङ्कप्पयिस्सामि, एवं काम न होहिसी ति ॥

इमे वुच्चन्ति किलेसकामा ।····

दनात् [।] निकामलाभी, अकृच्छ्रलाभी, अकिसर-(अकृत्स्न?)लाभी, तथा ध्यानसमापत्त्या रात्रिमतिना-मयति। दिवसमपि या[6]वदाकांक्षमाण: सप्तरा त्रिदिवसानि तेनाह विहरतीति। सवितर्कसविचार-विविक्तेभ्यश्चित्तम्व्यावर्तयित्वा (त्तं व्यावर्त्य) अवि-तर्का[ऽ]विचारसमाधिनिमित्तेषूपनिबध्नाति। व्यग्र-चारिण आलम्बनाद्विवेच्य अव्यग्रचारिण्यालम्बने एकधर्मतया शान्तं प्रसन्नं चित्तं प्रवर्त्तते। व्यवस्था-[7]पयति। तेनाह वितर्कविचाराणां व्युपशमाद-ध्यात्मसंप्रसादनात्सभावनाभ्यासात्तस्यैवा[ऽ]वितर्का[ऽ] विचारस्य समाधे:, वितर्कविचारस्य समाधे:, स[च्]-
13B—6// छिद्रसान्तर[ा]मवस्थामतिक्रम्य निश्छिद्रनिरन्तरा//[1]-मवस्थां प्राप्नोति। तेनाह चेतस एकोतीभावात् सर्व्वेण सर्व्वं वितर्कविचारप्रहाणादवितर्कमविचारं प्रयोगनिष्ठो मनस्कार: समाधिस्तस्यानन्तरं तद्धेतुकं तंत्प्र(कस्तत्प्र)-त्ययमुत्प(यउत्प)द्यत इति। तेनाह समाधिजं ईप्सिता[ऽ]निन्दितार्थप्राप्ते: प्रीतौ वा दोषदर्शनात्। स संप्रहर्षगतं दौर्मनस्यगतं वितर्कविचार[2]प्रथम-ध्यानक्लेशपक्षसर्वदौष्ठुल्यापगमात्तत्प्रातिपक्षिकप्रश्रब्धि-चित्तकायकर्मण्यतासुखानुगत्वात्। प्रीतिसुखमनु-पूर्व्वेण गणयतो द्वितीयं भवत्येवं सर्व्वं पूर्व्ववद् वेदितव्यम्।

प्रीतिनिमित्तेषु दोषं पश्यति। तेनाह प्रीतेर्वि-

रागात् [।] तस्मिंश्च समये द्विविधो[ऽ]स्य चित्तक्षोभकरः अपक्षालो[1][ऽ]धि[3]गतो भवति। निःप्रीतिके तृतीयध्याने चित्तं प्रदधतः। द्वितीये च ध्याने वितर्कविचाराः, एतर्हि च प्रीतिः, तेनाह उपेक्षको विहरति। एतौ हि द्वौ धर्मौ चित्तसंक्षोभकरौ। निरन्तराया उपेक्षाया विघ्नकारकौ। तत्र प्रथमे ध्याने वितर्कविचारा भवन्ति। येन निरन्तरोपेक्षा न प्रवर्त्तते। द्वितीये ध्याने [4] प्रीतिर्भवति। येनात्रापि निरन्तरोपेक्षा न प्रवर्त्तते। तेनायं ध्यायी प्रथमद्वितीयेषु(ययोः) ध्यानेषु(नयोः) नास्ति, तेन तृतीये ध्याने उपेक्षको विहरतीत्युच्यते। स उपेक्षकस्सन्स्तथा(स्संस्तथा)तथोपस्थितस्मृतिर्विहरति। यथा यथा ते प्रीतिसहगताः संज्ञामनसिकाराः समुदाचरन्ति। स चेत्पुनरभावितत्वात् तृतीयस्य ध्यान[5]स्य स्मृतिसंप्रमोषात्कदाचित्क[र्हि]र्हिचित् चित्ते प्रीतिसहगताः संज्ञामनसिकाराः समुदाचरन्ति।[2] तां(तान्) लघु

---

1. The literal meaning of अपक्षाल is प्रतिद्वन्द्विन् or the hindering force in acquisition of the last stage of samādhi, see, RAK, VIII.11, p. 224 अपक्षालः कण्टकः, see also III.102, p. 84; these are eight in number वितर्कविचाराश्वासप्रश्वासौ सुखदुःखसौमनस्यदौर्मनस्यानीत्यष्टावपक्षालाः, Adv., p. 410; AK, VIII.11; see also, III.101-2, AKV, III, p. 109.
2. पश्यन् प्रीतिमकुशलां निष्प्रीतिकं सुखं साक्षात्कुर्वन् ध्यायति। स्थापयित्वा अन्याङ्गान्यत्र सुखमुपेक्षा स्मृतिः संप्रज्ञानं समाधिश्चेति पंचांगानि भवन्ति यथोक्तपूर्वाणि। इति तृतीयं ध्यानम्॥ Ada., loc. cit.

लघ्वेव प्रज्ञया प्रतिविध्यति। सम्यगेव प्रजानाति। उत्पन्नोत्पन्नांश्च नाधिवासयति। प्रजहाति विनोदयति। व्यन्तीकरोति, चित्तमध्युपेक्षते। तेनाह स्मृतः संप्रजान[ान]इति। तस्य तस्मिन्समये ए[6]-वमुपेक्षकस्य विहरता स्मृतस्य संप्रजन्य[1]स्यासेवनान्वयाद्बहुलीकारान्वयात्प्रीतिसहगतं प्रहीयते। तच्चित्तौद्धत्यकरं, निःप्रीतिकं, शान्तं, प्रशान्तं चेतसि वेदितमुत्पद्यते। प्रीतिप्रातिद्वन्द्वयेन तस्मिन् समये
13A—7// रूपकायेन, मनःकायेन वेदित //[1] सुखं च प्रश्रब्धिसुखं प्रतिसम्वेदयते। तृतीयाच्च ध्यानात्। अधस्तद्रूपं सुखं नास्ति नापि निरन्तरा उपेक्षा तृतीया[द्]ध्यानादूर्ध्वं यदप्युपेक्षोपलभ्यते। न तु सुखं। तत्राधः सुखोपेक्षाभावादूर्ध्वं च सुखाभावात्। इदं तदायतनं यदुत तृतीयं ध्यानं यत्तदार्या [2] आचक्षते। यत्प्रतिलम्भविहारिणं पुद्गलमधिकृत्य स्मृतिमां(मान्) सुखविहारी तृतीयं ध्यानमुपसंपद्य विहरतीति आर्याः पुनः वृद्धाश्च वृद्धश्रावकाश्च।

तत्रातुल्यजातीयत्वात्। प्रतिपक्षस्य सुखस्य प्रहाणप्रतिपक्षानाख्यातः(क्षोऽनाख्यातः)। यदेव तत्प्रतिपक्षकृतं सुखप्रहाणं त[3]देवाख्यातं। कः पुनरसौ प्रतिपक्षः। यदुतोपेक्षा स्मृतिसम्प्रजन्यञ्च। तस्य च निषेवणाभ्यासात्तृतीयध्यानाच्चलितो यत्र

1. This might be emended as संप्रजानानस्य.

तृतीयध्यानभूमिसुखं तत्प्रजहाति । तेनाह । सुखस्य च प्रहाणात्पूर्व्वमेव च सौमनस्यदौर्मनस्ययोरस्त(ङ्)-गमात् । तत्र चतुर्थध्यानसमापत्तिकाले तस्मिन् [4] समये स ध्यायी सुखदुःखव्यतिक्रममनुप्राप्नोति । तेन यश(च्)च पूर्वप्रहीणं, यश्चै(च्चै)तर्हि प्रहीयते । तस्य संकलनं कुर्व्वन्नेवमाह । सुखस्य च प्रहाणात्-(द्), दुःखस्य च प्रहाणात्, पूर्व्वमेव च सौमनस्य-दौर्मनस्ययोरस्त[ङ्]गमात् । तत्र चतुर्थध्यानसमा-पत्तिकाले सुखस्य च प्रहाणाद्द्वितीयध्यानस[5]मापत्ति-काले दुःखस्य, तृतीयध्यानसमापत्तिकाले सौमनस्यस्या-[ऽ]स्तङ्गमात्, प्रथमध्यानसमापत्तिकाले दौर्मनस्यस्य, अस्ति तावत्सुखदुःखस्य(योः) प्रहाणाददुःखासुखैवास्य वेदना, न विशिष्टा भवति । तेनाह । अदुःखासुखा तस्मिन् समये प्रथमं ध्यानमुपादाय सर्व्वे अधोभू[6]-मिकाः अपक्षालाः प्रहीणा भवन्ति । तद्यथा वितर्क-विचाराः, प्रीतिराश्वासप्रश्वासाः । तेषां च प्रहाणाद्या तत्रोपेक्षा । स्मृतिश्च सा परिशुद्ध[ा] भवति । पर्यवदाता, येनास्य एतच्चित्तं चतुर्थध्यान-समापन्नस्यानिज्यं सन्तिष्ठते । सर्व्वेञ्जितायतनं ।[1]

---

1. त्रीणि खल्वपि ध्यानानि सेञ्जितान्युक्तानि भगवता वितर्काद्यपक्षालयोगात् । वितर्कविचाराश्वासप्रश्वासौ सुखदुःखसौमनस्यदौर्मनस्यानीत्यष्टावपक्षालाः । तैश्चतुर्थं ध्यानमकम्प्यमित्युक्तमभिधर्मे । वितर्कविचारप्रीतिसुखैरकम्पनीयत्वा-दानेञ्जयं चतुर्थमुक्तं सूत्रे । आभिप्रायिकः सूत्रनिर्देशो लाक्षणिकस्त्वभिधर्मे ।
*(contd. on p. 455)*

13B—7// तेनाह । उपेक्षास्मृतिपरिशुद्धमिति [।] //[1] तत्र चतुर्थमिति पूर्ववद् वेदितव्यम् ।। यथाप्रमाणादिषु स्थानेषु ।।

तत्राकाशाधिमोक्षस्य वर्णसंज्ञा नीलपीतलोहितावदातादिप्रतिसंयुक्तामसातामसातया निर्विरागतया च समतिक्रान्तो भवति । तेनाह ।[1] रूप-

---

(contd. from p. 454)

····अभिधर्मे वितर्कविचारप्रीतिसुखान्येवेञ्जितम् ।। Adv., p. 410, see Vs. 548; cp. AK, VIII.11 : अष्टापक्षालमुक्तत्वादानिञ्जं तु चतुर्थकम् ।; AKV, p. 677.

1. cp. D. N., I.153 sq. : पुन चपरं, पोट्ठपाद, भिक्खु सब्बसो रूपसञ्ञानं समतिक्कमा पटिघसञ्ञानं अत्थङ्गमा नानत्तसञ्ञानं अमनसिकारा 'अनन्तो आकासो' ति आकासानञ्चायतनं उपसम्पज्ज विहरति । तस्स या पुरिमा रूपसञ्ञा सा निरुज्झति । आकासानञ्चायतनसुखुमसच्चसञ्ञी येव तस्मिं समये होति ।···· आकासानञ्चायतनं समतिक्कम्म अनन्तं, ति विञ्ञाणं विञ्ञाणानञ्चायतनं उपसम्पज्ज विहरति । तस्स या पुरिमा आकासानञ्चायतनसुखुमसच्चसञ्ञा सा निरुज्झति । विञ्ञाणानञ्चायतनसुखुमसच्चसञ्ञा तस्मिंसमये होति । विञ्ञाणानञ्चायतनसुखुमसच्चसञ्ञी येव तस्मिं समये होति ।····सब्बसो विञ्ञाणानञ्चायतनं समतिकम्म 'नत्थि किञ्ची' ति आकिञ्चायतनं उपसम्पज्ज विहरति ।····आकिञ्चञ्ञायतनसुखुमसच्चसञ्ञी येव तस्मिं समये होति । ····; cp. Vbh., p. 295 : सब्बसो आकिञ्चायतनं समतिक्कम्म नेव सञ्ञानासञ्ञायतनं उपसम्पज्ज विहरति,····see also, pp. 315-6; Vsm., X; AK, VIII.2-4; Ada., XII.8 (p. 96); Adv., pp. 412-5, Vs. 551-4 :

खनिमित्तोद्ग्रहाकृष्टः प्रोक्तानन्तमनस्कृतिः ।
विसर्वरूप आरूप्य आकाशानन्त्यसंज्ञकः ।
तद्वच्चित्तविभुत्वेक्षी विज्ञानानन्त्यलक्षणः ।
विज्ञानानन्त्यद्वेषी च आकिञ्चन्याह्वयः पुनः ।

(contd. on p. 456)

संज्ञानां समतिक्रमादनाभासगमनहेतोर्या अनेकविधा [2] बहुनानाप्रकारा वर्ण्णप्रचयहेतुका[ः] आवरणसंज्ञा सा (या) सा विगता भवति। तेनाह। प्रतिघसंज्ञानामस्त[ङ्]गमात्, तासाम्वा पुनर्विगमहेतोर्या औपचयिकीसंज्ञास्तेष्ववशिष्टेषु विशिष्टेषु संघातेषु प्रवृत्तास्तद्यथा भोजनपानवस्त्रालंकारगृहोद्यानवनसेनापर्व्वतादिसंज्ञा[ः]। ते[3]षु सर्व्वेण सर्व्वमाभोगो[ऽ]प्यस्य न प्रवर्तते। तेनाह। नानात्वसंज्ञानाममनसिकारात्। स एवं रूपप्रतिघनानात्वसंज्ञा भावयित्वा अनन्ताकारेणा[ऽऽ]काशाधिमुक्तो भवति। तेनाह। अनन्तमाकाशम(शंस) सामन्तकमतिक्रम्य प्रयोगनिष्ठान्मनसिकारादुच्चप्रयोगनिष्ठाफलं मौलं समापद्यते। तेनाह। आकाशानन्त्या[4]यतनमुपसम्पद्य विहरति। तस्य यावन्मौलं न समापद्यते। तस्याकाशमालम्बनं समापन्नस्य पुनस्तच्च तदन्ये च स्कन्धाः स्वभूमिकाः सामन्तके पुनरधोभूमिका अपि स्कन्धाः।[1]

---

*(contd. from p. 455)*

तद्वित्तूच्छेदशङ्की च न संज्ञासंज्ञसंज्ञकः।
आदौ तथा प्रयुक्तत्वात्तत्संज्ञा व्यपदिश्यते॥; cp. Asm., p. 68 : प्रतिपक्षाङ्गमुपादाय अनुशंसाङ्गमुपादाय तदुभयाश्रयस्वभावाङ्गं चोपादाय आरूप्येष्वङ्गव्यवस्थानं नास्ति। शमथैकरसतामुपादाय।; see also p. 69.

1. cp. AK, VIII.21-2 (with Bhāṣya); AKV, pp. 681-2; Adv., Vs. 554.

समयेन विज्ञानेनानन्तमाकाशमधिमुच्यते । तदेव विज्ञानमनन्ताकारा[ऽऽ]काशाधिमोक्षिकं । विज्ञानानन्त्यायतनं समापत्तुकामः । आ[5]काशानन्त्यायतनसंज्ञां व्यावर्त्य[ ं ] । तदेव विज्ञानमनन्ताकारेणाधिमुच्यते । ससामन्तके मौलमाकाशानन्त्यायतनं समतिक्रम्यते । तेनाह । सर्वश आकाशानन्त्यायतनं समतिक्रम्यानन्तं विज्ञानमिति । स विज्ञानानन्त्यायतनमिति सामन्तकं समतिक्रम्य यावत्प्रयोगनिष्ठान्मनसिकरान्मौलप्रयोगनिष्ठाफ[6]लं समापद्यते । तेनाह । विज्ञानानन्त्यायतनमुपसम्पद्य विहरतीति ॥

स विज्ञानानन्त्यायतनादुच्चलितो विज्ञानात् परेणा[ऽऽ]लम्बनं समन्वेषमाणो न पुनर्लभते (।) किञ्चन प्रतिसंयुक्तं रूपि वा, अरूपि वा [।] स तदालम्बनमलभमानः ससामान्तकमौलं विज्ञानानन्त्याय-
13A—8// तनं [स[1]]मतिक्रम्य नास्ति किञ्चिदन्यदा//[1]लम्बनमधिमुच्यते । सो[अ]किञ्चनसंज्ञाधिमुक्त एव भवति । स तस्य संज्ञाधिमोक्षस्य बहुलीकारान्वयादाकिंचन्यायतनसामन्तकं समतिक्रम्य यावत्प्रयोगनिष्ठा(न्)मनसिकारान्मौलं प्रयोगनिष्ठाफले समापद्यते । तेनाह । सर्वशो विज्ञानानन्त्यायतनं समतिक्रम्य नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसंस्पृश्य (-सम्पद्य)[2]विहरतीति ।

1. A separate hand adds this.

तेनाह । संज्ञी यदुत [1SS] किञ्चन्यायतनादुच्चलितः । आकिञ्चन्यसंज्ञायामौदारिकसंज्ञी आदीनवसंज्ञी आकिञ्चन्यायतनसंज्ञां व्यावर्त्तयति । तेन पूर्वमाकिञ्चन्यायतनसमापत्तिकाले [अ]किञ्चनसंज्ञासमतिक्रान्ता, एतर्ह्यकिंचनसंज्ञा समतिक्रान्ता भवति । तेनाह संज्ञी यदुत किञ्चनसंज्ञाया वा, अकिञ्चन[3]-संज्ञाया वा, अकिञ्चनसंज्ञा वा, न च पुनः सर्व्वेण सर्व्वं सास्य संज्ञा निरुद्धा भवति । तद्यथा आसंज्ञि[के]-वा, निरोधसमापत्तौ वा, नान्यत्र सूक्ष्मा सा संज्ञा निमित्तालम्बने प्रवर्तते । नैव संज्ञा नासंज्ञा [।] एवं तदायतनाधिमुक्तः ससामन्तकमौलमाकिञ्चन्यायतनं समतिक्रम्य नैव संज्ञानासंज्ञायतनसामन्तकस्य या-[4]वत्प्रयोगनिष्ठान्मनसिकारात् प्रयोगनिष्ठाफलं मौलं समापद्यते । तेनाह । सर्वश आकिञ्चन्यायतन[ ] समतिक्रम्य नैव संज्ञानासंज्ञायतनमुपसम्पद्य विहरतीति ॥

तत्र ध्यानसमापत्तिकाले अधो रसातलप्रवेशवत् । कायसंप्रख्यानलिंगं । आरूप्यसमापत्तिकाले आकाशात्पतनवत् । तत्र शम[5]थ(r[1])कालेनाध्युपेक्षणात्सम्यक्प्रयोगः । **तत्र द्वे अचित्तिके समापत्ती[2] असंज्ञा-**

---

1. (r) may be dropped.

2. समापत्तिः शुभैकाग्र्यम् सानुगा स्कन्धपञ्चकम् ॥, AK, VIII.1; see RAK, p. 221 sq.; cp. Y. S., I.41 : क्षीणवृत्तेरभिजातस्येव तत्स्थतदञ्जनता समापत्तिः, see Y. B., p. 39 sq.; for different

*(contd. on p. 459)*

(ज्ञि) **समापत्तिर्निरोधसमापत्तिश्च।** **तत्रासंज्ञासमापत्ति**[1][।] संज्ञाविमुखेन मनस्कारेण पृथग्जन एव समापद्यते, निरोधसमापत्ति[2] पुनरार्य एव।

तत्र द्वाभ्यां मनस्काराभ्यामनयोः समापत्त्योः समापत्तिप्रवेशो भवति। तद्यथा सं[6]ज्ञाविमुखेन मनस्कारेणासंज्ञा (ज्ञि) समापत्तेः, नैवसंज्ञानासंज्ञोच्चलितेनालम्बनसन्निरुद्धेन च मनस्कारेण निरोधसमापत्तेः [।]

---

*(contd. from p. 458)*

kinds of Samāpatti, see Psm., pp. 103-6; Y. S. with Bhāṣya, I.42-6.

1. see Asm., p. 10 : **असंज्ञिसमापत्तिः कतमा।** कृत्स्नवीतरागस्योपर्यवीतरागस्य निस्सरणसंज्ञापूर्वकेण मनसिकारेणास्थावराणां चित्तचैतसिकानां धर्माणां निरोधे असंज्ञिसमापत्तिरिति प्रज्ञप्तिः; cp. Adv., p. 92 : शुभासंज्ञिसमापत्तिर्ध्यानेऽन्त्ये चित्तरोधिनी। निःसृतीच्छाप्रवृत्तित्वात् नार्यस्य आप्या प्रयोगतः। (V. S. 135); cp. AK, II.42; KVA, XV.7-10; Ada., p. 130 : जन्ममरणनिर्व्विण्णस्य निर्वाणसंज्ञस्य चतुर्थध्यानबले भूयोऽल्पशश्चित्तचैतसिकधर्मनिरोध उच्यते **आसंज्ञिकसमापत्तिः।**

2. Asm., pp. 10-1 : **निरोधसमापत्तिः कतमा।** आकिञ्चन्यायतनवीतरागस्य भवाग्रादुच्चलितस्य शान्तविहारसंज्ञापूर्वकेण मनसिकारेणास्थावराणां चित्तचैतसिकानां धर्माणां निरोधे निरोधसमापत्तिरिति प्रज्ञप्तिः।; cp. Ada., op. cit. : प्रयत्नखेदपरिनिर्व्विण्णस्य विरामसंज्ञस्य नैवसंज्ञानासंज्ञायतनसमापत्तिबले भूयोऽल्पशश्चित्तचैतसिकधर्मनिरोधः उच्यते **निरोधसमापत्तिः**; cp. Adv., Vs. 136, p. 93 :

निरोधाख्या तु विज्ञेया विजिहीर्षोर्भवाग्रजा।
शुभार्यस्य प्रयोगाप्या द्विवेद्याऽनियता मता॥

AK, II.43; Vsm., XIII.18 : तत्थ का निरोधसमापत्ती ति? या अनुपुब्बनिरोधेन चित्तचेतसिकानं धम्मानं अप्पवत्ति।; see also, XXIII. 16-7, 19-52.

तत्र संज्ञारोगः, संज्ञागण्डः, संज्ञाशल्यः(मं), एतच्छान्तमेतत्प्रणीतं यदुतासंज्ञिकमिति। संज्ञाविमुखं मनस्कारं परिगृह्योत्पन्नोत्पन्ना[7]मसंज्ञास्मृत्यमनसिकारानु-(रमनु)चरेति(रति) [।] तस्य भावनान्वयात्प्रयोगमार्गे सचित्तिकावस्था भवति। समनस्कारसमापन्नस्य च पुनश्चित्तं न प्रवर्तत इति। स एवं निःसरणसंज्ञापूर्व्वकेण मनस्कारेण शुभकृत्यवीतरागस्य, बृहत्फलेभ्यो वीतरा[8]गस्य, चित्तचैतसिकानां धर्माणां निरोध इयमुच्यते[अ]**संज्ञ(ज्ञि)समापत्तिः।** एवं च पुनरस्याः प्राप्तिर्भवति॥

तत्र नैव संज्ञानासंज्ञायतनलाभी आर्यः परेण शान्तेन विहारेण विहर्त्तुकामः नैव संज्ञानासंज्ञायत-
13B—8// नाच्चित्तमुच्चा//[1]लयति। तच्चित्तमुच्चलितमालम्बनं न लभते। अलभमानं निरुध्यते। न प्रवर्त्तत इति। य एवमाकिञ्चन्यायतनवीतरागस्य शैक्षस्यार्हतो वा विहारसंज्ञापूर्वकेण मनस्कारेण चित्तचैतसिकानां धर्माणां निरोध इयमुच्यते **निरोधसमापत्तिरेवं** च पुनरस्याः प्राप्तिर्भवति॥

तत्र ध्यानसन्निश्रयेण **पंचानामभिज्ञाना[2]मभिनिर्हारो भवति।** कथं च पुनर्भवति। यथापि तद्ध्यायी लाभी भवति। परिशुद्धस्य ध्यानस्य [।] स तत्परिशुद्धं ध्यानं निश्रित्य यो[अ]नेनाभिज्ञाधिपतये-(पतेय[ो]) धर्म[ः]श्रुतो भवत्युद्गृहीतः, पर्यवाप्तः,

यदुत ऋद्धिविषयम्वारभ्य, पूर्व्वेनिवासदिव्यश्रोत्रच्युत्युपपादचेत:पर्यायम्वा[1] तमेव मनसि कुर्वन् समाहितभूमिकेन मनस्का[3]रेणार्थप्रतिसंवेदी च भवति । धर्मप्रतिसंवेदी च । तस्यार्थप्रतिसंवेदिनो धर्म(:)प्रतिसंवेदिनस्तथास्तथा (स्तथा तथा[2]) चित्तान्यभिसंस्कुर्वतो बहुलीकारान्वयाद् भवति । स कालो भवति समयो यदस्य भाज(व)नाफला:(:)पंचाभिज्ञा उत्पद्यन्ते ॥

---

1. These are the six abhijñās for references. See PD, s.v. abhiññā; PTSD, s.v. abhiññā;

ऋद्धि-श्रोत्र-मन-पूर्ववास-च्युत्युपपत्-क्षये ।
ज्ञानसाक्षात्क्रियाऽभिज्ञा षड्विधा.....॥;

see also, Adv., pp. 381, 395; Ada., pp. 92, 101-2; Vsm., I.11, XIII.13-101, XXII.28 sq.; AK, VII.42; Asaṅga does not mention आस्रवक्षयज्ञान as अभिज्ञा, as it forms part of Bodhi, cp. क्षयानुत्पादयोर्ज्ञाने मलानां बोधिरुच्यते, AA., V.18; but in the Bodhi., he enumerates all the six abhijñās, see Bodhi., p. 40; *vide* also, MSA, VII.9; ऋद्धि is समाधि, see Yogasthāna, II, p. 314 sq.; cp. also, D. N., I.178 : सो एवं समाहिते चित्ते परिसुद्धे परियोदाते अनङ्गणे विगतूपक्किलेसे मुदुभूते कम्मनिये ठिते आनेञ्जप्पत्ते इद्धिविधाय चित्तं अभिनीहरति अभिनिन्नामेति । सो अनेकविहितं इद्धिविधं पच्चनुभोति— एको पि हुत्वा बहुधा होति, बहुधा पि हुत्वा एको होति, अविभावं, तिरोभावं, तिरोकुड्डं तिरोपाकारं तिरोपब्बतं आसज्जमानो गच्छति, सेय्यथा पि आकासे, पथविया पि उम्मुज्जनिमुज्जं करोति, सेय्यथापि उदके, उदके पि अभिज्जमाने गच्छति, सेय्यथापि पथवियं, आकासे पि पल्लङ्केन कमति, सेय्यथापि पक्खी सकुणो, इमे पि चन्दिमसुरिये एवं महिद्धिके एवं महानुभावे पाणिना परामसति परिमज्जति, याव ब्रह्मलोका पि कायेन वसं वत्तेति ।.... see also, p. 179; vide also, Vsm., XII (इद्धिविधनिद्देस); for references in Pāli literature see, PTSD, s.v. iddhi.
2. A repetition, may be deleted.

अपि च तस्या(स तथा)र्थं प्रतिसंवेदी[1], धर्मप्रतिसंवेदी सर्वाभिज्ञानिर्हाराय द्वादशसंज्ञा भावयति । [4]- तद्यथा लघु संज्ञा[ं] । मृदुसंज्ञा[ं] । आकाशधातुसंज्ञां । कायचित्तसम[व]धानसंज्ञामधिमुक्तिसंज्ञां, पूर्वानुभूतचर्यानुक्रमानुस्मृतिसंज्ञां नानाप्रकारशब्दसन्निपातनिर्घोषसंज्ञामवदातरूपनिमित्तसंज्ञां, क्लेशकृतरूपविकारसंज्ञा- [म]धिमोक्षसंज्ञामभिभ्वायतनसंज्ञां कृत्स्नायतनसंज्ञाश्च ।

तत्र **लघुसंज्ञायां** लघुक[5]मात्मानमधिमुच्यते । तद्यथा तूलपिन्धुर्व्वा, कर्पासपिन्धुर्व्वा [।] वायुमण्डलके वा स तथा [अ]धिमुच्यमानः तत्र प्रेरयत्याधिमोक्षिकेणैव मनस्कारेण [।] तद्यथा मञ्चात्पीठान्मञ्चे । एवं मञ्चात् तृणसंस्तरकान्मञ्चे । तत्र **मृदुसंज्ञा** । मृदुकं कायमधिमुच्यते । तद्यथा कौशयम्वा,[2] कच्चम्वा,[3] पद्गम्वा,[3] [।] इतीयं मृदुसंज्ञाया[6]लघुसंज्ञाया[:]- पोषिका, अनुग्रा[f]हका [य[4]]या अनुगृह्यमाणा लघुसंज्ञा पृथुवृद्धिवैकल्यतां(विपुलतां) गच्छति । **तत्राकाशधातुसंज्ञा** यया संज्ञया लघुतां च मृदुतां चात्मनो[ऽ]धिमुच्यते । स चेत् क्वचिद् गन्तुकामो भवति । तत्र यदन्तरालं विवन्धचरं रूपिगतं गमनाय तदाकाशमधिमुच्य[7]ते [।] आधिमोक्षिकं(केन) च

1. Wayman reads स तथार्थंप्रतिसंवेदी.
2. The correct reading seems to be (कौशेयंवा).
3. This seems to be a BHS form.
4. Added by a separate hand.

मनस्कारेण । तत्र **चित्तकायसमवधानसंज्ञा** यया चित्तम्वा काये समवदधाति । कायम्वा चित्ते, येनास्य कायो लघुतरश्च भवति, मृदुतरश्च, कर्मण्यतरश्च, प्रभास्वरतरश्च [।] चित्तान्वयश्चित्त प्रतिबन्धश्चित्तं नि[8]श्रित्य वर्त्तते । **तत्राधिमोक्षिकसंज्ञा** यया संज्ञया भू(दू)रमासन्ने[अ]धिमुच्यते, आसन्नं दूरे, अणु स्थूलं, स्थूलमणु, पृथिवी आपः, आपः पृथिवी एवमेकैकेन महाभूतेना[ऽ]न्यो[ऽ]न्यं करणीयं ।
13A—9// विस्तरेण त//[1]थानिर्मितं चाधिमुच्यते, रूपनिर्मितं वा, शब्दनिर्मितं वा[।]

इत्याभिः पञ्चसंज्ञाभिः भावन(ा)या परिनिष्पन्नाभिरनेकविधमृद्धिषयं प्रत्यनुभवत्येको भूत्वा बहुधात्मानमुपदर्शयति । यदुताधिमोक्षिकया **नैर्माणिकया(क्या)संज्ञया**[1] तत्र बहुधा पुनरात्मानमुपदर्शयन्चै(यंश्चै)की भवति । यदुत निर्माणान्तर्धायिकया [2] [अ]धिमुक्तिसंज्ञया तिरःकुड्यं, तिरःप्राकारमसज्ज-

---

1. नैर्माणिकी संज्ञा, cp. D. N., I.178 : सो समाहिते चित्ते···मनोमयं कायं अभिनिम्मानाय चित्तं अभिनीहरति अभिनिन्नामेति । सो इम्महा काया अञ्ञं कायं अभिनिम्मिनाति रूपिं मनोमयं सब्बङ्गपच्चङ्गि अहीनिन्द्रियं; see also Bodhi., p. 44.21, p. 45.10-17; cp. Y. B., I.25, p. 28 : आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच ।; see, Y. S., IV.4; Y. B., IV.6; Tattavavaiśāradī, pp. 158-9; G. N. Kavirāja : Nirmāṇakāya, Saraswati Bhawan Studies, vol. I, pp. 47-58.

मानेन कायेन गच्छति । येन गच्छति । (येन गच्छति[1]) । पृथिव्यामुन्मज्जनिमज्जनं करोति । तद्यथोदके, उदके भिद्यमानेन स्रातसा गच्छति । तद्यथा पृथिव्यामाकाशे पय[ॅ]ङ्कनाक्रामति । तद्यथा पक्षी शकुनि[:], इमौ वा सूर्याचन्द्रमसावेवं महर्धिकौ महानुभा[3]वौ पाणिना आमार्ष्टि । पर[ा]मार्ष्टि । यावद्ब्रह्मलोकात्कायेन वशे वर्त्तयति । लघुमृद्वाकाशधातुचित्तकायसमवधानसंज्ञया परिगृहीतया अधिमुक्तिसंज्ञया सर्वमेतत्करोति । यथायोगम्वेदितव्यं । तत्र द्विविधाब्रह्मलोकस्य कायेन वशे वर्तना, गमनेन च (।) वशे वर्त्तयति । यथैवाधिमुक्त्या वा, ब्रह्मलो[4]कादधश्चर्तुकामता भूतानां तदेकत्यस्य चोपादायरूपस्य [।]

तत्र **पूर्वानुभूतचरितानुक्रमानुस्मृतिसंज्ञा**[2] यया कुमारकभावमुपादाय यत्रास्य स्मृतिः प्रवर्त्तते । न व्याहन्यते । यत्रायं गतो भवति, स्थितो, निषण्णः-

---

1. A repetition, may be deleted.
2. cp. D. N., I.180 : सो एवं समाहिते चित्ते · · · ·आनेञ्जप्पत्ते पुब्बेनिवासानुस्सतिञाणाय चित्तं अभिनीहरति अभिनिन्नामेति । सो अनेकविहितं पुब्बेनिवासं अनुस्सरति सेय्यथीदं— एकं पि जातिं · · · ·जातिसतसहस्सं पि, अनेकेपि संवट्टकप्पे, विवट्टकप्पे, अनेकेपि संवट्टविवट्टकप्पे— 'अमुत्रासिं एवं नामो गोत्तो एवं वण्णो एवमाहारो एवं सुखदुक्खप्पटिसंवेदी एवमायुपरियन्तो, सो ततो चुतो इधूपपन्नों ति । इति साकारं सउद्देसं अनेकविहितं पुब्बे निवासं अनुस्सरति । · · · · ; cp. Bodhi, pp. 46-7; RAK, p. 213; Adv., p. 395, AKB, VII.42; Ada., loc. cit.

(ण्णः), शयितो विस्तरेण सर्व्वां पूर्वानुभूतां चर्यामौदारौदारिकौदारिकतया अनुपरिवाटिक[5]या अव्युत्क्रमन्ति(न्ते)। कया समनुस्मरन्संजानाति। तस्या भावनान्वयाद् भावनाफलमनेकविधं पूर्व्वेनिवासं समनुस्मरति यावत्सन्सा(संसा)रं सोद्देशं विस्तरेण [।] तत्र **नानाप्रकारशब्दसन्निपातनिर्घोषसंज्ञा** [।] यस्मिन् ग्रामे वा, निगमे वा श्रेण्याम्वा, पूगे वा, पर्षदि वा, आयतविशाले वा गृहे, अववरके वा, नानाप्र[6]-कारस्य जनकायस्य सन्निषण्णस्य सन्निपतितस्य यो व्यतिमिश्रो, विचित्रो, निर्घोषो निश्चरित। यः कलकलशब्द इत्युच्यते। महत्या वा नद्या वह[न्]त्या निर्घोषः, तत्र निमित्तमुद्गृह्य या संज्ञाभावना यया समाहितभूमिकेन मनसिकारेणार्या[ऽ]नार्येषु शब्देषु, दिव्यमानुष्यकेषु, दूरान्तिकेष्वाभोगं वारयति। तस्यास्य बहु[7]लीकारान्वयाद् भावनाफलं दिव्यं श्रोत्रं[1] प्रतिलभते। येन दिव्यमानुष्यकां[कान्]शब्दां-(ब्दान्)शृणोति। ये[ऽ]पि दूरे, ये[ऽ]प्यन्तिके [।] **तत्रावभासरूपनिमित्तसंज्ञा** [।] पूर्व्ववदालोकनिमित्त-मुद्गृह्य तदेव निमित्तं मनसि करोति। **इयमव-**
13B—9// **भासरूप**//[1] निमित्तसंज्ञा [।] तस्या भावनान्वयाद्

1. D. N., I.179 : सो एवं समाहिते चित्ते.... दिब्बाय सोतधातुया चित्तं अभिनीहरति अभिनिन्नामेति। सो दिब्बाय सोत धातुया विसुद्धाय अतिक्कन्त-मानुसिकाय उभो सद्दे सुणाति दिब्बे च मानुसे च, ये दूरे सन्तिके च।.... ; see Bodhi, pp. 47-8; Ada., ibid; AKB, ibid.

भावनाफलं **च्युत्युपपादज्ञानं**[1] प्रतिलभते। येन दिव्येन चक्षुषा विशुद्धेन विस्तरेण यावत्कायस्य भेदात्स्वर्गतौ स्वर्गलोके देवेषूपपद्यन्ते(ते)। **तत्र क्लेशकृतरूपविकारसंज्ञा।** यया रक्तद्विष्टमूढानां क्रोधोपनाहप्र-[यु[2]]क्तपरिदाह[ा]ह्रीक्यानपत्राप्यक्लेशोपक्लेशपर्यवनद्धचित्तानां सत्त्वानां [2] रूपावस्थ[ा]मुपलक्षयति। परि[च्]छिनत्ति [।] एवं रूपारक्तस्य रूपावस्था भवति। रूपविकृतिः। तद्यथा उद्धतेन्द्रियता, स्मितमुखता [।] एवं रूपा द्विष्टस्य रूपावस्था भवति। रूपविकृतिः। तद्यथा मुखविवर्णता सगद्गदस्वरता। कृतभृकुटिता। एवंरूपा मूढस्य पर्यवस्था भवति। रूपविकृतिः। तद्यथा मूकता[3]अर्थनिध्यप्तावप्रतिपद्यनता(दनता) प्राकृता[ऽ]प्राकृता वा वाग्व्याहारता [।] इत्येभिराकारैरेवं भागीयैर्याविदाह्रीक्यानपत्राप्यपर्य-

---

1. cp. D. N., I.180 : सो एवं समाहिते चित्ते···· सत्तानं चुतूपपातणाय चित्तं अभिनीहरति।····सो दिब्बेन चक्खुना विसुद्धेन अतिक्कन्तमानुसकेन सत्ते पस्सति चवमाने उप्पज्जमाने हीने पणीते सुवण्णे दुब्बण्णे, सुगते दुग्गते यथाकम्मूपगे सत्ते पजानाति—'इमे वत भोन्तो सत्ता कायदुच्चरितेन समन्नागता वचीदुच्चरितेन ···· मनोदुच्चरितेन···· ते कायस्स भेदा परं मरणा अपायं दुग्गतिं विनिपातं निरयं उपपन्ना····। इमे···· कायसुचरितेन समन्नागता वचीसुचरितेन ···· मनोसुचरितेन, ···· ते कायस्स भेदा परं मरणा सुगतिं सग्गं लोकं उपपन्ना ति।···· इति सत्ते पस्सति चवमाने उप्पज्जमाने····।; see also, Bodhi., pp. 48-9; Adv., ibid; Ada., ibid; AKV and AKB, VII.42.
2. Syllable damaged by pin-hold.

वस्थितस्य या रूपावस्था भवति । रूपविकृतिः । ततो निमित्तमुद्गृह्य मनसि करोति । तद्यथा बहुलीकारान्वयाद् भावनाफलं चेतःपर्यायज्ञानमुत्पद्यते[1] । येन परसत्त्वानां परपुद्गलानां वितर्कितं वि[4]च[ा]रितं मनो मनसा यथाभूतं प्रजानाति ।

तत्र विमोक्षाभिभ्वायतन-कृत्स्नायतनसंज्ञाभावना पूर्व्ववद्वेदितव्या । तद्यथा **समाहितायां भूमौ** । यया भावनया आया[ं]मृद्धिमभिनिर्हरति । वस्तुपरिणामिनी[ं] नैर्माणिकीमाधिमोक्षिकीं । तद्यथा **अरणा प्रणिधिज्ञानं**[2] । **चतस्रः प्रतिसम्विदः**[3] तद्यथा धर्मप्रतिसंविदर्थ[ 5 ]प्रतिसंविन्निरुक्तिप्रतिसम्वित्प्रतिभानप्रतिसम्वित् [।]

---

1. See D. N., I.197-180; Bodhi., p. 49; Ada., ibid; Adv., p. 395; *supra*, pp. 357-8 (Yogasthāna, III).
2. See AK, VII.35; Adv., Vs. 509, p. 392; Bodhi., p. 143; 186-7, Araṇā has been defined as :

   अरणा संवृतिज्ञानं नृजाऽन्त्यध्यानिश्रयात् ।
   आर्यसन्तानिका जाता स्वस्तुकमलेक्षिणी ॥

   cp. AK, VII.36; cp. प्रणिधिज्ञानमप्येवं सर्वधर्मावलम्बि तु ।····
   Adv., Vs. 512; AK, VII.37; see, Aaa., p. 536, Vs. 7-8.
3. चतस्सो पटिसम्भिदा नाम अत्थादिसु पभेदगतानि चत्तारि ञाणानि । वुत्तं हेतं "अत्थे ञाणं अत्थपटिसम्भिदा । धम्मे ञाणं धम्मपटिसम्भिदा । अत्थधम्मनिरुत्ताभिलापे ञाणं निरुत्तिपटिसम्भिदा । ञाणेसु ञाणं पटिभानपटिसम्भिदा । Vbh., p. 350; SVA, pp. 389-98; cp. also, Bodhi., p. 241; Adv., p. 393; AK, VII.37-8; AKB, VII.37-40; Vsm., XIV.21-7; for references, see PTSD, s.v. paṭisaṁbhidā.

तत्रार्यायाश्चानार्याया ऋद्धेरयं विशेषः। आर्यया ऋद्ध्या यद्यदेव वस्तु परिणामयति। यद्यदेव निमित्तं निर्मिणोति[1]। तत्तथैव भवति। नान्यथा। सर्व्वेण तेन कार्यं शक्यते कर्तुम्। अनार्यया न पुनर्न तथैव[2] भवत्यपि तु। मायाकारकस्यैव संदर्शनमात्रकं ख्याति। [6] एवमाभिर्द्वादशभिः संज्ञाभिर्बहुलीकारान्वयाद्यथायोगं स पञ्चानामभिज्ञानामार्याणां च गुणानामपृथग्जनसन्धारणानां यथायोगमभिनिर्हारो वेदितव्यः॥

तत्र प्रथमे ध्याने मृदुमध्याधिमात्रपरिभावितेन यथायोगं ब्रह्मकायिकानां, ब्रह्मपुरोहितानां, महाब्रह्मणां देवानां सभागतायामुपसम्पद्यते [।] [7] द्वितीये ध्याने मृदुमध्याधिमात्रभाविते यथायोगं परीत्तानामाभास्वराणां च देवानां सभागतायामुपसंपद्यते। तृतीये ध्याने मृदुमध्याधिमात्रभाविते यथायोगं परीत्तशुभानां, सप्रमाणशुभानां, शुभकृत्यानां च देवानां सभागतायामुपसंपद्यते। चतुर्थे ध्याने मृदुमध्याधिमात्रभाविते
14A—1// //[1] यथायोगमनभ्रकानां, पुण्यप्रसवानां, बृहत्फलानां च देवानां सभागतायामुपसम्पद्यते। स चेत्पुनरनागामी अनास्रवेण ध्यानेन चतुर्थेन सास्रवं, व्यवकीर्ण्णं

1. Wayman adds यत्र यत्रैवाधिमुच्यते on the basis of the Tib.: gaṅ daṅ gaṅ la mos par mzad pa.

2. Wayman reads तच्चैव.

भावयति । तस्मि (स्मिन्) मृदुमध्याधिमात्राधिमात्रतराधिमात्रतमभाविते यथायोगं पञ्चानां शुद्धावासानां देवानां स(ह) भागतायामुपसम्पद्यते । तद्य[2]था अदहे(हे)ष्वत[ा]पेषु, सुदर्शनेषु, अकनिष्ठेषु [।] आकाशविज्ञानाकिञ्चन्य-नैवसंज्ञानासंज्ञायतने मृदुमध्याधिमात्रभाविते आकाशविज्ञानाकिञ्चन्यनवसंज्ञानासंज्ञायतनोपगानां देवानां सभागतायामुपसम्पद्यते [।] अरूपिणश्च देवास्तस्मात्तेषां स्थानान्तरकृतो भेदो नास्ति, विहारकृतस्तु वि[3]शेषो भवति । असंज्ञिसमापत्त्यां भावितायामसंज्ञिसत्त्वानां देवानां सभागतायामुपसम्पद्यते ।[1]

**तत्र कतमानि वीतरागस्य[2] लिंगानि ।** आह । स्थिरकायकर्मान्तो भवत्यचलेन्द्रियः [।] न चास्येर्यापथ आशु पर्यादीयते । एकेनापीर्यापथेन चिरं कालमतिनामयत्यपरितस्यमानः । न ताशु(सु)ई[4]र्यान्तरं स्पृहयति । मन्दभाणी च भवति, प्रशान्तभाणी च[।]न संगणिकारामो, न संसर्गारामो, धीरा चास्य वाग्(क्) प्रवर्तते । चक्षुषा रूपाणि दृष्ट्वा रूपप्रतिसम्वेदी भवति । न रूपरागप्रतिसम्वेदी । एवं शब्दगन्धरसस्प्रष्टव्यप्रतिसंवेदी भवति । नो तु

---

1. cp. AK, VIII.22-c : महाब्रह्मत्वं तत्फलम्, RAK, p. 229; PED, pp. 169-70, 90.
2. cp. Adv., p. 421 sq.; AK, VII.22-6.

यावत्स्प्रष्टव्यरागप्रतिसंवेदी । विशारदश्च भवति । गम्भीर[5]बुद्धिर्विपुलप्रश्रब्धिचित्तकायोपगूढः ।। अनभिध्यालुरविक्षोभ्यः । क्षमावान्न चास्य कामवितर्कादयः पापकाश्चित्तं क्षोभयन्ति । इत्येवं भागीयानिवीतरागलिंगानि वेदितव्यानीत्ययं तावत् लौकिकमार्गगमनस्य विभागः ।।

**अथ लोकोत्तरेण मार्गेण गन्तुकामो भवति** तस्य चत्वार्यार्यसत्यान्यार[6]भ्य सप्त मनस्कारा अनुपूर्व्वेणोत्पद्यन्ते । लक्षणप्रतिसंवेदी[दि]मनस्कारादयः प्रयोगनिष्ठाफलपर्यवसाना यावदर्हत्त्वप्राप्तेः । तत्र चतुर्णामार्यसत्यानां सोद्देशविभंगानां श्रमणेनोद्गृहीतयोगाचारः । सुभावितमनस्कारो वा, मौलध्यानारूप्यलाभी वा, चतुर्भिराकारैर्दुःखसत्यस्य लक्षणं प्र[7]तिसंवेदयते । तद्यथाऽनित्याकारेण, दुःखाकारेण, अनात्माकारेण च । चतुर्भिराकारैः समुदयसत्यस्य तद्यथा हेतुतः, समुदयतः, प्रभवतः, प्रत्ययतश्च [।] चतुर्भिराकारैर्निरोधसत्यस्य लक्षणं प्रतिसम्वेदयते । तद्यथा निरोधतः, शान्ततः, प्रणीततो, निःसरणतश्च[।]चतुर्भिराकारैर्मार्गसत्यस्य लक्षणं प्रतिसम्वेदयते । तद्यथा मार्गतो, न्यायतः [8]प्रतिपत्तितो, नैर्याणिकतश्च[1] । सो[ऽ]स्य भवति **लक्षणप्रतिसंवेदी मनस्कारः ।।**

1. On the षोडशाकारs, *vide*, Mvy. Sec. Liii.

तत्र दशभिराकारैर्दुःखसत्यं परीक्षमाणश्चतुर आकाराननुप्रविशति । कतमैर्दशभिस्तद्यथा । विपरिणामाकारेण, अविनाशाकारेण, वियोगाकारेण, सन्नि-
14B—1// हिता//[1] [।] कारेण, धर्मताकारेण । संयोजनबन्धनाकारेण, अनिष्टाकारेण, अयोगक्षेमाकारेण, अनुप (कारेण[1]) लम्भाकारेण, अस्वातन्त्र्याकारेण च । एतान्पुनर्दशाकारान् उपपत्तिसाधनयुक्त्या उपपरीक्षते ।

तत्रागमस्तावद्यथोक्तं भगवता सर्वसंस्कारा अनित्याः[2] [।]ते पुनः संस्काराः समासतः सत्त्वलोकश्च भाजनलोकश्च ।। [2] उक्तञ्च भगवता सत्त्वलोकमधिकृत्य, पश्याम्यहं, भिक्षवो, दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण सत्वांश्च्यवमानांश्चोत्पद्यमानां-

1. This may be deleted.

2. cf. सब्बे सङ्खारा अनिच्चा ····M. N., I.280; अनिच्चा····सङ्खारा, अधुवा···· A. N., III.230; cp. p. 236; M. N., II.196; A. N., IV.186; Dh. P., II.5-a; D. N., II.120 :

अनिच्चा वत सङ्खारा, उप्पादव्वयधम्मिनो ।
उप्पज्जित्वा निरुज्झन्तिः तेसं वूपसमो सुखो ।।

see also, p. 121; वयधम्मा सङ्खारा, ibid, p. 94; cp. S. N., I.360,

फेनपिण्डूपमं रूपं, वेदना बुब्बुळूपमा ।
मरीचिकूपमा सञ्ञा, सङ्खारा कदलूपमा ।।
मायोपमञ्च विञ्ञाणं देसितादिच्चबन्धुना । cp. S. N., II.261, 312, 331, 367 etc.; M. N., I.183-4, 236 sq.; K. N., IV, pt. I, pp. 36-7; A. N., IV.186; for Pāli references, see PD, pp. 171-2; see also, BCAP, p. 181; MKV, p. 41, 39; LV, pp. 122-30; LS, pp. 107-9, 142, 145.

**श्च विस्तरेण यावत् कायस्य भेदात्सुगतौ स्वर्गलोके देवेषूपपद्यन्ते**[1] । इत्यनेन तावत्पर्यायेण इत्यनेन तावत्पर्यायेण भगवता चक्षुष्मता प्रत्यक्षदर्शिना सत्त्वलोकस्यानित्यता व्याख्याता । **उक्तंच**[3][2]**भगवता**[3], **भवति, भिक्षवः, स समयो यद्दीर्घस्याध्वनो**[ऽ]**त्ययादनुपूर्व्वेण यावत्सप्तानां सूर्याणां लोके प्रादुर्भावो भवति।**

---

1. cp. D. N., I.180.
2. cp. सत्तसुरियसुत्त, A. N., III.230-4 : 'होति खो सो, भिक्खवे, समयो यं कदाचि करहचि दीघस्स अद्धुनो अच्चयेन बहूनि···· वस्ससतसहस्सानि देवो न वस्सति।····ओसधितिणवनप्पतयो····न भवन्ति।····होति खो सो, भिक्खवे, समयो यं कदाचि करहचि दीघस्स अद्धुनो अच्चयेन दुतियो सुरियो पातुभवति।····ततियो सुरियो····चतुत्थो सुरियो····पञ्चमो सुरियो पातुभवति····पातुभावा अङ्गुलिपब्बमत्तंपि महासमुद्दे उदकं न होति। ····छट्ठो सुरियो पातुभवति।····पातुभावा अयं च महापथवी सिनेरु च पब्बतराजा धूमायन्ति····। सत्तमो सुरियो पातुभवति। सत्तमस्स भिक्खवे, सुरियस्स पातुभावा अयं च महापथवी सिनेरु च पब्बतराजा आदिप्पति पज्जलन्ति। इमिस्सा च, भिक्खवे, महापथविया सिनेरुस्सच पब्बतराजस्स झायमानानं दय्हमानानं अच्चिवातेन खित्ता याव ब्रह्मलोका पि गच्छति। सिनेरुस्स, भिक्खवे, पब्बतराजस्स झायमानस्स दय्हमानस्स विनस्समानस्स महता तेजो खन्धेन अभिभूतस्स योजनसतिकानि पि कूटानि पलुज्जन्ति द्वि····ति···· चतु····पञ्चयोजनसतिकानि पि कूटानि पलुज्जति। इमिस्सा च, भिक्खवे, महापथविया सिनेरुस्स च पब्बतराजस्स झायमानानं दय्हमानानं नेव छारिका पञ्ञायति, न मसि। सेय्यथापि तेलस्स····।; it is probable that there might have been a Sanskrit version of this sutta from which Asaṅga quotes, cp. also, MSS, I.280; a reference to the सप्तसूर्याः is also found in Aaa., pp. 401.20.
3. Wayman adds hereafter भाजनलोकमधिकृत्य.

**तद्यथा सप्तसूर्योपमे सूत्रे(त्रे) यावदस्याः खलु महापृथिव्याः सुमेरोश्च पर्व्वत राजस्य। यावच्च ब्रह्मलोकाद् भाजनलोकस्य दग्धस्य ध्मातस्य मषिरपि न प्रज्ञायते। छायिकावशिष्टमपि न प्रज्ञायते** [।] [4]-अनेन पर्यायेण भगवता भाजनलौकिक(लोक)स्थानित्यता आख्याताऽयं(तेमं) तावदाप्तागमं निश्रित्यायं योगी श्रद्धाधिपतेयं सर्वसंस्कारानित्यतायां निश्चयं प्रतिलभते ।।

स एवं निश्चयं प्रतिलभ्य, श्रद्धाधिपत्येन पुनः पुनः प्रत्यक्षतामपि, परोक्षतामपरप्रत्ययां(यतां) चानित्यत(य)ां समन्वेषते[1]। कथञ्च पुनः समन्वेषते[1]। आह। [5] द्विविधं वस्तु व्यवस्थापयति[2]। आह। आध्यात्मिकम्बाह्यं च। तत्राध्यात्मिकम्वस्तु यत्षडायतनं, बाह्यम्वस्तु ([3]स एवं निश्चयं प्रतिलभ्य श्रद्धाधिपत्येन पुनः पुनः प्रत्यवेक्षतामविपरोक्षतामपरप्रत्ययता(ं) चानित्यतां(यां) समन्वेषते। आह। द्विविधं वस्तु व्यवस्थापयति। आध्यात्मिकम्बाह्यश्च। तत्राध्यात्मिकम्व[6]स्तु यत्षडायतनं बाह्यम्वस्तु[3]) षोडशविधं। तद्यथा **पृथिवीवस्तु**-[तद्यथा]ग्रामनिगमगृहापणादयः। **आरामवस्तु** तद्यथा तृणौषधिवनस्पतयः। **पर्व्वतवस्तु** तद्यथा चित्राः

1. Wayman reads पर्येषते.
2. Wayman adds here कतमद् द्विविधम्.
3. This is a repetition, may be deleted.

पर्व्वतसन्निवेशाः । **उत्ससर(स)स्तडागनदीप्रस्रवण-वस्तु** [।] [1]**क्षेत्रवस्तु कोशसन्निधिवस्त्रालंकारनृत्तगीत-वादितगन्धमाल्यविलेपनमाण्डोप**[7]**स्कारलोक(ा)स्त्री-पुरुषप(ा)रिचया**[ ं]**वस्तूनि च** तान्येतानि भवन्ति । **षोडशवस्तूनि** [।]

स एवमाध्यात्मिक[ं] बाह्यं वस्तु व्यवस्थापयित्वा-(व्यावस्थाप्य) [आ]ध्यात्मिकस्य तावद्वस्तुनः प्रत्यक्षा-धिपतेयेन मनस्कारेण विपरिमाणा(णामा)कारेण विपरिणामानित्यतां समन्वेषते । तत्र[पञ्चद[2]]शविध आध्यात्मिकस्य वस्तुनो विपरिणामः । अष्टौ विपरि-णामकर[8]णानि ।

**तत्र कतमः [पञ्चद[2]]शविधो विपरिणामः । आध्यात्मिकस्य वस्तुनस्तद्यथा-अवस्थाकृतो, वर्ण्णकृतः, संस्थानकृतः, सम्पत्तिविपत्तिकृतः । अंगसाकल्य-वैकल्यकृतः, [परिश्रमकृतः[2]], परोपक्रमकृतः, [शीतो-ष्णकृतः[2]] । ईर्यापथकृतः, [स्वयंकृतः[2]], संक्लेश-कृतो(तः), [कृषिकृतः[2]], मरणकृतो, विनीलकादि**
14A—2// ///[1]**कृतः, सर्व्वेण सर्व्वमसंप्रख्यानपरिक्षयकृतो विपरिणामः ।**

**तत्राष्टौ विपरिणामकारणानि ।** कतमानि [।] आह । तद्यथा **कालपरिवासः, परोपक्रम उपभोगः,**

1. Wayman adds here कर्मान्त.
2. Added by a separate hand, dim and illegible.

**ऋतुविपरिणामः, अग्निवाहः, उदकक्लेदः, वायुशोषः, प्रत्ययान्तरसंगतिश्चेति** ।।

तत्र **कालपरिवासो** नाम येषां भावानां रूपिणां स्वस्थाने[ऽ]प्युपन्यस्त[2]कानां कालान्तरेण जर्जरतोपलभ्यते । जीर्ण्णता रूपविकृतिः ।।

तत्र **परोपक्रमो** नाम यथापि तत् परो विविधानि रूपाणि विविधैः प्रहरणैः विविधैरुपक्रमविशेषैः विचित्रां विकृतिमापादयति ।

**तत्रोपभोगो** नाम यथापि तत्प्रतिस्वामिनो विविधं रूपमुपभुंजाना उपभोगविधिपतित्वा(गमधिपतिं कृत्वा वि)कृति[3]मापादयन्ति ।

तत्र **ऋतुविपरिणामो** नाम तद्यथा हेमन्ते तृणौषधिवनस्पतीनां पाण्डुत्वं, शीर्ण्णत्वं प्रजायते । ग्रीष्मवर्षासु पुनः संपूर्ण्णत्वं, हरितता च । तथा फलसमृद्धिः, पुष्पसमृद्धिः, पत्रसमृद्धिः, विपत्तिश्च तेषामेव [।]

**तत्राग्निवाहो** नाम यथापि तदग्नि[4]र्मुक्तो ग्रामनिगमराष्ट्रराजधानीर्दहन् परैति ।

**तत्रोदकक्लेदो** नाम तथापि तन्महान् उदकस्कन्धः समुदागतो (ग्रामनिगमराजराष्ट्रधानीं दहन् परैति । तत्रोदकक्लेदो नाम तथापि तन्महानुदकस्कन्धः समुदागतो[1]) ग्रामनिगमराजराष्ट्रधानी[:] प्लावयन् परैति ।।

1. This is a repetition and may be deleted.

**तत्र वायुशोषो** नाम तथापि तन्महता वायु[5]-स्कन्धेनार्द्राः पृथिवीप्रदेशा लघु लघ्वेव शुष्यन्ति। तथार्द्राणि वस्तून्यार्द्राः सस्यजातयः।

**प्रत्ययान्तरसमुद्गमो** नाम तद्यथा सुखवेदनीयं स्पर्शं प्रतीत्य सुखां वेदनां वेदयमानस्य सुखवेदनीय(:)-स्पर्शसमुद्गमः। [[1]एवं दुःखां वेदनां वेदयमानस्य सु(दुः)ख वेदनीय(:) स्पर्शसमुद्गमः] अदुःखासुखां वेदनां वेदयमानस्य[ाऽ]सुखवेदनीयस्य वा[ऽ]दुःखवेद-नीयस्य[6]वा स्पर्शस्य समुद्गमः। तथा रक्तस्य प्रतिघनिमित्तसमुद्गमः यस्य समुद्गमाद्रागपर्यवस्थानं च विगच्छति। प्रतिघपर्यवस्थानं चोत्पद्यते (।) एवं द्विष्टस्य मूढस्य विसभागः। क्लेशोत्पत्तिनिमित्तः समुद्गमो वेदितव्यः। तद्यथा चक्षुर्विज्ञाने संमुखी-भूते शब्दविषयसमुद्गमः[2]। गन्धरसस्प्रष्टव्य(ा):। धर्मनिमित्त[7]समुद्गमो येन विषयान्तरेण विसभा-गान्युत्पद्यन्ते। इतीमान्यष्टौ विपरिणामक[ा]-रणानि [।] या काचिद्विपरिणतिर्भवति। रूपिणाम्वा, अरूपिणाम्वा धर्माणां सर्व्वो(र्व्वा)सौ एभिरष्टाभिर्नात उत्तरि नातो भूयः।

---

1. Added by a separate hand in a footnote.
2. The correct reading hereafter seems to be—[घ्राणजिह्वा-कायविज्ञानेषु संमुखीभूतेषु]गन्धरसस्प्रष्टव्य[विषयसमुद्गमो, यावन्मनोविज्ञाने संमुखीभूते]धर्मनिमित्तसमुद्गमः।....; portion in the square brackets has been supplied by us.

तत्राध्यात्मिकस्य वस्तुनः **कथमवस्थाकृतं विपरिणामम्पर्येषते ।** इहा[8]नेचा(ना)त्मनो [वा[1]] परेषाम्वा दह्रावस्थामुपादाय यावज्जीर्णावस्था दृष्टा भवति। तां पूर्व्वेणापरां विसदृशां(शीं), व्यतिभिन्नां, विपरिणतां, संस्कारसन्ततिं दृष्ट्वा[ऽ]स्यैवं भवति।

14B—2// अनित्या बत(ते)मे संस्कारा[स्[1]] तथाप्येषां //[1] प्रत्यक्षत एवेयं पूर्व्वणापरा विकृतिरुपलभ्यते ॥

तत्र कथं **सुवर्णकृत(ान)ां विपरिणामानित्यतां पर्येषते।** इहानेनात्मनो (स तथात्मनो) वा, परेषाम् वा, या पूर्व्वं(ताम[2]) स्व(सु)वर्णता(तां), सुच्छविता-(तां), त्वग्वर्णता(ताम्)। पश्चाच्च दुर्व्वर्ण[2]-तां दुश्छवितां **रुक्षतां** रुक्षवर्णतां च। पश्यति [।] दृष्ट्वा च पुनरेव प्रत्युदावर्त्यापरेण समयेन तामेव सुवर्णतां पर्यवदातत्वग्वर्णतां च पश्यति। तस्यैवं भवत्यनित्या बत(ते)मे संस्काराणा(रास्तेषा)मियमेवं रूपा प्रत्यक्षतो वर्णविकृतिरुपलभ्यते ॥

तत्र **कथं[सं][1]स्थानकृतां विपरिणामानित्यतां पर्येषते।** यथा वर्ण उक्त[3]एवं कृशस्थूलतया संस्थानं वेदितव्यं **सम्पत्तिर्विपत्तिश्च।** तद्यथा ज्ञाति-सम्पत्तिर्व्वा, भोगसम्पत्तिर्व्वा, शीलदृष्टिसम्पत्तिर्व्वा [।] एतद्विपर्ययेण विपत्तिस्त(त्तिः[।]त)**त्कथमंगप्रत्यंग-**

1. MS. omits this.
2. May be deleted.

**विपरिणामानित्यतां पर्येषते ।** इहानेनात्मनो वा, परेषाम्वा या पूर्व्वं सुवर्ण्णता, सुच्छविता, पर्यवदातत्वग्वर्ण्णता दृष्टा भवति । प(प्र)तिसम्पत्तिर्व्वा [4]भोगसम्पत्तिर्व्वा शीलदृष्टिसम्पत्तिर्वा(।)एतद्विपर्ययेण विपत्ति स्(:)[।][1]

त[1]त्कथमंगप्रत्यंगविपरिणामानित्यतां पर्येषति(ते) । इहानेनात्मनो वा, परस्य वा, पूर्व्वमपि(वि)कलांगता दृष्टा भवति । सोपरेण समयेन विकलताम्पश्यति राजतो वा, चोरतो वा, मनुष्यतो वा, अमनुष्यतो वा[।] दृष्ट्वा च पुनरस्यैवं भ[5]वति । अनित्या बत(ते)मे संस्कारा इति पूर्व्ववदे(त्[।]) ।

(एव[2])मात्मनः परेषां च श्रान्तकायतां, क्लान्तकायतां[3] धावतो वा, प्लवतो वा, लंघयतो वा, अभिरु(रो)हतोवा, विविधं वाक्कर्म द्रुतं कुर्व्वतः । सोपरेण समयेन विगतक्लमश्रमतां पश्यति । तस्यैवं भवत्यनित्या बतेमे संस्कारा इति पूर्व्ववत् । एवम्परिश्रमकृतां[6]विपरिणामानित्यताम्पर्येषते ।।

एवमात्मनो वा परेषाम्वा **परोपक्रमेण कायविकृतिं पश्यति ।** तद्यथा लताभिर्व्वा ताडितस्य, कशाभिर्व्वा,

1. MS. : विपत्तिस्तत्कथमंग.
2. It seems that some portion is missing in the MS., which may be reconstructed as : [तत्कथं परिश्रमकृतां विपरिणामानित्यतां पर्येषते । स तथा ऽऽ]त्मनः····
3. पश्यति may be added here.

वैत्रैर्व्वा वर(त)त्राभिर्व्वा [।] तथा विविधैर्दंशमशक-सरीसृपसंस्पर्शैः [।] अपरेण वा पुनः समयेन तां विकृतिं न पश्यति । दृष्ट्वा च पुनरस्यैवं भवत्य-नित्या बत(ते)मे संस्कारा इ[7]ति पूर्व्ववदित्येवं **परोपक्रमकृताम्विपरिणामानित्यताम्पर्येषते ॥**

[1]तथात्मानं वा, परम्वा, शील(त)काले प्रत्युप-स्थिते अविशदकायं, संकुचितकायं, शीतपर्यवस्थान-पर्यवस्थितमुष्णाभिलाषपरिगतं पश्यति । उष्णकाले वा पुनः प्रत्युपस्थिते अविशदकायं, संकुचितकायं शीतपर्यवस्थानपर्यवस्थितविश[ 8 ]दगात्रप्रस्विन्नगात्रं सन्तप्तगात्रमुच्छ्रष्य वचनं तृषापरिगतं । शीतसंस्पर्शा-भिलाषिणं पश्यति । दृष्ट्वा च पुनः प्रत्युदावर्त्त्य पुनः शीतकाले पूर्व्वोक्तैरेवाकारैः पश्यति । दृष्ट्वा च पुनरस्यैवं भवति । अनित्या बत(ते)मे संस्कारा
14A—3// इति पूर्व्ववदेव[ ]//[1] **शीतकृतां विपरिणामानित्यतां पर्येषते ।**

स[2] पुनरध्यात्मम्वा(रात्मनो वा)[परे[3]]षाम्वा चंक्रमस्थाननिषद्यशयानैरीर्यापथैरन्यतमान्यतमेनेर्यापथेन आत्मानम्वा परम्वा पश्यति । पुनस्तेनैवमेकदा अनु-गृह्यमाणं पश्यति । दृष्ट्वा च पुनरस्यैवं भवत्य-

1. MS. omits here [कथं शीतकृतां विपरिणामानित्यतां पर्येषते । स].
2. MS. omits here [कथमीर्यापथकृतां विपरिणामानित्यतां पर्येषते].
3. Letters damaged by pin-hold.

नित्या बतेमे संस्कारा इति पूर्व्ववत्। **एवमीर्यापथकृतां विपरिणामानित्यतां[2]पर्येषते ॥**

**कथं स्पर्शकृताम्विपरिणामानित्यताम्पर्येषते।** सुखवेदनीयेन स्पर्शेन स्पृष्टः, सुखवेदनीयं स्पर्शं प्रतीत्योत्पन्नां सुखां वेदनां वेदयमानः। सुखा[ं] वेदनावस्थामात्मनः परि[च्]छिनत्ति। यथा सुखदेवनावस्था[ं] एवं दुःखा[ऽ] सुखा[ऽ]सु(दुः)खवेदनावस्थां [।] तस्य पूर्व्वा पर्येषणा आसां वेदनानां नवनवतानिःपु[3]राणपुराणतामापायिकतां तावत्कालिकतामित्वरप्रत्युपास्थायितमन्यथीभावं दृष्ट्वा, दृष्ट्वैवं भवति। अनित्या बतेमे संस्कारा इति पूर्व्वत् ॥

**तत्र कथं क्लेशकृतां विपरिणामानित्यतां व्यवचारयति।** सरागं चित्तमुत्पन्नं परिजानाति। विगतरागं सद्वेषम्विगतद्वेषं। समोहं विगतमोहमन्यतमान्यत[4]मेन वा उपक्लेशेनोपक्लिष्टं चित्तमुपक्लिष्टमिति परिजानाति। अनुपक्लिष्टम्वा पुनरनुपक्लिष्टमिति परिजानाति। तस्य पू(पौ)र्व्वापर्येणैभिः क्लेशोपक्लेशैरवतीपर्णविपरिणता[ऽ]विपरिणत[ां] चित्तसन्ततिं दृष्ट्वैवं भवत्यनित्या बतेमे संस्कारा इति। तथा ह्येषां प्रत्यक्षतः संक्लेशकृतो विपरिणाम[5]उपलभ्यते ॥

**तत्र कथं व्याधिकृतां विपरिणामानित्यतां व्यवचारयति।** इहानेनैकदा[ऽऽ]त्मा च परे च दृष्ट्वा-

(ष्टा) भवन्त्यरोगिणः, सुखिनो, बलवन्तः । सो[ऽ]-परेण समयेन पश्यत्यात्मानम्वा, परम्वा, आबाधिकं, दुःखितं, बाढग्लानं, स्पृष्टं शारीरिकाभिर्वेदनाभिः दुःखाभिस्तीव्राभिरिति विस्तरेण पूर्व्ववत् ।

**तत्र कथं क्लेशकृतां[6]विपरिणा[मा]नित्यतां व्यवचारयति ।** इहानेनैकदा[ऽऽ]त्मा च परे च दृष्ट्वा(दृष्टा) भवन्त्यरोगिणः, सुखिनो, बलवन्तः । सोपरेण समयेन पश्यत्यात्मानम्वा, परम्वा, आबाधिकं, दुःखितं, बाढग्लानं, स्पृष्टं शारीरिकाभिर्वेदनाभिः । स पुनरपरेण समयेन पश्यत्यरोगिणं, सुखितं, बलवन्तं, दृष्ट्वा च पुनरस्यैवं भवत्यनित्या बत(ते)[7]मे संस्कारा इति पूर्व्ववत् ॥

**तत्र कथं मरणकृतां विपरिणामानित्यतां व्यवचारयति ।** इहायं जीवितं पश्यति ध्रियन्तं, तिष्ठन्तं, यापयन्तं, सोपरेण समयेन मृतं कालगतं पश्यति । विज्ञानशून्यं कलेवरं दृष्ट्वा च पुनरस्यैवं भवतीति विस्तरेण पूर्व्ववत् ॥

तत्र **कथं [वि]नीलकादिकृतां विपरिणामानित्यतां व्यव[8]चारयति ।** सोपरेण समयेन ताम(तद)स्थि-शंकलिकावस्थानं पश्यति । स तदेव मृतकलेवरं विनीलकावस्थमेकदा पश्यति । एकदा विपूयका-वस्थमेनं विस्तरेण यावस्थिशंकलिकावस्थं दृष्ट्वास्यैवं भवत्यनित्या बत(ते)मे संस्कारा इति विस्तरेण

पूर्व्ववत् ।।

तत्र **कथमसंख्या(य)न परिक्षयकृताम्विपरिणामा-**
14B—3// **नित्यतां व्यवचारयति** [।] //[1]सोपरेण[समयेन] ताम(तद)प्य[स्थि]शंकलिकावस्थानं पश्यति । सर्व्वेण सर्व्वं नष्टा(ष्टो) भवति, विध्वस्ता(स्तो), विशीर्ण्णः । सर्व्वेण सर्व्वं चक्षुषो[अ]नाभासगता, दृष्ट्वा च पुनरस्यैवं भवत्यनित्या बत(ते)मे संस्कारास्तथा ह्येषां पौर्व्वापर्येण प्रत्यक्षत एवायमेवं रूपो विकार उपलभ्यते । विपरिणामः ।

एवं तावत्प्रत्यक्षाधिपतेयेन मनस्कारेणाध्यात्मिकस्य वस्तुनः [2][पंच[1]]दशभिराकारैर्विपरिणामानित्यतां व्यवचारयति । व्यवचारयित्वा(व्यवचार्य) षोडशविधस्य बाह्यस्य वस्तुनो विपरिणामानित्यतां व्यवचारयति । येऽनेन पृथिवीप्रदेशा नाभिसंस्कृताः पूर्व्वं दृष्टा भवन्ति । गृहवस्त्वापणवस्तु-पुण्यशाला-देवकुलविहारवस्तुप्रकारैः पश्चाच्चाभिसंस्कृतान्पश्यत्यनभिसंस्कृतान्पश्यत्यनन्दिनवा[3]न्सुकृतान्सूपलिप्तान् (।) सोपरेण समयेन जीर्ण्णान् पश्यति । जर्जरानलूनविलूनां(नान्)च्छीर्णान् छ(क्ष)तितपतितान् खलु छिद्रानग्निना वा दग्धानुदकेन वापहृतां(हृतान्) । दृष्ट्वा च पुनरस्यैवं भवति । अनित्या बत(ते)मे संस्काराः [।] तथाप्ये (ह्ये)षां पौर्व्वापर्येणायमेवंरूपः प्रत्यक्षो विकारो

1. A separate hand adds this.

विपरिणाम उपलभ्यते । एवं पृथिव्यां विपरिणामा-[4]नित्यतां व्यवचारयति । एवं तृणौषधिवनस्पतय आरामोद्यानानि च समृद्धपत्रपुष्पफलानि पश्यति । हरति तानि (हरितानि) प्रासादिकान्यभिरम्याणि [।] अपरेण स समयेनोच्छुष्काणि पश्यति । विगतपत्र-पुष्फलानि (।) अग्निदाहेन वा दग्धानि (वा,) तथा पर्वतान्येकदा समृद्धपाषाणानि पश्यत्येकदा निर्लुठित-पाषाणानि पतित[5] शृंगाणि, पतितकूटानि, उत्कूल-निकूलान्यग्निना दग्धानि, उदकाभिष्यन्दितानि, तथा उत्ससरस्तडाक (ग) नदीप्रस्रवणकूपादीन्येकदा, समृद्धो-दकानि पश्यत्येकदा परिक्षीणोदकानि, सर्वेण वा सर्व्वं विशुष्काणि खिलीभूतानि कोटराणि । तथा कर्मान्तानेकदा सम्पद्यमानान्पश्यत्येकदा विपद्यमानां (नान्) [पश्यति[1] ।] तद्यथा[6]कृषिकर्मान्तान्नौकर्मा-न्तान्सम्यग्व्यवहारकर्मान्तान् विविधांछिल्प (विधा-ञ्छिल्प) स्थानकर्मान्तान्, तथा कोशसन्निधीनां विचित्राणां नानाप्रकाराणामेकदा आचयं पश्यत्येकदा अपचयं । तथा भोजनपानं च एकदा[न[2]]भिसंस्कृता-(न्ना) वस्थं पश्यत्येकदाभिसंस्कृतावस्थमेकदा लालाविस-रविक्लिन्नमेकदा यावदुच्चारप्रस्रावावस्थं [पश्यति[1]] ।

1. It seems that this was added by a separate hand in the MS., but the ink is rubbed off and it is not traceable in the MS. photo.
2. MS. omits this.

तथा वि[7]विधानि यानान्येकदा सुमण्डितानि स्वलं-
कृतान्यभिनवानि पश्यत्येकदा विगतालंकाराणि ।
विगतमण्डनानि, जर्जराणि । तथा वस्त्राणामेकदा
अभिनवतां पश्यत्येकदा पुराणतां । प्रक्षीणतामेकदा
शुद्धतामेकदा मलिनतां । तथालंकाराणामेकदानभिसं-
स्कृततामेकदा[ऽ]भिसंस्कृततामेकदा सारतामेकदा[8]-
भिन्न-प्रभिन्नताम्विक्षीणतां पश्यति । तथा नृत्तगीत-
वादितानां प्रत्युत्पन्नप्रयोगविचित्रभूय[स्]समुद्गता[ं]-
भवभंगताम्पश्यति । तथा गन्धमाल्यविलेपनानां
प्रत्यग्रसुगन्धा[ऽ]म्लानतां पश्यति । अपरेण समयेन
नातिसुगन्धदुर्गन्धम्लानविशुष्कतां पश्यति । तथा
भाण्डोपस्काराणामनभिसंस्काराभिसंस्कारसारभग्नतां
14A—4// //[1] पश्यति । तथा आलोकानुकारयोः संभव-
विभवताम्पश्यति । तथा स्त्रीपुरुषचर्यासम्भवविभवतां
पश्यति । अस्थिरतां [।] दृष्ट्वा च पुनरस्यैवं
भवत्यनित्या वत(ते)मे संस्कारास्तथा ह्येषां बाह्यानां
संस्काराणां, षण्णां च परिग्रहवस्तूनां, दशानाञ्च काय-
परिवाराणां प्रत्यक्षता, विकारो, विपरिमाणो[ऽ]-
यमीदृश उपलभ्यते । सर्व्वत्रचै[2]तत् पेयालं
वेदितव्यं ॥

एभिरष्टाभिर्विपरिणामकारणैः पूर्व्वनिर्दिष्टैरस्या-
ध्यात्मिकबाह्यस्य वस्तुनो यथायोगं प्रत्यक्षाधिपतेयेन
मनस्कारेणैवं विपरिणामाकारेणानित्यतां व्यवचार-

यति। यथानेन सा विपरिणामानित्यता प्रत्यक्षं दृष्टा भवत्यनुभूता, अपरप्रत्ययश्च तस्यां भवत्यनन्य-नेयः। तथैवानुस्मरन्[3]व्यवचारयति। निश्चि-तश्च भवति। तेनोच्यते **प्रत्यक्षाधिपतेयो मनस्कार** इति।

स एवं प्रत्यक्षाधिपतेयेन मनस्कारेण विपरिणामा-नित्यतां व्यवहा(चा)रयित्वा(व्यवचार्य) येषां रूपिणां संस्काराणां सती सम्विद्यमाना क्षणोत्पन्नभग्ना विनीलता(विलीनता)नोपलभ्यते। तत्र प्रत्यक्षाधि-पतेयं मनस्कारं निश्रित्यानुमानं करोत्येवञ्च पुन[4]-रनुमानं करोति। क्षणोत्पन्नभग्नविलीनानामेषां संस्काराणामियं पूर्व्वेणापरा विकृतिर्युज्यते।[1] न तु तथैवावस्थितानां, इति हि क्षणिकाः संस्कारास्तेषु तेषु प्रत्ययेषु सत्सु तथा तथोत्पद्यन्ते।[2] उत्पन्नाश्चानपेक्ष्य विनाशक[ा]रणं स्वरसेन विप(न)श्यन्ति।[3]

---

1. cp. Bodhi., pp. 188-90; for Pāli references, see PD, s.v. anicca, PTSD, s.v. anicca; Asm., pp. 38-40, 41; Adv., pp. 104-7; AKB, II.46: KV, XXII.8.
2. *Vide*, MSAB, pp. 149-54.
3. हेतुतः सम्भवो यस्य, स्थितिर्न प्रत्ययैर्विना।
विगमः प्रत्ययाभावात् सोऽस्तीत्यवगतः कथम्॥
(Yuktiśaṣṭikā, quoted in BCAP, p. 234),
हेतुतः सम्भवो येषां, तदभावान्न सन्ति ते।
कथं नाम न ते स्पष्टं प्रतिबिम्बसमा मताः॥ (Catuḥstava, IV.2, quoted, ibid, p. 273; MKV (V), p. 197).

यानि पुनरेतानि विपरिणामकारणानि तान्यन्यथोत्पत्तये सत्य(म्व)[5]र्त्तन्ते विकृताया उत्पत्तेः कारणीभवन्ति। न तु विनाशस्य [।] तत्कस्य हेतोः [।] सहैव तेन विनाशकारणेन विनष्टानां संस्काराणां यस्माद्विसदृशा(शी) प्रवृत्तिरुपलभ्यते। न तु सर्व्वेण सर्व्वमप्रवृत्तिरेव [।] येषाम्वा पुनः संस्काराणां सर्व्वेण सर्व्वमप्रवृत्तिरुपलभ्यते। तद्यथा क्वाथ्यमानामसामन्ते सर्व्वेण सर्व्वम्परिक्षयो भवति-[6]अग्निनिर्दग्धानां च लोकभाजनानां मसिरपि न[प्र[1]]ज्ञायते। छायिका च। शिष्टमपि न प्रज्ञायते तेषामप्युत्तरोत्तरकरणपर्यादानादन्ते सर्व्वेण सर्व्वमभावो भवति। न त्वग्निनैव क्रियते [।] तस्माद्विपरिणामकारणान्येतान्यष्टौ यथोक्तानि स्वरसेनैव तु विनाशो भवति। स ए[7]वमानुमानिकमनस्कारेण संस्कारेणाक्षणोत्पन्नभग्नविलीनतायां निश्चयं प्रतिलभ्य पुनरप्यप्रत्यक्षपरलोकासंस्कारप्रवृत्तावनुमानं करोति॥

एवं च पुनरनुमानं करोति। सन्ति सत्वा(त्त्वा) [8]ये अवर्ण्णा अपि, दुर्व्वर्णा अप्युपलभ्यन्ते, उच्चकुलीना अपि, आढ्यकुलीना अपि, दरिद्रकुलीना अपि,
14B—4// अल्पेशाख्या अपि, दीर्घायुषो (ष)आदे//[1]यवाक्या अपि, अनादेयवाक्या अपि, तीक्ष्णेन्द्रिया अपि [।]

1. A separate hand adds this.

तदेतत् सत्व(त्त्व)वैचित्र्यं सति कर्मवैचित्र्ये युज्यते [।] नासति । यद्रूपैः सत्त्वैर्यद्रूपं पूर्व्वमेव भूतं (कृतं?) कुशलाकुशलं चित्रकर्म कृतमुपचितं, तेन हेतुना, तेन प्रत्ययेन, तेषामिदमात्मभाववैचित्र्यमभिनिर्वृत्तं ॥[1]

न चैतदीश्वरनिर्माणहेतुकं युज्यते । स चेदीश्वरनिर्मा[2]णहेतुकं स्यात्तदीश्वरप्रत्ययमेव वा स्यादन्येन वोपादानेनेश्वरो निर्मिमीत । स चेदीश्वर प्रत्ययमेव स्यात् तेनेश्वरस्यैषाञ्च संस्काराणां यौगपद्यं स्यात् । अथ पूर्वमीश्वरः पश्चात् संस्कारा, नेश्वरप्रत्ययाः संस्कारा भवन्ति । अथेश्वरस्य प्रणिधानं निर्माणकारणं, नेश्वर एव । तेन समीच्छा सहेतुका(की) वा स्यान्निर्हेतु[3]का(की) वा [।] यदि सहेतुका ईश्वरहेतुकैव च तेन पूर्व्वकेण दोषेण तुल्यतया न युज्यते । अथान्यहेतुका(की) तेनेच्छा प्रयत्नः ।

1. cp. कम्मस्सका, माणव, सत्ता कम्मदायादा कम्मयोनी कम्मबन्धू कम्मप्पटिसरणा । कम्मं सत्ते विभजति यदिदं हीनप्पणीतताया ति, M. N., III.280 (Cūḷakaṁmavibhaṅgasutta); for Sanskrit version, see Mahākarmavibhaṅga; MSS, I.180; this passage has been quoted in the Asm. (pp. 60-1) also; cp. AK, IV.1-a :
कर्मजं लोकवैचित्र्यं····; Adv., Vs. 154 :
सत्त्वोपपत्तिहेतूनां विपत्संपद्विधायिनाम् ।
लोकवैचित्र्यकर्तॄणां कर्म हेतुरितीष्यते ॥ see also Vṛtti; Sn., Vs. 654 :
कम्मुना वत्तति लोको कम्मुना वत्तति पजा ।
कम्मनिबन्धना सत्ता रथस्साणीव यायतो ॥; see Kv, and KVA, XVII.3; VIII.7-8; Milindapañho, pp. 137-8.

प्रणिधानमीश्वरविनिर्मुक्तान्यधर्महेतुका तथा सर्व्वे-[ऽ]पि संस्कारा धर्महेतुका एव भविष्यन्ति । किमीश्वरेण वृथा कल्पितेनेत्येवमादिना[1] अ[ा]नुमानिकेन मनस्कारेणैवंभागीयेन, परलोकेन सं[4]स्कारप्रवृत्तौ निश्चयं प्रतिलभते ।

स एवं त्रि:प्रकारमनस्काराधिपत्येन श्रद्धाधिपतेयेन प्रत्यक्षाधिपतेयेनानुमानाधिपतेयानां (याम्) नित्यतां व्यवचारयति । तत्र या पूर्व्वं पञ्च[विधाऽ[2]] नित्यता पञ्चाकारभावनानुगता उद्दिष्टा, तत्र विपरिणामाकारनिर्दिष्टा, विनाशाकारा च ।

**विसंयोगाकारा अनित्याकारा (अनित्यता) कतमा ।** आह । अध्या[5]त्ममुपादाय बहिर्धा च वेदितव्या ।। तत्राध्यात्ममुपादाय यथापि तदेकत्य: पूर्व्वम्परेषां स्ता-(स्वा)मी भवत्यदास: अप्रेष्य: । अपरकर्मकर: । सोपरेण समयेन स्वामिभावमदासभावं विहाय परेषां दासभावमुपगच्छति । स्वामिभावाद्विसंयुज्यते । तथा सन्त: सम्विद्यमाना भोगा अविपरिणता, अविनष्टा राज्ञा (:[3]) [6]अपह्रियन्ते । चोरैर्व्वा, अप्रियैर्व्वा, दायादै-[रित्य]नित्यता वेदितव्या । तत्र **धर्मताकारा**[ऽ]-

---

1. See, Yogasthāna, III, *supra*, p. 381 sq.; YBŚ, I, pp. 144-5; Dvādaśamukhaśāstra, X.2 (Vṛtti); TS with Pañjikā, Vs. 46 sq.
2. MS. omits this.
3. Letters rubbed off and illegible.

**नित्यता** यथापि तस्या एव विपरिणाम[ा]नित्यताया: विनाशानित्यताया: । वर्तमाने[ऽ]प्यध्वन्यसमवहितायाः अनाभोगे (गते)[ऽ]ध्वनि भाविन्या धर्मतां प्रतिविध्यत्येवं धर्माण [7]एते संस्कारा अनागते[ऽ]ध्वनि एवंभागीया इति । एषु **सन्निहिताकाराय**(रया?) इत एव **विपरिणामानित्यतां, विनाशानित्यतां, विसंयोगानित्यतां** समवहितां संभुरवीभूत[ा]माकारयति ।

स एवमाध्यात्मिकबाह्यानां संस्काराणां पञ्चविधायामनित्यतायामेभि: पञ्च[8]भिराकारैर्यथायोगं मनसिकारबाहुल्यादुपपत्तिसाधनभावनाधिपत्याच्च निये(में[1])यं प्रतिलभ्य तद[न[2]]न्तरं दु:खाकारमवतरति । तस्यैवं भवति । य एते संस्कारा अनित्यास्तेषामनित्यतां(ता)
14A—5// //[1] जातिधर्मतो युज्यते । इति ह्येत एव संस्कारा जातिधर्माण:, जातिश्च दु:खा, यदा(या)जातिरेव[ं]जरा व्याधिर्मरण[ं], विप्रियसंप्रयोग:, प्रियविनाभाव, इच्छाविघातश्च वेदितव्य: ।[3] एवं **तावदनिष्टा(त्या)कारेण दु:खाकारमवतरति ।**

स ये सुखवेदनीया: स्कन्धा:, सास्रवा:, सोपादानास्तेषु संयोजनबन्धनाकारेण दु:खाकारमवत[2]रति ।

1. Not legible, may also be थे.
2. Added by us.
3. See, AŚM, pp. 37-41.

तथा हि ते (तस्य) तृष्णासंयोजनस्याकारे[ऽ]धिष्ठानं, तृष्णासंयोजनं च जातिजराव्याधिमरणशोकपरिदेवदुःख-दौर्मनस्योपायासबन्धनस्य, रागद्वेषमोहबन्धनस्य चाधिष्ठानं।

**तत्रायोगक्षेमामारेण** अदुःखासुखस्थानीयेषु स्कन्धेषु दुःखाकारमवतरति। तथा ह्यदुःखासुख(ा)स्थानीयाः स्कन्धाः सोपादा[3]ना दौष्ठुल्यसहगता अबीज[ा]-नुगता अविनिर्मुक्ता दुःखदुःखतया, विपरिणामदुःखतया च। अनित्या, निरोधधर्माणः।

एवमयं योगी सुखस्थानीयेषु संस्कारेषु, सुखायाश्च वेदनायां विपरिणामदुःखतामवतीर्णो भवति। यदुत संयोजनबन्धनाकारेण दुःखवेदनास्थानीयेषु संस्कारेषु-[4]दुःखायां वेदनायां दुःखदुःखतामवतीर्ण्णो भवति। **यदुतानिष्टाकारेण** अदुःखासुखस्थानीयेषु संस्कारेषु-(ष्व) दुःखासुखायाश्च वेदनायां संस्कारदुःखताम-वतीर्ण्णो भवति। **यदुतायोगक्षेमाकारेण** [।]

तस्यैवं भवति। संयोजनबन्धनाकारमनिष्टा-कारं योगक्षेम[ा]कारं चाधिपतिं कृत्वा तिसृषु वे[5]-दनासु यत्किञ्चिद्वेदयितमिदमत्र दुःखस्येत्येवमयमनित्या-कारपूर्व्वकेण मनस्कारेण दुःखाकारमवतीर्ण्णो भवति। तस्यैवं भवतीन्द्रियमात्र(त्रं)सह(सः) उपलभते, विषयमात्रं। तज्जमनुभवमात्रं। चित्तमात्र हता-आत्मेति(हतात्मेति)। नाममात्रं। दर्शनमात्र-

मुपचारमात्रं । नात उत्तरि नातो भूयः ।

तदेवं सति स्कन्धमात्र[6]मेतन्नास्त्येषु स्कन्धेषु नित्यो, ध्रुवः, शाश्वतः स्व(ा)भूतः । कश्चिदात्मा वा, सत्वो(त्त्वो) वा, यो[ऽ]सौ जायेत वा, हीयेत वा, म्रियते(येत)वा, तत्र वा (तत्र वा)[1] तत्र कृतकृतानां 14B—5// कर्मणां फलविपाकं//[1] प्रतिसम्वेदयेत ।[2] इति हि

1. A repetition, may be deleted.

2. cp., ये केचिदात्मेति समनुपश्यन्तः समनुपश्यन्ति सर्वे त इमानेव पञ्चोपादान-स्कन्धान्समनुपश्यन्तः समनुपश्यन्ति । Adv., p. 272; S. N., II.272. 1-3; cp. Adv., pp. 316-7; see also *supra*; AKB, III.18; cp. Asm., pp. 40-1 : अनात्मलक्षणं कतमत् । यथाऽऽत्मवादे स्थितस्य आत्मलक्षणस्य स्कन्धधात्वायतनेषु तल्लक्षणस्याभावः स्कन्धधात्वाय-तनेषु आत्मलक्षणाभावतामुपादाय । इदमुच्यते अनात्मलक्षणम् । एतदभिसन्धा-योक्तं भगवता सर्वे धर्मा अनात्मान इति ॥ अपि चोक्तं भगवता—नैतत् सर्वं मम, नैषोऽस्मि, न मे स आत्मा इति । एवमेवं यथाभूतं संप्रज्ञाय द्रष्टव्यम् । इति तस्य कोऽर्थं उक्तः । बहिर्धा वस्त्वभिसन्धायोक्तं नैतत् सर्वं ममेति । कुत एतत् । बहिर्धा वस्तुनि कल्पितात्मीयलक्षणम् । अत आत्मीय निष्कर्षणम् । अध्यात्मवस्तुनि कल्पितात्मात्मीयलक्षणम् । अतः आत्मात्मीयोभयनिष्कर्षम् ।; see Nairātmyaparipṛcchā, MSS, I.174-5, cp. Sn. (K. N., I. 386 : द्वयतानुपस्सनसुत्त.) :

अनन्तनि अत्तमानिं च पस्स लोकं सदेवकं ।
निविट्ठं नामरुपस्मिं इद सच्चंति मञ्ञति ॥
तं हि तस्स मुसा होति मोसधम्मम्हि इत्तरं ।
अमोसधम्मं निब्बानं तदरिया सच्चतो विदू ॥····;

S. N., II.106, 107, 409, 431, 435, 314, 319-20, 256; for details and references, see PD and PTSD, s.v. anatta; our article 'Upaniṣadic Ātman and Conception of Attā in the Teachings of the Buddha', P. O., XXVLI.3-4,

*(contd. on p. 492)*

शून्या एते संस्काराः, आत्मविरहिता **इत्येवमनुपलम्भाकारेण शून्याकारमवतरति ।** तस्यैवं भवति । ये पुनरेते संस्काराः स्वलक्षणेनानित्यलक्षणेन, दुःखलक्षणेन युक्तास्ते[ऽ]पि प्रतीत्यसमुत्पन्नतया अस्वतन्त्रा, ये[ऽ]स्वतन्त्रास्ते[ऽ]नात्मान इत्येवमस्वतन्त्राकारेणानात्माकारमवतरति । एवं पुनर्योगि[2]ना दशाकारं गृहीतैश्चतुर्भिराकारैर्दुःखसत्यलक्षणं प्रतिसंवेदितं भवति ॥

**तत्रानित्याकारः पञ्चभिराकारैः संगृहीतः ।**[1] तद्यथा **विपरिणामाकारेण, विसंयोजनाकारेण, सन्निहिताकारेण, धर्मताकारेण** [।]

**दुःखाकारस्त्रिभिराकारैः संगृहीतः । संयोजनबन्धनाकारेण अनिष्टाकारेण अयोगक्षेमाकारेण च** [।]

**शून्याकार एकेनाकारेण संगृहीतो यदुतानुपलंभाकारेण** [।]

**अनात्माकार एके[3]नाकारेण संगृहीतो यदुतास्वतन्त्राकारेण ।**

स एवं दशभिराकारैश्चतुराकार[2][।]**नुप्रविष्टो**

*(contd. from p. 491)*

pp. 114-32; cp. भारहारसुत्त quoted in Nyāya Vārttika, I.1.1 : भारं च वो, भिक्षवो देशयिष्यामि, भारहारञ्च, भारः पञ्चस्कन्धाः, भारहारश्च पुद्गल इति । यश्चात्मा नास्तीति स मिथ्यादृष्टिको भवति (p. 339, Kashi Sanskrit Series, no. 33, 1916); cp. भारसुत्त in S. N., II; MSA, XVIII.92-103, Vṛtti, pp. 158-159; TS, 349 (I.164); TSP, I.165.

1. cp. Asm., 38-41, p. 61 sq.; Adv., p. 317.
2. [र] has been added by a separate hand.

दुःखलक्षण(ं) प्रतिसंवेद्य, अस्य दुःखस्य को हेतुः, कः समुदयः, प्रभवः, प्रत्ययः इति । यस्य प्रहाणादस्य दुःखस्य प्रहाणं स्यादित्येभिश्चतुर्भिराकारैस्समुद[4]-यसत्यस्य लक्षणं प्रतिसंवेदयति । तृष्णाया दुःखक्षेम-कत्वाद्धेतुतः, आक्षिप्याभिनिर्व्वर्तकत्वात्समुदयानयना-त्समुद[ान[1]]यतः । अभिनिर्वृत्तिर्दुःखितत्वात् प्रभव-त्वात् प्रभवतः । पुनरायत्यां दुःखबीजपरिग्रहत्वाद-नुक्रमेण च । दुःखसमुदयानयनात्प्रत्ययतः । अपरः पर्यायः । उपादानहेतुकस्य च भवस्य समुदा[5]-गमाद्भवपूर्विकाया जातेः प्रभवत्वात्, जातिप्रत्ययतां, जाति च (तेश्च)जराव्याधिमरणशोकादीनामभि-निर्वृत्तेः ।[2] हेतुतः समुदयतः, प्रभवतः, प्रत्ययतः । यथायोगं वेदितव्यं । अपरः पर्यायः [।] यः क्लेशा-नुशय आश्रय[:] पुनर्भवामभिनिर्वृत्तये हेतुस्तज्जस्य च पर्यवस्थानस्य[3] यथायो[6]गं वेदितव्यं [।] अपरः पर्यायः [।] यः क्लेशानुशय आश्रयस्तृष्णानुशयादिकः । स आयत्यां पुनर्भवाभिनिर्वृत्तये हेतुस्तज्जस्य च पर्यव-

14A—6// स्थानस्य यथायो//[1]गं समुदयः, प्रभवः, प्रत्ययश्च [।]

तत्र पौनर्भविक्यास्तृष्णायाः समुदाननात्समुदयतः ।

स[ा]पुन[:]पौनर्भविकी तृष्णा नन्दीरागसहगताया-

1. This may be deleted.

2. cp. DBS, pp. 32-3; MSS (ŚSS), I, p. 102 sq., 114-6; Asm., pp. 26-7, 37.

3. [इत्येद्] may be added here.

स्तृष्णायाः प्रभवो भवति सा पुनर्नन्दीरागसहगता तृष्णा प्रभूता, तत्र तत्राभिनन्दिन्यास्तृष्णायाः प्रत्ययो भवत्येवमस्यानुशयगतां त्रिविधपर्य[2]वस्थागतां च तृष्णामागम्यायति[:]। पुनर्भवस्याभिनिर्वृत्तिर्भवति प्रादुर्भावः। तेनाह हेतु[तः[1]], समुदयतः, प्रभवतः, प्रत्ययतश्च। एवमयं योगी एभिश्चतुर्भिराकारैस्समुदयसत्यलक्षणं प्रतिसम्वेदयते।

समुदयसत्यलक्षणं प्रतिसंवेद्य अस्य समुदयसत्यस्याशेषोपरमन्निरोधं निरोधत आ[3]कारयति। दुःखसत्यस्याशेषोपरमेच्छातः, अग्रत्वाच्छ्रेष्ठत्वात्तदन्तरत्वात् प्रणीततः, नित्यत्वान्निस्सरणतः। एवमयं चतुर्भिराकारैः निरोधसत्यस्य लक्षणं प्रतिसंवेदयति। प्रतिसम्वेद्य ज्ञेयपरिमार्गणार्थेन, भूतपरिमार्गणार्थेन चतुर्भिर्दुःखैरनुप्रवर्तनार्थेन। निर्व्वाणगमनायैकायनार्थेन [4]मार्गं मार्ग[तो], न्यायतः, प्रतिपत्तितो, नैर्याणिकतश्च आकारयति। स एवं चतुर्भिराकारैर्मार्गत्यस्य लक्षणं प्रतिसम्वेदयते। अयमस्योच्यते चतुर्ष्वार्यसत्येष्वध्यात्मं प्रत्यात्मं लक्षणप्रतिसंवेदी[3](यते। अयमस्योच्यते। चतुर्ष्वार्यसत्ये[षु[2]])[3] मनस्कारः॥

स एवं प्रत्यात्मिकान् स्कन्धान् प्रत्यये[5]नोप-

---

1. cp. Asm., pp. 36-41.
2. A separate hand adds this, not legible.
3. This may be deleted.

परीक्ष्य व्यवचारयित्वा (व्यवचार्य) विपरोक्षकान् विसभागधातुकान् । स्कन्धाननुमानतः पराहन्ति । तेप्येवं धर्माणः ते[ऽ]प्येवंनयपतिता इति । यत्किञ्चित्संस्कृतं सर्वत्र सर्वशः [[1]एवं तदेवं प्रतिसंवेदी मनस्कारः । प्रत्ययेनोपपरीक्ष्यव्यवचारयित्वा (चार्य) विपरोक्षान् विसभागधातुकान् स्कन्धाननुमानतः पराहन्ति । ते-[ऽ]प्येवं धर्माणस्ते[ऽ]प्येवं नयपतिता इति यत्किञ्चित्संस्कृतं सर्व्वत्र सर्वश[1]] एवं तदेवंप्रकृतिकं, तस्य च निरोधः । शान्तः, मार्गो, नैर्याणिको यस्तत्प्रहाणाय तस्य यदा विपक्षोक्तेषु प्रत्यात्मिकेषु स्कन्धे[6]षु सत्यज्ञानं । यच्च विपरोक्षेषु विसभागधातुकेष्वनुमानज्ञानं । तद्धर्मज्ञानान्वयज्ञानयोरुत्पत्तये बीजस्थानीयं भवति । स चायं **लक्षणप्रतिसंवेदी मनस्कारः** श्रुतचिन्ताव्यवकीर्ण्णो वेदितव्यः ।

यदा तेषु सत्येष्वयं योगी एवं सम्यक्(ग्)व्यवचारणान्वयादिभिः षोडशभिराकारैश्चतुर्ष्वार्य[7]सत्येषु निश्चयः[-यं] प्रतिलब्धो भवति । यदुतोपपत्तिसाधनयुक्त्या, यदुत यावद्भाविकतां वा, तदा श्रुतचिन्तामयं मनस्कारं समतिक्रम्य व्यवतीर्ण्णवर्त्तिनमेकान्तेन भावनाकारेणाधिमुच्यते । सो[अ]स्य भवत्याधिमोक्षिको मनस्कारः । सत्यालम्बनश्चैकान्तसमाहितश्च [।] स तस्यान्वया[द्]द्वे सत्ये अधिकृत्य दुःख[8]सत्यञ्च

---

1. Added by a separate hand in a footnote.

समुदयसत्यश्च अपर्यन्तं ज्ञानं प्रतिलभते । येनानित्य-मनित्यमित्यनित्यापर्यन्तमधिमुच्यते ।।

एवं दुःखा[ऽ]पर्यन्ततां शून्याकाया[रा]पर्यन्ततां, संक्लेशापर्यन्तामपायगमनापर्यन्ततां सम्पत्ति(त्य) [पर्यन्त[1]]नां(तां), विपति[त्य]पर्यन्ततां, स
14B—6// व्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासा //[1] पर्यन्ततां [।] तत्रा[ऽ]पर्यन्तेति नास्ति संसारं(रः) सन्स(संस)रत, एषां धर्माणामन्तो नास्ति पर्यन्तः । यावत्सन्सा(संसा)रभाविन एते धर्माः, सन्सा(संसा)-रस्य वा[ऽ]शेषोपरमादेषामुपरमो, नास्ति अन्यथोपरम इत्येवं सर्वभवगतिच्युत्युपपादेभ्यः अप्रणिहा(हिता)-कारेणासन्निश्रयाकारेण, प्रातिकूल्याथि(धि)कारेणा-सन्निश्रयाक[ा]रेण [।] प्रातिकूल्याधि[2]कारेणाधिमु-च्यमान आधिमोक्षिकमनस्कारं भावयति । स एवं सर्व्वभ(ा)वोपपत्तिभ्यः । चित्तमुद्वेजयित्वा(-मुद्वेज्य) । उत्त्रास्य । उ(त्)त्रासयित्वा(स्य) [अ]घ्याशयेन निर्व्वाणे[ऽ]प्यन्यतमान्यतमेनाकारेण प्रणिदधाति । तस्य दीर्घरात्रं तच्चित्रं(त्तं)रूपरतं शब्दगन्धरसस्प्रष्ट-व्यरतं आ(तमा)चितमुपचितं (रूपशब्दगन्धरसस्प्रष्ट-व्यरतंआ(तमा) चितमुपचितं[2] ।) [3] रूपशब्दगन्ध-रसस्प्रष्टव्यैः । येनाध्याशयेनापि निर्व्वाणं प्रदधते ।

1. MS. omits this, added by us.
2. It seems to be a repetition and may be deleted.

न प्रस्कन्दति, न प्रसीदति। न संतिष्ठते। न विमुच्यते, न प्रत्युदावर्त्तते (।) मानसं, शान्तधात्वनभिलक्षिततया। परितमनामुपादाय, स पुनः पुनस्तच्चित्तमुद्वेजयत्यु[त्]त्रासयति। दुःखसत्यात्समुदयसत्यादुद्वेज्यो[ज्]त्रास्य पुनः पुनरध्याशयतो [4] निर्व्वाणे प्रणिदधाति। तथाप्यस्य न प्रस्कन्दति। तत्कस्य हेतोस्तथा ह्यसौ[औ]दारिको[अ]स्मि म[ा]नो[ऽ]भिसमयाय विबन्धकरः[1]। स मनस्कारानुप्रविष्टः सान्तरव्यन्तरो वर्तते।[2] अहमस्मि संस्कृ(सृ)तवान्[2]हमस्मि संसरिष्यामि। अहमस्मि परिनिर्व्वास्यामि, अहमस्मि(न्[3]) परिनिर्व्वाणाय कुशलान्धर्मान् भावयामि। अहमस्मि[5]दुःखं दुःखतः (।[3]) पश्यामि, समुदयं समुदयतो, निरोधं निरोधतः। अहमस्मि मार्गं मार्गतः पश्यामि। अहमस्मि शून्यं शून्यतोऽप्रणिहितमप्रणिहिततः। आनिमित्तमानिमित्ततः पश्यामि ममैते धर्मास्तद्धेतोस्तत्प्रत्ययस्य तच्चित्तं न प्रस्कन्दत्या-(त्य)ध्याशयम्वा[ऽ]ध्याशयतो[अ]पि निर्व्वाणम (त) [6]स्मिमानं निर्ब(विब)न्धका(क)रं विबन्धकार इति लघु लघ्वेव प्रज्ञया प्रतिविध्य, स्वरसानुप्रवृत्तौ मनस्कारमुत्सृज्य, बहिर्धा ज्ञेयालम्बनाद् व्यावर्त्य, मा-

1. Wayman reads विबद्धकरः.
2. Wayman notes it as an intrusion according to the Tibetan and Chinese translations.
3. This may be dropped.

(म)नस्कारप्रविष्टां, मनस्कारानुगतां, सत्यव्यवचारा-(र)णामारभते। स उत्पन्नोत्पन्नं चित्तं निरुध्यमानमनन्तरोत्पन्नेन चित्तेन भज्यमानं पश्यति। प्रवाहानुप्रबन्धयोगेन। स तथा[7]चित्तेन चित्तमालम्बनीकरोत्यवष्टभते। यथास्य यो[ऽ]सौ मनस्कारानुप्रविष्टो[ऽ]स्मिमानो विपक्ष(बन्ध)करः स तस्यावकाशः। पुनर्भवव्युत्पत्तये॥

तथा प्रयुक्तो[ऽ]यं योगी यत्तस्याश्चित्तसन्ततेः अन्यो[ऽ]न्यतां नवनवतामापायिकतां तावत्कालिकतामित्वरप्रत्युपस्थायिताञ्च पौर्वापर्येण पश्यतीदमस्या-[अ]नित्यताया[8]यत्तस्याश्चित्तसन्ततेः उपादानस्कन्धानुप्रविष्टतां पश्यतीदमस्य दुःखतायास्तत्र यच्चित्तं धर्मं नोपलभते। इदमत्र शून्यतायास्तत्र[1] यस्या एव चित्तसन्ततेः प्रतीत्यसमुत्पन्नतामस्वतन्त्राम्पश्यतीदम-
14A—7// स्यानात्मताया[:।] //[1] एवं तावद् दुःखसत्यमवतीर्णो भवति।

1. cp. यः प्रत्ययैर्जायति स ह्यजातो नो तस्य उत्पादु सभावतोऽस्ति।
यः प्रत्ययाधीनु स शून्य उक्तो यः शून्यतां जानति सोऽप्रमत्तः॥
(अनवतप्तहृदापसङ्क्रामण सूत्र) quoted in MKV, (V), pp. 105, 214, 218, 219; BCAP, IX.2; see also, MKV ad M. K., XIII.1 sq.; MSS, I, pp. 353-8, 363-4, 373-8 etc. (Ratnaguṇasaṁcayagāthā); SRS, p. 143; XXXII.214, 223-4; I.33, 42; Appendix I, Vs. 6, and elsewhere; LV., XIII, p. 124 sq., 313-4; BCAP, pp. 188, 198; Catuḥstava, II.20; SRS, pp. 266, 300.

तस्यैवं भवतीयमपि मे चित्तसन्ततिः । तृष्णा-हेतुकी, तृष्णासमुदया, तृष्णाप्रभवा, तृष्णाप्रत्यया [।] अस्या अपि चित्तसन्तेतेर्यो निरोधः सो[ऽ]पि शान्तः । अस्या अपि यो निरोधगामी मार्गः । स नैर्याणिक इत्येवमपरीक्षितमनस्कारपरीक्षायोगेन सूक्ष्मया प्रज्ञया न तान्यार्यसत्या[2]न्यवतीर्णो भवति । तस्यैवमा-सेवनान्वयाद्भावनान्वयात्तस्याः समसमालम्ब्यालम्बक-(ा)ज्ञानमुत्पद्यते । येनास्यौदारिकत्वास्मिमानो निर्व्वाणाभिरतये विबन्धकरः समुदाचरतः । प्रहीयते । निर्व्वाणे चाध्यायतश्चित्तं प्रदधतः प्रस्कन्दति । नप्रत्यु-दावर्तते(यति) (।) मानसं । परितमनामुपादाय । अध्याशय[3]तश्चाभिरतिं गृह्णाति । तथाभूत(।)-स्यास्य मृदुक्षान्तिसहगतं समसमालम्ब्यालम्बकज्ञानं **तदूष्मगत**मित्युच्यते । यन्मध्यक्षान्तिपरिगृहीतं **तन्मूर्द्ध-(र्द्धमि)**त्युच्यते । यदधिमात्रक्षान्तिसंगृहीतं **तन्मध्या-नुलोमा क्षान्ति**रित्युच्यते ।।

स एवम्विबन्धकरमस्मिमानं प्रहाय निर्व्वाणे चाध्याशयरतिं परिगृह्य[4]यो[ऽ]सावुत्तरोत्तरश्चित्त-परिक्षयाभिसंस्कारः । तमभिसंस्कारं समुत्सृज्य अन-भिसंस्कारतायां निर्विकल्पचित्तमुपनिक्षिपति । तस्य तच्चित्तं तस्मिन् समये निरुद्धमिव ख्याति । न च तं(तन्) निरुद्धं भवत्यनालम्बनमिव ख्याति । न च तदालम्बनं भवति । तस्य तच्चित्तं प्रशान्तं विगत-

मिव ख्याति । न च तद्विगतं भवति । [5] न च पुनस्तस्मिं(स्मिन्) समये मधुकरमिद्धावष्टब्धमपि तच्चित्तं निरुद्धमिव ख्याति । न च तन्निरुद्धं भवति । यत्तदेकत्यानां[मन्दानां[1]] मोमूहानामभिसमया[या]-भिमानाय भवतीदं पुनश्चित्तमभिसमयायैव, न चिरस्ये-दानीं सम्यक्त्वं(त्त्व) (।)न्यामावक्रान्तिर्भविष्य-तीति । यदि यमीदृशी चित्तस्यावस्था भवति । तस्य तत्सर्व्वपश्चिमनिर्व्विकल्पं[6]चित्तं यस्यानन्तरं पूर्वविचारितेषु सत्वेष्वध्यात्ममाभोगं करोति । **ते लौकिका अग्रधर्माः ।**

तस्मात्परेणास्य लोकोत्तरमेव चित्तमुत्पद्यते । न लौकिकं [।] सीमा एषा लौकिकानां संस्काराणां, पर्यन्त एषस्तेनोच्यन्ते **लौकिका अग्रधर्मा** इति । तेषां समनन्तरपूर्व्वाविचारितानि सत्या[न्या[2]]भ्र(व्र)जति ।
14B—7// आभोगसमनन्तरं यथापूर्व्वा//[1]नुक्रमः [।]

विचारितेषु सत्येषु अनुपूर्व्वेणैव निर्व्विकल्पप्रत्यक्ष-परोक्षेषु ।। निश्चयज्ञानं प्रत्यक्षज्ञानमुत्पद्यते । तस्यो-त्पादात् त्रैधातुकावचराणां दर्शनप्रहातव्यानां क्लेशानां पक्ष्यं दौष्ठुल्यसन्निश्रयसन्निविष्टं तत्प्रहीयते । तस्य प्रहाणात् सचेत्पूर्व्वमेव कामेभ्यो वीतरागो भवति । सह स(ग?)त्याभिसमयात् । [2] तस्मिन्समये-

1. A separate hand adds this.
2. Letters damaged by pin-hold.

[ऽ]**नागामी**त्युच्यते[1] । तस्य तान्येव लिंगानि वेदितव्यानि । यानि पूर्व्वमुक्तानि बीतरागस्यायन्तु विशेषः । अयमौपपादुको भवति । तत्र परिनिर्व्वायी । अनागन्ता पुनरिमं लोकं [।]

स चेत् पुनर्यद्भूयो वीतरागो भवति । सह गत्या अभिसमयात् **सकृदागामी** भवति ।

सचेत्पुनरवीतरागो भवति । [3] स भूयस्स तस्य दौष्ठुल्यस्य प्रतिप्रश्रब्धेः **स्रोत आपन्नो** भवति । ज्ञेयेन ज्ञानं समागतं भवति । प्रत्यक्षतया । तेनोच्यते[अ]भिसमयतः । तद्यथा क्षत्रियः क्षत्रियेण । सार्धं सम्मुखीभावं तदन्वभिसमयागत इत्युच्यते । एवं ब्राह्मणादयो वेदितव्याः ।

तस्येमानि लिंगानि चत्वारि ज्ञानान्यनेन प्रतिलब्धानि [4] भवन्ति । सत्त्वचारविहारमनसिकारेषु तीरयतो धर्ममात्रज्ञानमनुच्छेदज्ञानमशाश्वतज्ञानं । प्रतीत्यसमुत्पन्नसंस्कारमायोपमज्ञानविषयो[ऽ]पि चास्य चरतः, सुतीव्रमपि क्लेशपर्यवस्थानं । यद्यपि स्मृतिसंप्रमोषादुत्पद्यते । तदप्यस्याभोगमात्राल्लघु लघ्वेव विगच्छति । तथा अगन्ता भ[5]वत्यपायां(यान्) न संचिध्यणिक्षां (विध्य[ति]शिक्षां) व्यतिक्रामति । च तिर्यग्योनि(कृतं[2])गतं प्राणिनं जीविताद् व्यपरो-

1. See *supra*, p. 174 sq.
2. This may be deleted.

पयति । न शिक्षां प्रत्याख्याय हानायावर्त्तते । अभव्यो भवति **पञ्चानामानन्तर्याणां**[1] कर्म्मणां करणतायै । न स्वयंकृतसुखदुःखं पर्येति, न परकृतं, न स्वयंकृतं च परकृतं च, न स्वयंकारापरका[6]राहेतुसमुत्पन्नं ।[2] न इतो बहिर्धा[ऽ]न्यं शास्तारं पर्येषते । न दक्षिणीयं । न परेषां श्रमणब्राह्मणानां सुखावलोकको भवति । सुखपरीक्षकः । नान्यत्र दृष्टधर्मा, प्राप्तधर्मा, पर्यवगाढधर्मा, तीर्ण्णकांक्षस्तीर्ण्णविचिकित्सः, अपरप्रत्ययो[ऽ]नन्यनेयः, शास्तुः शासने
**14A—8//** धर्मेषु वै//[1]शारद्यप्राप्तः । स न कौतूहलमंगलाभ्यां[3] शुद्धिं प्रत्येति । नाप्यष्टमं भवमभिनिर्व्वर्त्तयति । चतुर्भिरवेत्यप्रसादैः समन्वागतो भवति । तस्य यावल्लौकिकेभ्यो[ऽ]ग्रधर्मेभ्य **अधिमोक्षिको मनस्कारः** सत्यान्यभिसमितवतः दर्शनप्रहातव्येषु क्लेशेषु प्रहीणेषु **प्राविवेक्यो मनस्कारः**, प्रहाणाय[2]च ।

1. See AK, IV.106 sq.
2. cp. S. N., II.19, see, p. 20 sq., p. 33 sq. (भूमिजसुत्त); Udana, VI.5; Kv., VII.6.1, XVI.3; MK.; XII.1 sq. MKV, V, p. 103 :

   स्वयं कृतं परकृतं द्वाभ्यां कृतमहेतुकम् ।
   तार्किकैरिष्यते दुःखं त्वया तूक्तं प्रतीत्यजम् ॥ (लोकातीतस्तव, 19),
   स्वयं कृतं परकृतं द्वाभ्यां कृतमहेतुकम् ।
   दुःखमित्येक इच्छन्ति तच्च कार्यं न युज्यते ॥

   See, Dvādaśamukhaśāstra, X.1 sq.
3. May also be कौतुकमङ्गलाभ्याम्, cp. कौतुकमङ्गलवाद YBŚ, I.118, 159.

अत ऊर्ध्वं यथाप्रतिलब्धं मार्गं भावयतो[ऽ]भ्यस्यतः कामावचराणामधिमात्रमध्यानां क्लेशानां प्रहाणात् सकृदागामी[1] भवति। तस्यापि यानि **स्रोत आपन्नस्य** लिंगानि।[2] सर्व्वाणि वेदितव्यानि। अयञ्च विशेषो यद्विषये[ऽ]धरक्लेशस्थानीयेषु अधिमात्रपर्यंत्रस्थानीये[ऽ]पि बद्धं क्लेशपर्यंव[3]स्थानमुत्पादयत्याशु चापनयति। सकृच्चेमं लोकमागम्य दुःखस्यान्तं करोति। **अनागामी।** अनागामिलिंगानि च पूर्व्वोक्तानीत्येव तत्र सर्व्वो भावनामार्गः प्रत्यवेक्ष्य प्रत्यवेक्ष्य मीमान्सा(मांस) मनस्कारेण प्रहीणाप्रहीणतां यथाप्रतिलब्धमार्गभ्यामप्रभावितः।

**तत्र भावनायाः कतमः[4]स्वभावः [।] कतमत्कर्म। कतमः प्रकारभेदः।** यः समाहितभूमिकेन मनस्कारेण लौकिकलोकोत्तरेणैषां कुशलानां संस्कृतानां धर्माणामभ्यासः। परिचयः, सातत्यसत्कृत्य क्रिया। चित्तसन्ततेस्तन्मयता चोपनय[न]मयमुच्यते भावना स्वभावः।

**तत्र भावनाया अष्टविधं कर्म।** एक[5]त्यान्धर्मान्भावयन् प्रतिलभते। एकत्यान्धर्मान्भावनया निषेवते। एकत्यान्धर्मान्विशोधयत्येकत्यान्धर्मान्प्रतिविनोदयत्येकत्यान्धर्मान् परिज[ा]नाति। [3]एकत्या-

1. See, *supra*, Yogasthāna, II, p. 173.
2. See, ibid, loc. cit.
3. This is a repetition and may be deleted.

न्धर्मान्प्रजहा[1]त्येकत्यान् धर्मान् प्रजहात्येकत्यान् धर्मान् साक्षात्करोत्येकत्यान्धर्मान्दूरीकरोति । तत्र ये तावदप्रतिलब्धा धर्माः कुशला वैशेषिकास्तान् प्रतिलभते । एकत्या(त्ये) धर्मा[6]भावनया लब्धाः, संमुखीभूताश्च वर्त्त[न्]ते । तान्निषेवते । तत्र ये प्रतिलब्धा, न च संमुखीभूतास्ते तज्जातीयैर्धर्मैर्निषेव्यमाणौ(णै)रायत्यां संमुखीक्रियमाणा[:], परिशुद्धतरा[:], पर्यवदाततराश्चोत्पद्यन्ते तत्र ये स्मृतिसंप्र-
14B—8// मोषा(त्) क्लिष्टा(न्)धर्मा//[1]न्समुदाचरन्ति । तान्कुशलधर्माभ्यासबलेनाधिवासयति । प्रजहाति । विनोदयति । व्यन्तीकरोत्यनुत्पन्नानेव वा प्रहातव्यान्धर्मान्रोगतः परिजानाति । विदूषयति । शल्यतो, गण्डतः, अघतः, अनित्यतो, दुःखतः, शून्यतो, [अ]नात्मतश्च परिजानाति । विदूषयति । तस्य परिज्ञानाभ्यासादानन्तर्यमार्ग उत्पद्यते । क्लेशानां प्रहाणाय, [2] येन प्रजहाति । प्रहीणे च पुनर्विमुक्ति साक्षात्करोति । यथा च यथोपरिमां भूमिमाक्रमते । तथा तथा अधोभूमिकाः प्रहाण(ा)धर्मा दूरी भवन्ति । यावन्निष्ठागमनादिदं भावनीयमष्टविधं कर्म वेदितव्यम् ॥

**तत्र भावनायामे(या ए)कादशविधः[2] प्रकारभेदो**

1. This is a repetition and may be deleted.
2. Wayman reads भावनाया एकादशविधः.

**वेदितव्यः** तद्यथा **शमथभावना, विपश्यनाभावना,** [**पूर्व्ववदेव तत्र**][1] **लौकि**[3]**कमार्गभावना, लोकोत्तरमार्गभावना, मृदुमध्याधिमात्रभावना, प्रयोगमार्गभावना, आनन्तर्यविमुक्तिविशेषमार्गभावना** [।]

तत्र **शमथभावना** नवाकारायाश्चित्तस्थित्या[ं]-(श्चित्तस्थित्यां) पूर्व्ववत् ।

**विपश्यनाभावना** पूर्व्ववदेव । तत्र **लौकिकमार्गभावना**[य[2]]दधोभूमिकानामौदारिकदर्शनतया उपरिभूमीनां च शान्तदर्शनतया, [4] यावदाकिञ्चन्यायतनवैराग्यगमनं [।]

तत्र **लोकोत्तरमार्गभावना** दुःखं वा दुःखतो मनसिकुर्व्वतः, यावन्मार्गम्वा मार्गतो मनसिकुर्व्वतः । यदनास्रवेण मार्गेण सम्यग्दृष्ट्यादिकेन यावन्नैवसंज्ञा नासंज्ञायतनवैराग्यगमनं [।]

तत्र **मृदुमार्गभावना** ययौदारिकानधिमात्रान् क्लेशान्प्रजहाति । तत्र म[5]ध्यमार्गभावना यया मध्यान् क्लेशान् प्रजहाति । तत्राधि[मात्र[2]] मार्गभावना यया मृदुं क्लेशप्रकारं प्रजहाति । सर्व्वम्पश्चात्प्रहेयं ।

तत्र **प्रयोगमार्गभावना** यया प्रयोगमारभते क्लेश प्रहाणाय । **तत्रानन्तर्यमार्गभावना** यया प्रजहाति ।

---

1. Wayman omits पूर्व्वदेव । तत्र, which may be dropped.
2. MS. omits this.

तत्र **विमुक्तिमार्गभावना** यया समनन्तरप्रहीणे क्लेश-विमुक्तिं साक्षा[6]त्करोति । तत्र **विशेषमार्गभावना** ययास्त(यया त)त ऊर्ध्वं यावदन्यभूमिकस्य क्लेश-प्रयोगमारब्धव्यं नारभते । निष्ठागतो वा नारभते । इत्ययमेकादशविधो भावनायाः प्रकारभेदो वेदितव्यः ।

तस्यैवं भावनाप्रयुक्तस्य कालेन च कालं क्लेशानां
15A—8// //[1][1] प्रहीणाप्रहीणतां मीमान्स(मांस)तः (मानस्य?) कालेन कालं संवेजनीयेषु धर्मेषु चित्तं सम्वेजयतः, कालेनकालमभिप्रमोदनीयेष्वभिप्रमोदयतः सोऽस्य भवति[रति[2]] संग्राह[को[3]] मनस्कारः । तस्यास्य रतिसंग्राहकस्य मनस्कारस्यासेवनान्वयाद् भावनान्वयाद्बहुलीकारान्वयान्निरवशेषभावनाप्रहातव्य[3][ ः [4] ] क्लेशप्रहाणा[2]य सर्व्वपश्चिमः शैक्षो वज्रोपमः समाधिरुत्पद्यते । तस्योत्पादात्सर्व्वे भावनाप्रहातव्याः क्लेशाः प्रहीयन्ते ।

**केन कारणेन वज्रोपम इत्युच्यते**[5] । तद्यथा

---

1. MS. photo blurred and indistinct.
2. A separate hand adds this.
3. Letter indistinct.
4. This may be deleted.
5. cp. MSA, XIV.42-6 :

ततोऽसौ भावनामार्गे परिशिष्टासु भूमिषु ।
ज्ञानस्य द्विवविधस्येह भावनायै प्रयुज्यते ।। 42 ।।
निर्विकल्पं च तज्ज्ञानं बुद्धधर्माविशोधकं ।
अन्यद्यथाव्यवस्थानं सत्त्वानां परिपाचकं ।। 43 ।।

*(contd. on p. 507)*

वज्र[ं] सर्व्वेषां तदन्येषां मणिमुक्तावैडूर्यशंखशिला-प्रवाडा(ला)दीनां मणीनां[1] सर्व्वसारं सर्व्वदृढं[2] तदन्यान्विलिखति। न त्वन्यैर्मणिभिर्विलिख्यते। एवमेवा-[3]यं समाधिः सर्व्वशैक्षसमाधीनामग्र्यः, श्रेष्ठः सर्व्वसारः[3] सर्व्वक्लेशानभिभवति। न च पुनरुत्पत्ति-क्लेशैरभिभूयते। तस्माद्वज्रोपम इत्युच्यते।

तस्य वज्रोपमस्य समाधेः समनन्तरं सर्व्वक्लेश-पक्ष्यं दौष्ठुल्यबीजसमुद्घातादत्यन्ततायै चित्तमधि-

---

*(contd. from p. 506)*

भावनायाश्च निर्याणं द्वयसंख्येयसमाप्तितः।
पश्चिमां भावनामेत्य बोधिसत्त्वोऽभिषिक्तकः ॥ 44 ॥
वज्रोपमं समाधानं विकल्पाभेद्यमेत्य च।
निष्ठाश्रयपरावृत्तिं सर्वावरणनिर्मलां ॥ 45 ॥
सर्वाकारज्ञतां चैव लभतेऽनुत्तरं पदं।
यत्रस्थः सर्वसत्त्वानां हिताय प्रतिपद्यते ॥ 46 ॥

and bhāṣya, ibid, p. 46 :
एभिर्भावनामार्ग परिदीपितः। द्विविधं ज्ञानं। निर्विकल्पं च येनात्मनो बुद्धधर्मान् विशोधयति। यथाव्यवस्थानं च लोकोत्तरपृष्ठलब्धं लौकिकं येन सत्त्वान् परिपाचयति। असंख्येयद्वयस्य समाप्तौ पश्चिमां भावनामागम्यावसानतामभिषिक्तो वज्रोपमं समाधिं लभते। विकल्पानुशयाभेद्यार्थेन वज्रोपमः। ततो निष्ठागतामाश्रयपरावृत्तिं लभते सर्वक्लेशज्ञेयावरणनिर्मलां। सर्वाकारज्ञतां चानुत्तरपदं यत्रस्थो यावत्संसारमभिसंबोधिनिर्वाणसंदर्शनादिभिः सत्त्वानां हिताय प्रतिपद्यते ॥;
see also, Adv., p. 350, Vs. 441, 447; Ada., p. 46.

1. Wayman reads here अग्र्यः श्रेष्ठः on the basis of the Tib. translation.
2. Wayman reads सारः, दृढः.
3. Wayman adds here सर्व्वदृढः on the basis of the Tibetan translation.

मुच्यते । गोत्रपरिशुद्धिं चानुप्राप्नोति [।] सर्व्वं दौष्ठुल्य क्ले[5]शोन्धक्षयाय ज्ञानमुत्पद्यते । हेतुक्षयाच्चायत्यां दुःखस्य सर्व्वेण सर्व्वमप्रादुर्भावायानुत्पाद ज्ञानमुत्पद्यते । स तस्मिन् समये[ऽ]र्हन् भवति । क्षीणास्रवः, कृतकृत्यः, कृतकरणीयो[ऽ]नुप्राप्तस्वकार्यः परिक्षीणभवसंयोजनः सम्यगाज्ञासुविमुक्तचित्तः । दशभिरशैक्षैर्धर्मैः समन्वागतः । अशैक्ष[5]या **सम्यग्दृष्ट्या सम्यक्संकल्पेन** यावदशैक्षया **सम्यग्विमुक्त्या सम्यग्ज्ञानेन** [।] स्वचित्तवशवर्ती च भवति । विहारे च मनसिकारे च । समयेन येन कांक्षते । विहारेणार्येण वा, दिव्येन वा, ब्राह्मेण वा, तेन तेन विहरति । यं यमेवाकांक्षते धर्मं मनसि कर्त्तुं कुशलमर्थोपसंहितं । लौकिकं वा [6] लोकोत्तरम्वा, तं तमेव मनसि करोति ।

तत्रार्यो विहारः शून्य[त]ाविहारो (र[आ])निमित्तविहारो[ऽप्रणिहितविहारो[1]] निरोधसमापत्तिविहारश्च । दिव्यो विहारो ध्यानारूप्यविहारः । ब्राह्मो विहारो मैत्रीकरुणामुदितोपेक्षाविहारः । अत्यन्तनिर्मल[ो]भवत्यत्यन्तविमलो[ ऽ ]त्यन्तब्रह्मचर्यपर्यवसानः । [6] निर्गत इवासि उत्क्षिप्त परि[1]........ ....................इत्यपि पंचांगप्रहीणषडंगसमन्वागतः (ए)कारक्त..........................................

1. MS. photo blurred and indistinct hereafter.

15B—8// ···········//[1] शे(श्रे)—त्तु(त्र)(क्षेत्र?) धर्माश्रय:। प्रणुन्न: प्रत्ये·····························प्रवियु(मु)क्त चित्त:, सुविमुक्तप्रज्ञ: केवलो उक्षि······च्च···लि पुरुष इत्युच्यते। प श्चितु····समन्वागतो भवति। पा लं दृष्ट्वा चैवं सुमना:

[2] भवति सुष्ठुमना: उपेक्षको भवति स्मृत: सम्प्रजा[ना]न:। एवं श्रोत्रेण शब्दान्, घ्राणेन गन्धान्, जिह्वया रसान्, कायेन स्प्रष्टव्यान्, मनसा धर्मान् विज्ञाय। मे व····तदूर्ध्वं। उपेक्षको विहरति स्मृत: संप्रजा[ना]न:। स तस्मिन् समये अपरिशेषरागक्षयं प्रतिसंवेदयति। स क्षयाद्रागद्वेष-मोहानां यत्त्यागं (यस्त्याग:), तन्न करोति·········

[3] समचित्तश्च भवति वासी चन्दनकल्प: सेन्द्रो पित्र्याणां देवानां मान्यश्च पूज्यश्च मार्गकाशेषधातु-प्रतिष्ठिते च भवति तीर्ण्ण: पारगतो[ऽ]न्तिम(ा) देहधारीत्युच्यते। पूर्वकर्मक्लेशाविद्धानां पञ्च स्कन्धानां स्वरसं······नानु पादानात् वा, निरुपधिशेषनिर्वाण-धातौ (प्रविष्ट:/प्रविशति)

[4] ····परिनिर्वृते[ा] भवति। यथा न संसृतो(तौ) नान्यत्र यद् दु:खं तन्निरुद्धं तव्युपशान्तं तच्छीतीभूतं भव इं गतं। शान्तं शान्तमिदं पदं। यदुत सर्व्वोपधिप्रतिनि:सर्वसंज्ञाक्षयो विरागो निरोधो निर्वाणं तस्येमानि लिंगान्येवं भागीयानि वेदितव्यानि।

पञ्च स्थानान्यु ······ भिक्षुः क्षीणास्रवः प्रति । वि विने । क्त मन्यमसं तथा

[5] प्रापयितुं मन्ददा त्र म ब्रह्मचर्यं मैथुनं धर्मं प्रतिषेवितुं । संप्रजान[ानो] मृषापभाषितुमभव्यः मन्दविकारेण कामान्परिभोक्तुं । तथा भव्यः स्वयं कृतं सुखं दुःखं प्रत्येतुं । पूर्व्ववद्यावत्स्वयंकायकारो-[ऽ]हेतुसमुत्पन्नमुग्रदुःखं प्रणीतममव्याय कृतस्तुभिः-(तिः) । सत्रासं मांसं भक्ष्य(व्य)·······

[6] ऽअन्यतामान्यतम्वा भयभैरवं ·· संत्रासमापत्तु रयमसौ वज्रोपमः समाधिरयं प्रयोगनिष्ठो मनस्कारः यः पुनरग्रफलार्हत्त्वसंगृहीतमनस्कारोऽयं प्रयोगनिष्ठा-फलो मनस्कारः । एभिः सप्तभिर्मनस्कारैर्लोकोत्तरेण मार्गेणात्यन्तनिष्ठात् [1]आ/प्रा पा तः—त[1]

[7] इत्ययमुच्यते सा/मो ध क[2] सर्व्वेषां सम्य-क्संबुद्धानां सश्रावकसंयुक्तानां निर्देशस्थानीयानां साक्षात्का[र] स्थानीयानां तद्यथा सर्वनामकायपदका-यव्यंजनकायकाव्यमनु//[1]शास्त्राणि ।। मातृका ।।

।। उद्दानम् ।।

*लक्षणप्रतिसंवेदी स्यात्तथैवाधिमोक्तिकः ।*

*प्राविवेक्यरतिग्राही तद्व्यामीमान्स(मांस)कः ।।*

*पुनः प्रयोगनिष्ठा कृत्युत्तरतत्फलः पश्चिमो भवेत् ।*

---

1. MS. leaf damaged, syllables lost and illegible.
2. Syllables illegible.

मनस्कारश्च, ध्यानानां आरूप्याना(णां) विभागता ॥
समापत्ती(त्तिर)अभिज्ञाश्च उपपत्तिश्च लिङ्गता ।
सत्यानां व्यवचारश्च प्रतिवेधस्तथैव च ॥
भावनाया विभङ्गश्च निष्ठा भवति पश्चिमा ॥

॥ श्रावकभूमौ चतुर्थं योगस्थानम् ॥

॥ समाप्ता श्रावकभूमिः ॥

